॥ श्री ॥

# ॥ अथतैत्तिरीयकर्ममालाप्रारंभः ॥

प्रकाशकः—वेदशास्त्रसंपन्न लक्ष्मणशास्त्री देव व विष्णु वासुदेव दामले यांचे साह्यानी बापूजी बाळकृष्ण शास्त्री

यानीं तयार
करून

प्रिंटरः—बाबू शिवनारायण सिंह द्वारा मारवाडी मशीन प्रेस, नागपूर. मध्यें छापून प्रसिद्ध केलें

# ॥ अथमंगलाचरणं ॥

॥ श्रीगणेशायनमः ॥ श्रीसरस्वत्यैनमः ॥ स्रष्टुंवारिभवोद्भवेनविधिनाजेतुंबलिंविष्णुनासंहर्तुंत्रिपुरासुरंविजयिनंगंगाधरेणस्वयं ॥ पार्वत्यातुपुराविवाहसमयेदेवैर्निधेर्मंथनेध्यातोयः किलतंनिरस्तकुहकंलंबोदरंप्रार्थयेत् ॥ १ ॥ कैलासनंदिनीदेवीचंडमुंडैकखंडिनी ॥ शंभोर्नितं विनीपातुवः सदापापहारिणी ॥ २ ॥ आपस्तंबमुनीन्सर्वान्प्रणम्यपितरंगुरुं ॥ ग्रंथाननेकान्संवीक्ष्यतनुतेचान्हिकाक्रियां ॥ ३ ॥

## ॥ अथप्रातःस्मरणं ॥

श्रीगणेशायनमः ॥ कराग्रेवसतेलक्ष्मीकरमध्येसरस्वती ॥ करमूलेस्थितोब्रह्माप्रभातेकरदर्शनं ॥ १ ॥ तत्रसूर्योदयात्प्राग्घटिकेचतुष्टयेब्राम्हेमुहूर्तेचोत्थायमातापितृगुरुनिष्टदेवतामनसाविचिंत्यश्लोकान्पठेत् ॥ १ ॥ प्रातःस्मरामिभवभीतिमहार्तिशांत्यैनारायणंगरुडवाहनमब्जनाभं ॥ ग्राहाभिभूतवरवारणमुक्तिहेतुंचक्रायुधंतरुणवारिजपद्मनेत्रं ॥ १ ॥ प्रातर्नमामिमनसावचसाचमूर्ध्नापादारविंदयुगलंपरमस्यपुंसः ॥ नारायणस्यनरकार्णवतारणस्यपारायणप्रवणविप्रपरायणस्य ॥ २ ॥ प्रातर्भजामिभजतामभयंकरंतंप्राक्सर्वजन्मकृतपापभवापहत्यै ॥ योग्राहवक्त्रपतितांघ्रिगजेंद्रघोरशोकप्रणाशमकरोत्धृतशंखचक्रः ॥ ३ ॥ श्लोकत्रयमिदंपुण्यंप्रातःकालेपठेन्नरः ॥ श्लोकत्रयगुरुस्तस्मैदद्यादात्मपदंहरिः ॥ ४ ॥

ब्रम्हामुरारिस्त्रिपुरांतकारिर्भानुः शशीभूमिसुतोबुधश्च ॥ गुरुश्चशुक्रःशनिराहुकेतवः कुर्वंतुसर्वेममसुप्रभातं ॥ ५ ॥ भृगुर्वसिष्ठःक्रतुरंगिराश्चमनुः पुलस्त्यःपुलहश्चगौतमः ॥ रैभ्योमरीचिःश्च्यवनश्चदक्षःकु० ॥ ६ ॥ सनत्कुमारश्चसनंदनश्चसनातनोप्यासुरिपिंगलौश्च ॥ सप्तस्वराःसप्तरसातलानि कुर्व० ॥ ७ ॥ सप्तार्णवाःसप्तकुलाचलाश्चसप्तर्षयोद्वीपवनानिसप्त ॥ भूरादिकृत्वाभुवनानिसप्तकु० ॥ ८ ॥ पृथ्वीसगंधासरसास्तथापस्प र्शीचवायुर्ज्वलितंचतेजः ॥ नभःसशद्बंमहतासहैवकु० ॥ ९ ॥ इत्थंप्रभातेपरमंपवित्रंपठेत्स्मरेद्वाश्रृणुयाच्चानित्यम् ॥ दुःस्वप्ननाशस्त्विहसुप्रभातभ वेच्चनित्यंभगवत्प्रसादात् ॥ १० ॥ पुण्यश्लोकोनलोराजापुण्यश्लोकोयुधिष्ठिरः ॥ पुण्यश्लोकाचवैदेहीपुण्यश्लोकोजनार्दनः ॥ ११ ॥ कर्कोटकस्य नागस्यदमयंत्यानलस्यच ॥ ऋतुपर्णस्यराजर्षेःकीर्तनंकालिनाशनं ॥ १२ ॥ अश्वत्थामाबलिर्व्यासोहनूमांश्चबिभीषणः ॥ कृपःपरशुराम श्चसप्तैतेचिरजीविनः ॥ १३ ॥ सप्तैतान्संस्मरेन्नित्यंमार्कंडेयमथाष्टमम् ॥ जीवेद्वर्षशतंसाग्रमपमृत्युविवर्जितः ॥ १४ ॥ अहल्याद्रौपदीसीतातारा मंदोदरीतथा ॥ पंचकंनास्मरेन्नित्यंमहापातकनाशनं ॥ १५ ॥ बलिर्बिभिषणोभीष्मःप्रल्हादोनारदोध्रुवः ॥ षडेतेवैष्णवाज्ञेयाःस्मरणात्पापनाश नः ॥ १६ ॥ धर्मोविवर्धतियुधिष्ठिरकीर्तनेनपापंप्रणश्यतिवृकोदरकीर्तनेन ॥ शत्रुर्विनश्यतिधनंजयकीर्तनेनमाद्रीसुतौकथयतांनभवंतिरोगाः ॥ १७ ॥ विश्वेशंमाधवंढुंढिंदंडपाणिंचभैरवं ॥ वंदेकाशींगुहांगंगांभवानींमणिकर्णिकां ॥ २० ॥ अग्निचित्कपिलाधात्रीराजाभिक्षुर्महोदधिः ॥ दृष्टपात्राःपुनंत्येतेतस्मात्पश्यंतुनित्यशः ॥ २१ ॥ समुद्रवसनेदेविपर्वतस्तनमंडिते ॥ विष्णुपत्नीनमस्तुभ्यंपादस्पर्शंक्षमस्वमे ॥ इतिपठन् ॥ पृथ्वींनमस्कृत्य ॥

## ॥ अथमूत्रपूरीषोत्सर्गविधिः ॥

॥ श्रीगणेशायनमः ॥ कुर्यान्मूत्रपुरीषेतुशुचौदेशेसमाहितः ॥ कर्णेयज्ञोपवीतंचशिरःप्रावृत्यवाससा ॥ मौनंधृत्वा ॥ दिवोदङ्मुखोरात्रौदाक्षिणाभिमुखोमूत्रपुरीषेउत्सृज्य ॥ एकवारंलिंगंत्रिवारंअपानंवामपाणींत्रिवारंउभौपाणीसप्तवारं ॥ मृज्जलैःसंशोध्यशुद्धजलैःप्रक्षाल्यप्रत्येकंत्रिवारंदाक्षिणवामपादौप्रक्षाल्य ॥ द्वादशगंडूषान्वामभागेकृत्वाजलपात्रंत्रिःपर्युक्ष्यआचामेत् ॥ मूत्रमात्रोत्सर्गेतुलिंगंप्रक्षाल्यगंडूषचतुष्टयंविधायाचामेत् ॥

## ॥ अथदंतधावनं ॥

॥ श्रीः ॥ दंतधावनंविशेषेणप्राङ्मुखेसौख्यमाप्नुयात् ॥ अपामार्गश्चबिल्वश्चह्यर्कश्चोदुंबरस्तथा ॥ बदर्याम्रौचनिंबश्चप्रशस्तादंतधावने ॥ मुखदुर्गंधिनाशायदंतानांचविशुद्धये ॥ ष्ठीवनायचगात्राणांकुर्वेहंदंतधावनं ॥ इतिमंत्रमुक्त्वादंतान्संशोध्यद्वादशगंडूषांश्चकृत्वा ॥ शिखांबध्नीयात् ॥ मृत्तिकाभस्मादिनावादंतान्संशोध्यइतिकेचित ॥

## ॥ स्नानविधिः ॥

॥ श्रीः ॥ आचम्यप्राणायामंकृत्वा ॥ श्रीमद्भगवतोमहा० शुभपुण्यातिथौममकायिकवाचिकमानसिकसकलपापक्षयार्थंश्रीपरमेश्वरप्रीत्यर्थंगंगाभागीरथीतीर्थेप्रातःस्नानमहंकरिष्ये ॥ तीर्थंप्रार्थयेत ॥ ( जलंप्रविश्यनाभिप्रमाणप्रदेशेतदलाभेयथाशक्तिजलेनिमज्य ) ॥ ॐहिरण्यशृंगंवरुणंप्रपंद्येतीर्थंमेदेहि

याचितः ॥ यन्मयाभुक्तमसाधूनांपापेभ्यश्चप्रतिग्रहः ॥ यन्मेमनसावाचाकर्मणावादुष्कृतंकृतं ॥ तन्नइंद्रोवरुणोबृहस्पतिःसविताचपुनंतुपुनःपुनः ॥
नमोग्नयेप्सुमतेनमइंद्रायनमोवरुणायनमोवारुण्यैनमोभ्द्यः ॥ यदपांक्रूरंयदमेध्यंयदशांतंतदपगछतात् ॥ अत्याशनादतीपानाद्यच्चउग्रात्प्रतिग्रहात् ॥
तन्नोवरुणोराजापाणिनाह्यवमर्शतु ॥ सोहमपापोविरजोनिर्मुक्तोमुक्तकिल्बिषः ॥ नाकस्यपृष्ठमारुह्यगछेद्ब्रह्मसलोकतां ॥ यश्चाप्सुवरुणःसपुनात्वघमर्षणः ॥ इतिपठेत् ॥ ततःप्रवाहजलेप्रवाहाभिमुखोअप्रवाहोदकेआदित्याभिमुखोस्नात्वाचम्य ॥ ॐइमंमेगंगेयमुनेसरस्वतिशुतुद्रिःस्तोमंसचता
परुष्णिया ॥ असिक्नियामरुद्वृधेवितस्तयाजींकीयेशृणुह्यासुषोमया ॥ इतितीर्थमंगुष्ठेनत्रिरावर्त्य ॥ ऋतंचसत्यमितितृचंत्रिवारमेकवारंजपेत् ॥ अघमर्षणंकुर्यात् । ॐऋतंचसत्यंचाभीद्धात्तपसोध्यजायत ॥ ततोरात्रिरजायततततःसमुद्रोअर्णवः ॥ समुद्रादर्णवादाधिसंवत्सरोअजायत ॥ अहोरात्राणिविदध
द्विश्वस्यमिषतोवशी ॥ सुर्याचंद्रमसौधातायथापूर्वमकल्पयत् ॥ दिवंचपृथिवींचांतरिक्षमथोसुवः ॥ ततःउत्थायाचम्यकुशैःस्वशिरसिमार्जयेत् ॥ वक्ष्यमाणमंत्रैः ॥ ॐआपोहिष्ठामयोभुवस्तानऊर्जेदधातन ॥ महेरणायचक्षसे ॥ योवःशिवतमोरसस्तस्यभाजयतेहनः ॥ उशतीरिवमातरः ॥ तस्माअरंगमामवोयस्यक्षयायजिन्वथ ॥ आपोजनयथाचनः ॥ ॐहिरण्यवर्णाःशुचयःपावकायासुजातःकश्यपोयास्विंद्रः ॥ आग्निंयागर्भंदधिरेविरूपास्तानआपःशंस्योनाभवंतु ॥ यासांराजावरुणोयातिमध्येसत्यानृतेअवपश्यंजनानां ॥ मधुश्चुतःशुचयोयाःपावकास्तानआपःशंस्योनाभवंतु ॥ यासांदेवादिविकृण्वंतिभक्षंयाअंतरिक्षेबहुधाभवंति ॥ याःपृथिवींपयसोंदंतिशुक्रास्तानआपःशंस्योनाभवंतु ॥ शिवेनमाचक्षुषापश्यतापःशिवयातनुवोपस्पृशतत्वचंमे ॥ सर्वांअग्नींरप्सुषदोहुवेवोमयिवर्चोबलमोजोनिधत्त ॥ ॐपवमानःसुवर्जनःइत्यानुवाकं ॥ इतिमंत्रैःमार्जनंकृत्वा ॥
जलतर्पणंकुर्यात् ॥ ब्रह्मादयोयेदेवाःतान्देवांस्तर्पयामि ॥ भूर्देवांस्तर्पयामि । भुवोदेवांस्त० । सुवर्देवांस्त० । भूर्भुवःसुवर्देवांस्त० ॥ प्राङ्मुखोदेवतीर्थेन ॥ निवीती ॥ कृष्णद्वैपायनादयोयेऋषयःतान्ऋषींस्तर्पयामि ॥ भूर्ऋषीं० ।सुवर्ऋषींस्त० सुवर्ऋषींस्त० । भर्भुवःसुवर्ऋषींस्त० ॥

प्राचीनावीति ॥ सोमःपितृमांन्यमोंगिरसोग्निष्वात्ताःकव्यवाहनादयोयेपितरः। तान्पितॄँस्त०। भूःपितॄँस्त०। भुवःपितॄँस्त०। सुवःपितॄँस्त०॥ भूर्भुवःसुवःपितॄँस्त० । दक्षिणाभिमुखःपितृतीर्थेन ॥ आब्रह्मस्तंबपर्यंतंदेवर्षीपितृमानवाः ॥ तृप्यंतुपितरःसर्वेमातृमातामहादयः ॥ अतीतकुलकोटीनांसप्तद्वीपनिवासिनां ॥ आब्रह्मभुवनाल्लोकानिदमस्तुतिलोदकं॥ येकेचास्मत्कुलेजाताअपुत्रागोत्रिणोमृताः॥ तेगृण्हंतुमयादत्तंसूत्रानिष्पीडनोदकं ॥ अग्निदग्धाश्चयेजीवायेप्यदग्धाःकुलेमम ॥ भूमौदत्तेनतोयेनतृप्तायांतिपरांगतिं ॥ जलांजलिंतटेनिक्षिप्य ॥ यन्मयादूषितंतोयंशारीरमलसंभवं ॥ तद्दोषपरिहारार्थंयक्ष्माणंतर्पयाम्यहं ॥ उत्तरीयवस्त्रंजलेनिष्पीड्य ॥ आचम्य ॥ शुचीवोहव्यामरुतःशुचीनाॅंशुचिॅंहिनोम्यध्वरॅंशुचिभ्यः॥ ऋतेनसत्यमृतसापआयंछुचिजन्मानःशुचयःपावकाः ॥ अग्निःशुचिव्रततमःशुचिर्विप्रःशुचिःकविः ॥ शुचीरोचतआहुतः ॥ उदग्नेशुचयस्तवशुक्राभ्राजंतईरते ॥ तवज्योतीॅंष्यर्चयः ॥ इतिमंत्रेणवस्त्रमाद्भिःप्रोक्ष्य ॥ ॐदेवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यामाददे ॥ वस्त्रमादाय ॥ ॐअवधूतॅंरक्षोवधूताअरातयः ॥ इत्यवधूय ॥ उदुत्यंजातवेदसंदेवंवहंतिकेतवः ॥ दृशेविश्वायसूर्यं ॥ आदित्यायदर्शयित्वा ॥ आवहंतीवितन्वाना ॥ कुर्वाणाचीरमात्मनः ॥ वासाॅंसिममगावश्च ॥ अन्नपानेचसर्वदा ॥ ततोमेश्रियमावह ॥ पंचाभिर्वाक्यैःवासःपरिधाय ॥ उत्तरीयवस्त्रंगृहीत्वाद्विराचामेत् ॥ इतिस्नानविधिः ॥

## ॥ अथउष्णोदकस्नानविधिः ॥

॥ श्रीः ॥ गृहेउष्णोदकेनप्रातःस्नानंअवश्यंकुर्यात्नतुशीतोदकेन ॥ हिरण्यशृंगमितिप्रार्थयेत् ॥ स्नानंकुर्यात् ॥ सर्वेषांमंत्राणांपाठमात्रं ॥

नतुतर्पणादिविधिः ॥ एवंज्वरादिनाआतुरेणभस्मस्नानादिकं ॥ आर्द्रवस्त्रेणदेहमार्जनंमंत्रान्पठेत् ॥ गंगादितीर्थानिस्मरन् ॥ आपोहिष्ठाहि रण्यवर्णाइत्यादिमंत्रैः ॥ इतिउष्णोदक० ॥

## ॥ * अथभस्मधारणाविधिः ॥

॥ श्रीः ॥ आचम्यप्राणायामंकृत्वा ॥ अद्येत्यादिपूर्वोच्चरित० ॥ श्रीपरमेश्वरप्रीत्यर्थंकर्माधिकारसिध्यर्थंभस्मधारणंकरिष्ये० ॥ ॐमा नस्तोकेतनयेमानआयुषिमानोगोषुमानोअश्वेषुरीरिषः ॥ वीरान्मानोरुद्रभामितोवधीर्हविष्मंतोनमसाविधेमते ॥ इतिमंत्रेणभस्मादाय ॥ अग्निरितिभस्म ॥ जलमितिभस्म ॥ स्थलमितिभस्म ॥ त्रिभिरभिमंत्र्य ॥ ॐतत्पुरुषायविद्महेमहादेवायधीमही ॥ तन्नोरुद्रःप्रचोदयात् ॥ इति मंत्रेणजलमिश्रितंकृत्वा ॥ अनामिकामध्यमातर्जनीभिःललाटहृदयनाभिकंठदक्षिणवामबाहूमूलकर्पूरमणिबंधपृष्टशिरःस्थानेषुसद्योजातादिरौद्रमंत्रा न्पठन्भस्मधारयेत् ॥ ॐसद्योजातंप्रपद्यामिसद्योजातायवैनमोनमः ॥ भवेभवेनातिभवेभवस्वमांभवोद्भवायनमः ॥ ॐवामदेवायनमोज्येष्ठायनमः श्रेष्ठायनमोरुद्रायनमःकालायनमःकलविकरणायनमोबलविकरणायनमोबलायनमोबलप्रमथनायनमःसर्वभूतदमनायनमोमनोन्मनायनमः ॥ ॐअ घोरेभ्योथघोरेभ्योघोरघोरतरेभ्यः ॥ सर्वेभ्यःसर्वशर्वेभ्योनमस्तेअस्तुरुद्ररूपेभ्यः ॥ ॐतत्पुरुषायविद्महेमहादेवायधीमहि ॥ तन्नोरुद्रःप्रचोदयात् ॥ ॐईशानःसर्वविद्यानामीश्वरःसर्वभूतानांब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्माशिवोमेअस्तुसदाशिवोम् ॥ इतिभस्मधारणं ॥

---

* टीपः——ललाटेतिलकंकृत्वासंध्याकर्मसमाचरेत् ॥ अकृत्वाभालतिलकंतस्यकर्मनिरर्थकं ॥ देवानभ्यर्चगंधेनजलमध्येजलेनतु ॥ मृधोर्ध्वपुंड्रंभस्मनातिर्य क्चंदनेनोभयमित्याह ॥

## ॥ अथगोपीचंदनधारणविधिः ॥

॥ श्रीः ॥ गोपीचंदनपापघ्नविष्णुदेहसमुद्भव ॥ चक्रांकितनमस्तुभ्यंधारणान्मुक्तिदोभव ॥ इमंमेगंगेइतिजलमासिच्य ॥ ॐइमंमेगं०मया ॥ ॐविष्णोर्नुकंवीर्याणिप्रवोचंयःपार्थिवानिविममेरजांसि ॥ योअस्कभायदुत्तरंसधस्थंविचक्रमाणस्त्रेधोरुगायः ॥ इतिमंत्रेणमर्दयित्वा ॥ केशवायनमः। ललाटे। नारायणा०उदरे। माधवाय०हृदये। गोविंदाय०कंठे। विष्णवे०दक्षिणकुक्षौ। मधुसूदनाय०दक्षिणबाहू। त्रिविक्रमाय० कर्णमूलयोः। वामनाय०वामकुक्षौ। श्रीधराय०वामबाहू। हृषीकेशाय०कंधरे। पद्मनाभाय०पृष्ठे। दामोदराय०ककुदि। वासुदेवाय० शिरसि ॥ हस्तंप्रक्षालयेत् ॥

## ॥ * अथप्रातःसंध्या ॥

॥ श्रीः ॥ आचम्य ॐकेशवायनमः ॥ ॐनारायणायनमः ॥ ॐमाधवायन०। ॐगोविंदायनमः। ॐविष्णवेनमः। ॐमधुसूदनाय० ॥ ॐत्रिविक्रमाय०। ॐवामनाय०। ॐश्रीधराय०। ॐहृषीकेशाय०। ॐपद्मनाभाय०। ॐदामोदराय०। ॐसंकर्षणाय०

---

* टीपः—उदयास्तमयादूर्ध्वंयावत्स्यात्घटिकात्रयं ॥ तावत्संध्यामुपासीतप्रायश्चित्तंततःपरम् ॥ (प्रायश्चित्तं) संध्याकालेत्वतिक्रांतेस्नात्वा चम्ययथाविधि ॥ जपेदष्टशतंदेवींततःसंध्यासमाचरेत् ॥ यद्वा ॥ २ कालातिक्रमेणैवचतुर्थार्घ्यंप्रदापयेत् ॥ १ त्रिराचामेत्। द्विरोष्ठौपरिमृजेत् ॥ सकृदुपस्पृशेत् ॥ दक्षिणेनपाणिनायत्सव्यंपाणिंपादौप्रोक्षति ॥ शिरः ॥ चक्षुषी ॥ नासिके। श्रोत्रे। हृदयमालभ्य ॥ अपउपस्पृश्य ॥

ॐवासुदेवाय० । ॐप्रद्युम्नाय० । ॐअनिरुद्धाय० । ॐपुरुषोत्तमा० । ॐअधोक्षजाय० । ॐनारसिंहाय० । ॐअच्युताय०॥ॐजनार्दनाय०। ॐउपेंद्राय० । ॐहरयेनमः । ॐश्रीकृष्णायनमः । प्राणायामः * । ॐभूःॐभुवः । ॐसुवः । ॐमहःॐजनःॐतपः ॐसत्यं ॥ ॐतत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥ धियोयोनःप्रचोदयात् ॥ ओमापोज्योतीरसोमृतंब्रह्मभूर्भुवःसुवरोम् ॥ ममोपात्तदुरितक्षयद्वाराश्रीपरमेश्वरप्रीत्यर्थंप्रातःसंध्यामुपासिष्ये ॥ ॐआपोहिष्ठामयोभुवः । ॐतानऊर्जेदधातन ॥ ॐमहेरणायचक्षसे॥ ॐयोवःशिवतमोरसः ।, ॐतस्यभाजयतेहनः ॥ ॐउशतीरिवमातरः ॥ ॐतस्माअरंगमामवः ॥ ॐयस्यक्षयायाजिन्वथ ॥ ॐआपोजनयथाचनः ॥ दक्षिणेनपाणिनाजलमादाय ॥ ॐसूर्यश्चमामन्युश्चमन्युपतयश्चमन्युकृतेभ्यः ॥ पापेभ्योरक्षंतां । यद्रात्रियापमकार्षं ॥ मनसावाचाहस्ताभ्यां ॥ पद्भ्यामुदरेणशिश्ना ॥ रात्रिस्तदवलुंपतु ॥ यत्किंचदुरितंमयि ॥ इदमहंमाममृतयोनौ ॥ सूर्येज्योतिषिजुहोमिस्वाहा ॥ प्राश्याचम्य ॥ ॐदधिक्राव्णोअकारिषंजिष्णोरश्वस्यवाजिनः ॥ सुरभिनोमुखाकरत्प्रणआयूंषितारिषत् ॥ ॐआपोहिष्ठामयोभुव० ॥ ॐयोवःशिव०तरः ॥ ॐतस्माअरंग०चनः ॥ ॐहिरण्यवर्णाःशुचयःपावकायासुजातःकश्यपोयास्विंद्रः ॥ अग्निंयागर्भंदाधिरेविरूपास्तानआपःशंस्योनाभवंतु ॥ ॐयासांराजावरुणोयातिमध्येसत्यानृतेअवपश्यंजनानां ॥ मधुश्चुतःशुचयोयाःपावकास्तानआपःशंस्योनाभवंतु ॥ ॐया

---

* टीपः—त्रिःपठेदायतप्राणःप्राणायामःसउच्यते ॥ ब्रह्मचारीकनिष्ठिकानामिकांगुष्ठैः ॥ गृहस्थःपंचांगुलीभिर्नासांधृत्वा ॥ पूरकरेचकलक्षणं ॥ वामरंध्रेणवायुमापूर्यनिरोधेनकुंभकेकृते । त्रिरुत्कादक्षिणरंध्रेणवायुंशनैर्विसृज्याचम्य ॥ दक्षः ॥ वामेनरेचकंकुर्याद्दक्षेनापूर्यचोदरं ॥ कुंभकेनजपंकुर्यात्प्राणायामस्यलक्षणं ॥ इतिप्राणायामलक्षणः ॥

सांदेवादिविकृण्वंतिंभक्षंयाअंतरिक्षेबहुधाभवंति ॥ याःपृथिवींपयसोंदंतिशुक्रास्तानआपःशꣳस्योनाभंवंतु ॥ ॐशिवेनंमाचक्षुंषापश्यतापः शिवयातनुवोपस्पृशतत्वचंमे ॥ सर्वाꣳअग्नीꣳरप्सुषदोहुवेवोमयिवर्चोबलमोजोनिधत्त ॥ इतिस्वशिरसिमार्जयित्वा ॥ अघमर्षणंकुर्यात् ॥ ॐद्रुपदादिवमुंचतु । द्रुपदादिवेन्मुमुचानः ॥ स्विन्नःस्नात्वीमलादिव ॥ पूतंपवित्रेणेवाज्यं ॥ आपःशुंधंतुमैनंसः ॥ इतिजलमाभि मंत्र्यवामभागेउत्सृजेत् ॥ आचम्य । * अर्घ्यप्रदानं ॥ ॐभूर्भुवःसुवःतत्सवितु० । श्रीसवितासूर्यनारायणायनमः ॥ इदमर्घ्यंदत्तंनमम ॥ एवंत्रि वारं । ( ॐआपऊर्ध्वांविक्षिपंतिताएताआपोवज्रीभूत्वातानिरक्षाꣳसिमंदेहारुणेद्वीपप्रक्षिपंतियत्प्रदक्षिणंप्रक्रमंतितेनपाप्मानमवधून्वत्युद्यंतमस्तंयंत मादित्यमभिध्यायन्कुर्वन्ब्राह्मणोविद्वांत्सकलंभद्रमश्नुतेसावादित्योब्रह्मेतिब्रह्मैवसन्ब्रह्माप्योतियएवंवेद ) ॥ असावादित्योब्रह्मा ॥ तज्जलेनआत्मा नंपरिक्रम्यपरिषिंचेत् ॥ आचम्य प्राणानायम्य । ओंआपोज्यो० सुवरोम् ॥ ओमित्येकाक्षरंब्रह्म । अग्निर्देवताब्रह्मइत्यार्षं ॥ गायत्रं छंदंपरमात्मंसरूपं ॥ सायुज्यंविनियोगं ॥ आयांतुवरदादेवीअक्षरंब्रह्मसंमितं । गायत्रींछंदसांमातेदंब्रम्हजुषस्वमे ॥ यदन्हात्कुरुतेपापंतं दन्हात्प्रतिमुच्यते ॥ यद्रात्रियांकुरुतेपापंतद्रात्रियाप्रतिमुच्यते । सर्ववर्णेमहादेविसंध्याविद्येसरस्वति ॥ ओजोसिसहोसिबलमसिभ्राजो सिदेवानांधामनामासिविश्वमसिविश्वायुःसर्वमसिसर्वायुरभिभूरोंगायत्रीमावाहयामि । सावित्रीमावाहयामि । सरस्वतीमावाहयामि । च्छंदर्षीनावा हयामिश्रियमावाहयामि ॥ गायत्र्यागायत्रीच्छंदोविश्वामित्रऋषिःसवितादेवताग्निर्मुखंब्रम्हाशिरोविष्णुर्हृदयꣳरुद्रःशिखापृथिवीयोनिः ॥ प्राणापानव्यानोदानसमानासप्राणाश्वेतवर्णासांख्यायन ꣳसगोत्रागायत्रीचतुर्विꣳशत्यक्षरात्रिपदाषट्कुक्षिःपंचशीर्षोपनयनेविनियोगः ॥ ॥

---

* टीपः—प्राङमुखस्तिष्ठन्अंगुष्ठरहितांजलिनांजलमादायत्रिवारमूर्ध्वांक्षिपेत् २ गोशृंगमात्रमुत्धृत्यजलमध्येजलंक्षिपेत् ।

ॐभूः ॐभुवः ॐस्वः ॐमहः ॐजनः ॐतपः ॐसत्यं ॐतत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥ धियोयोनःप्रचोदयात् ॥ ॐआपोज्योतीरसोमृतंब्रह्मभूर्भुवःस्वरों ॥ ममोपात्तदुरितक्षयद्वाराश्रीपरमेश्वरप्रीत्यर्थंयथाशक्तिगायत्रीमंत्रजपमहंकरिष्ये ॥ ॐतत्सवितुःअंगुष्ठाभ्यांनमः ॥ ॐवरेण्यंतर्जनीभ्यांनमः ॥ ॐभर्गोदेवस्यमध्यमाभ्यांनमः ॥ ॐधीमहिअनामिकाभ्यांनमः ॥ ॐधियोयोनःकनिष्ठिकाभ्यांनमः ॥ ॐप्रचोदयात्करतलकरपृष्ठाभ्यांनमः ॥ ॐतत्सवितुर्हृदयायनमः ॥ ॐवरेण्यंशिरसेस्वाहा ॥ ॐभर्गोदेवस्यशिखायैवषट् ॥ ॐधीमहिकवचायहुं ॥ ॐधियोयोनःनेत्रत्रयायवौषट् ॥ ॐप्रचोदयातअस्त्रायफट् ॥ अथध्यानं । मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्र्यक्षणैर्युक्तामिंदुनिबद्धरत्नमुकुटां तत्वार्थवर्णात्मिकां ॥ गायत्रींवरदाभयांकुशकशां शुभ्रंकपालंगुणंशंखंचक्रमथारविंदयुगुलंहस्तैर्वहंतींभजे ॥ * मानसोपचारैःसंपूज्य ॥ अथमुद्रा। ॐसुमुखंसंपुटंचैववितंतंविस्तृतंतथा ॥ द्विमुखंत्रिमुखंचैव चतुःपंचमुखंतथा ॥ षण्मुखोऽधोमुखंचैवव्यापकांजलिकंतथा ॥ शकटंयमपाशंचग्रंथितंचोल्मुकोल्मुकं ॥ प्रलंबंमुष्टिकंचैवमत्स्यःकूर्मवराहकं ॥ सिंहाक्रांतंमहाक्रांतंमुद्गरंपल्लवंतथा ॥ एतामुद्राचतुर्विंशागायत्रीसफलाभवेत । एतामुद्रानजानातीगायत्रीनिष्फलाभवेत ॥ ॐभूर्भुवःस्वः तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥ धियोयोनःप्रचोदयात ॥ यथाशक्तिजपंकृत्वा ॥ १ * अष्टोत्तरशत अष्टाविंशतिदशवारंवा ॥ जपांतेहृदयादिन्यासंकृत्वा । तत्सवितुहृदयायनमःइत्यादि ॥ मुद्रांप्रदर्श्य ॥ सुरभिर्ज्ञानचक्रंचयोनिःकूर्मोथपंकजं ॥ लिंगंनि

---

* टीप—लंपृथिव्यात्मनेनमःगंधंकल्पयामि । हंआकाशात्मनेनमःपुष्पंकल्पयामि । यंवायवात्मनेनमःधूपंकल्पयामिरंअग्न्यात्मनेनमःदीपंक०। वंअमृतात्मनेनमःनैवेद्यं० । संसर्वात्मनेनमःसर्वोपचारान्कल्पयामि ॥ (जपलक्षणं) ॥ १ * प्रातर्नाभौकरंधृत्वामध्यान्हेहृदिसंस्थितं ॥ सायान्हेमुखमग्रेचजपलक्षणमुच्यते )

र्योणमुद्राचअष्टमुद्राःप्रकीर्तिताः ॥ अनेनगायत्रीमंत्रजपाख्येनकर्मणाभगवान्परमेश्वरःप्रीयतांनमम ॥ उपस्थानं ॥ ॐमित्रस्यचर्षणीधृतःश्रवो देवस्यसानसिं ॥ सत्यंचित्रश्रवस्तमं ॥ मित्रोजनान्यातयतिप्रजानन्मित्रोदाधारपृथिवीमुतद्यां ॥ मित्रःकृष्टीरनिमिषाभिचष्टेसत्यायहव्यंघृतवद्विधेम ॥ प्रसमित्रमर्त्तोअस्तुप्रयस्वान्यस्तआदित्यशिक्षतिव्रतेन ॥ नहन्यतेनजीयतेत्वोतोनैनमंहोअश्नोत्यंतितोनदूरात् ॥ ॐनमःप्राच्यैदिशेयाश्चदेवताएतस्यांप्रतिवसंत्येताभ्यश्चनमोनमो । दक्षिणायैदिशेयाश्चदेवतायेतस्यांप्रतिवसंत्येताभ्यश्चनमोनमः । प्रतीच्यैदिशेयाश्चदेवता०नमउदीच्यैदिशेयाश्चदेवता०नमो० ऊर्ध्वायैदिशेयाश्चदेवता०नमोधरायैदिशेयाश्चदेवता०नमोवांतरायैदिशेयाश्चदेवता०नमो नमोगंगायमुनयोर्मध्येयेवसंतितेमेप्रसन्नात्मानंचिरंजीवितंवर्द्धयंति ॥ नमोगंगायमुनयोर्मुनिभ्यश्चनमोनमोगंगायमुनयोर्मुनिभ्यश्चनमः ॥ संध्यायैनमः ॥ गायत्र्यैनमः ॥ सावित्र्यैनमः ॥ सरस्वत्यैनमः ॥ सर्वेभ्योदेवताभ्योनमोनमः ॥ ऋषिभ्योनमः ॥ मुनिभ्योनमः गुरुभ्योनमः ॥ कामोकार्षीन्नमोनमः ॥ (कामोकार्षीत्कामःकरोतिनाहंकरोमिकामःकर्तानाहंकर्ताकामःकारयितानाहंकारयिताएषतेकामकामायस्वाहा ) ॥ मन्युरकार्षीन्नमोनमः ॥ ( मन्युरकार्षीन्मन्युःकरोतिनाहंकरोमिमन्युःकर्तानाहंकर्तामन्युःकारयितानाहंकारयिताएषतेमन्योमन्यवेस्वाहा ) ॥ पृथिव्यापस्तेजोवायुराकाश ॥ ॐनमोभगवतेवासुदेवाय ॥ यांसदासर्वभूतानिचराणिस्थावराणिच ॥ सायंप्रातर्नमस्यंतिसामासंध्याभिरक्षतु ॥ शिवायविष्णुरूपायशिवरूपायविष्णवे ॥ शिवस्यहृदयंविष्णुर्विष्णोश्चहृदयंशिवः ॥ यथाशिवमयंविष्णुरेवंविष्णुमयःशिवः ॥ यथांतरंनपश्यामितथामेस्वस्तिरायुच ॥ नमोब्रह्मण्यदेवायगोब्राह्मणहितायच ॥ जगद्धितायकृष्णायगोविंदायनमोनमः ॥ ॐउत्तमेशिखरेजातेभूम्यांपर्वतमूर्धनि ॥ ब्राह्मणेभ्योभ्यनुज्ञातागच्छदेविथयासुखं ॥ स्तुतोमयावरदावेदमाताप्रचोदयंतीपवनेद्विजाता ॥ आयुःपृथिव्यांद्रविणंब्रह्मवर्चसंमह्यंदत्वाप्रजातुंब्रह्मलोकं ॥ नमो

स्तवनंतायसहस्रमूर्तयेसहस्रपादाक्षिशिरोरुबाहवे ॥ सहस्रनाम्नेपुरुषायशाश्वतेसहस्रकोटियुगधारिणेनमः ॥ ॐइदंद्यावापृथिवीसत्यमस्तु ॥ पितर्मातर्यदिहोपब्रुवेवां ॥ भूतंदेवानांमवमेअवोभिः ॥ विद्यामेषंवृजनंजीरदानुं ॥ आकाशात्पतितंतोयंयथागच्छतिसागरं ॥ सर्वदेवनमस्कारः केशवंप्रतिगच्छति ॥ सर्ववेदेषुयत्पुण्यंसर्वतीर्थेषुयत्फलं॥तत्फलंसमवाप्नोतिस्तुत्वादेवंजनार्दनं॥वासनाद्वासुदेवस्यवासितंतेजगत्त्रयं ॥ सर्वभूतनिवासोसिवासुदेवनमोस्तुते ॥ चतुःसागरपर्यंतंगोब्राम्हणेभ्यःशुभंभवतु ॥ अमुकप्रवरान्वितअमुकगोत्रोत्पन्नोहं ॥ यजुर्वेदस्यतैत्तरीयशाखांतर्गत आपस्तंबीयशाखाध्यायीअमुकदेवशर्माहंभोगुरोअभिवादये ॥ अभिवादयामि ॥ केशवादिआचमनंकृत्वा ॥ यस्यस्मृत्याचनामोक्त्यात पःसंध्याक्रियादिषु ॥ न्यूनंसंपूर्णतांयातिसद्योवंदेतमच्युतं ॥ अनेनप्रातःसंध्याख्येनकर्मणाभगवान्परमेश्वरःप्रीयतांनमम ॥ इतिनमस्कुर्यात् ॥

## ॥ अथपुरुषसूक्तप्रारंभः ॥

॥ श्रीः ॥ ॐ सहस्रशीर्षापुरुषः ॥ सहस्राक्षःसहस्रपात् ॥ सभूमिंविश्वतोवृत्वा ॥ अत्यतिष्ठद्दशांगुलं ॥ पुरुषएवेदꣳसर्वं ॥ यद्भूतंयच्चभव्यं ॥ उतामृतत्वस्येशानः ॥ यदन्नेनातिरोहति ॥ एतावानस्यमहिमा ॥ अतोज्यायाꣳश्चपूरुषः ॥ पादोस्यविश्वाभूतानि ॥ त्रिपादस्यामृतंदिवि ॥ त्रिपादूर्ध्वउदैत्पुरुषः ॥ पादोस्येहाभवात्पुनः ॥ ततोविष्वङ्व्यक्रामत् ॥ साशनानशनेअभि ॥ तस्माद्विराडजायत ॥ विराजोअधिपूरुषः ॥ सजातोअत्यरिच्यत ॥ पश्चाद्भूमिमथोपुरः ॥ यत्पुरुषेणहविषा ॥ देवायज्ञमतन्वत ॥ वसंतोअस्यासीदाज्यं ॥ ग्रीष्मइध्मःशरद्धविः ॥ सप्तास्यासन्परिधयः ॥ त्रिःसप्तसमिधःकृताः ॥ देवायद्यज्ञंतन्वानाः ॥ अबध्नन्पुरुषंपशुं ॥ तंयज्ञंबर्हिषिप्रौक्षन् ॥ पुरुषंजातमग्रतः ॥

तेनदेवाअयजंत ॥ साध्याऋषयश्चये ॥ तस्माद्यज्ञात्सर्वहुतः ॥ संभृतंपृषदाज्यं ॥ पशूꣳस्ताꣳश्चक्रेवायव्यान् ॥ आरण्यान्ग्राम्याश्चये ॥ तस्मा
द्यज्ञात्सर्वहुतः ॥ ऋचःसामानिजज्ञिरे ॥ छंदाꣳसिजज्ञिरेतस्मात् ॥ यजुस्तस्मादजायत ॥ तस्मादश्वाअजायंत ॥ येकेचोभयादतः ॥ गावोह
जज्ञिरेतस्मात् ॥ तस्माज्जाताअजावयः ॥ यत्पुरुषंव्यदधुः ॥ कतिधाव्यकल्पयन् ॥ मुखंकिमस्यकौबाहू ॥ कावूरूपादावुच्येते ॥ ब्राह्मणो
स्यमुखमासीत् ॥ बाहूराजन्यःकृतः ॥ ऊरूतदस्ययद्वैश्यः ॥ पद्भ्याꣳशूद्रोअजायत ॥ चंद्रमामनसोजातः ॥ चक्षोःसूर्योअजायत ॥ मुखादिंद्र
श्चाग्निश्च ॥ प्राणाद्वायुरजायत ॥ नाभ्याआसीदंतरिक्षं ॥ शीर्ष्णोद्यौःसमवर्तत ॥ पद्भ्यांभूमिर्दिशःश्रोत्रात् ॥ तथालोकाꣳअकल्पयन् ॥ वेदाह
मेतंपुरुषंमहांतं ॥ आदित्यवर्णंतमसस्तुपारे ॥ सर्वाणिरूपाणिविचित्यधीरः ॥ नामानिकृत्वाभिवदन्यदास्ते ॥ धातापुरस्ताद्यमुदाजहार ॥
शक्रःप्रविद्वान्प्रदिशश्चतस्रः ॥ तमेवंविद्वानमृतइहभवति ॥ नान्यःपंथाअयनायविद्यते ॥ यज्ञेनयज्ञमयजंतदेवाः ॥ तानिधर्माणिप्रथमान्यासन् ॥
तेहनाकंमहिमानःसचंते ॥ यत्रपूर्वेसाध्याःसंतिदेवाः ॥ अद्भ्यःसंभूतःपृथिव्यैरसाच्च ॥ विश्वकर्मणःसमवर्तताधि ॥ तस्यत्वष्टाविदधद्रूप
मेति ॥ तत्पुरुषस्यविश्वमाजानमग्रे ॥ वेदाहमेतंपुरुषंमहांतं ॥ आदित्यवर्णंतमसःपरस्तात् ॥ तमेवंविद्वानमृतइहभवति ॥
नान्यःपंथाविद्यतेयनाय ॥ प्रजापतिश्चरतिगर्भेअंतः ॥ अजायमानोबहुधाविजायते ॥ तस्यधीराःपरिजानंतियोनिं ॥ मरीचीनांपद
मिच्छंतिवेधसः ॥ योदेवेभ्यआतपति ॥ योदेवानांपुरोहितः ॥ पूर्वोयोदेवेभ्योजातः ॥ नमोरुचायब्राह्मये ॥ रुचंब्राह्मंजनयंतः ॥
देवाअग्रेतदब्रुवन् ॥ यस्त्वैवंब्राह्मणोविद्यात् ॥ तस्यदेवाअसन्वशे ॥ ह्रीश्चतेलक्ष्मीश्चपत्न्यौ ॥ अहोरात्रेपार्श्वे ॥ नक्षत्राणिरूपं ॥
अश्विनौव्यात्तं ॥ इष्टंमनिषाण ॥ अमुंमनिषाण ॥ सर्वंमनिषाण ॥ इतिपुरुषसूक्तं ॥

## ॥ अथपंचायतनपूजा ॥

॥ श्रीः ॥ केशवादिआचम्यप्राणानायम्य ॥ श्रीमन्महागणाधिपतयेनमः सुमुखश्चैकदंतश्चकपिलोगजकर्णकः ॥ लंबोदरश्चविकटोविघ्ननाशोगणाधिपः ॥ धूमकेतुर्गणाध्यक्षोभालचंद्रोगजाननः ॥ द्वादशैतानिनामानियःपठेच्छृणुयादपि ॥ विद्यारंभेविवाहेचप्रवेशेनिर्गमेतथा ॥ संग्रामेसंकटेचैवविघ्नतस्यनजायते ॥ शुक्लांबरधरंदेवंशशिवर्णंचतुर्भुजं ॥ प्रसन्नवदनंध्यायेत्सर्वविघ्नोपशांतये ॥ अभीप्सितार्थसिध्यर्थंपूजितोयःसुरासुरैः ॥ सर्वविघ्नहरःस्तस्मैगणाधिपतयेनमः ॥ सर्वमंगलमांगल्येशिवेसर्वार्थसाधिके ॥ शरण्येत्र्यंबकेगौरीनारायणिनमोस्तुते ॥ सर्वदासर्वकार्येषुनास्तितेषाममंगलं ॥ येषांहृदिस्थोभगवान्मंगलायतनंहरिः ॥ तदेवलग्नंसुदिनंतदेवताराबलंचंद्रबलंतदेव ॥ विद्याबलंदैवबलंतदेवलक्ष्मीपतेतेंघ्रियुगंस्मरामि ॥ यत्रयोगेश्वरःकृष्णोयत्रपार्थोधनुर्धरः ॥ तत्रश्रीर्विजयोभूतिर्ध्रुवानीतिर्मतिर्मम ॥ सर्वेष्वारंभकार्येषुत्रयस्त्रिभुवनेश्वराः ॥ देवादिशंतुनःसिद्धिंब्रम्हेशजनार्दनाः ॥ लाभस्तेषांजयस्तेषांकुतस्तेषांपराजयः ॥ येषामिंदीवरश्यामोहृदयस्थोजनार्दनः ॥ विनायकंगुरुंभानुंब्रम्हविष्णुमहेश्वरान् ॥ सरस्वतींप्रणौम्यादौसर्वकार्यार्थसिद्धये ॥ लक्ष्मीनारायणाभ्यांनमः ॥ उमामहेश्वराभ्यां० ॥ शचीपुरंदराभ्यां० ॥ ब्रम्हासावित्रीभ्यां० ॥ मातापितृभ्यां० ॥ इष्टदेवताभ्यो० ॥ कुलदेवताभ्योनमः ॥ ग्रामदेवता० ॥ वास्तुदेवता० ॥ सर्वेभ्योदेवेभ्योनमो० ॥ सर्वेभ्योब्राम्हणेभ्यो० ॥ श्रीमद्भगवतोमहापुरुषस्यविष्णोराज्ञयाप्रवर्तमानस्यअद्यब्रह्मणोद्वितीयेपरार्धेश्रीश्वेतवाराहकल्पेवैवस्वतमन्वंतरेअष्टाविंशतितमेकलियुगेकलिप्रथमचरणेभरतवर्षेभरतखंडेजंबूद्वीपेदंडकारण्येदेशेगोदवर्याःउत्तरेतीरेरेवायाःदक्षिणेतीरेशालिवाहनशकेकौमारिकाखंडे ॥ बौद्धावतारेश्रीरामक्षेत्रेआस्मिनवर्तमानेअमुकनामसंवत्सरे ॥ अमुकायने ॥ अमुकऋतौ ॥ अमुकमासे ॥ अमुकपक्षे ॥ अमुकतिथौ ॥ अमुकवासरे ॥

अमुकनक्षत्रे ॥ अमुकास्थितेवर्तमानेचंद्रे ॥ अमुकास्थितेश्रीसूर्ये ॥ अमुकास्थितेदेवगुरौ ॥ शेषेषुग्रहेषु त्तत्तद्राशिस्थानस्थितेषुस त्सु ॥ एवंगुणविशेषणविशिष्टायांशुभतिथौ ॥ अस्माकंसहकुटुंबानांक्षेमस्थैर्यआयुरारोग्यऐश्वर्याभिवृध्यर्थं ॥ श्रीमहाविष्णुप्रमुखपंचाय तनदेवताप्रीत्यर्थंयथाज्ञानेनयथामीलितोपचारैः (षोडशोपचारैः) पूजनंकरिष्ये ॥ तत्रादौनिर्विघ्नतासिध्यर्थंगणपतिस्मरणंआसनादीविधिंषडंगंन्यासा न्कलशाराधनंशंखघंटापूजनंचकरिष्ये ॥ ॐगणानांत्वागणपतिंहवामहेकविंकवीनामुपमश्रवस्तमं ॥ ज्येष्ठराजंब्रह्मणांब्रह्मणस्पतआनः शृण्वंनूतिभिःसीदसादनं ॥ वक्रतुंडमहाकायसूर्यकोटिसमप्रभ ॥ निर्विघ्नंकुरुमेदेवसर्वकार्येषुसर्वदा ॥ विघ्नान्नाशयमेसर्वान्नाशायोप स्थितान्प्रभो ॥ त्वत्प्रसादेनकार्याणिसर्वाणीहकरोम्यहं ॥ शत्रूणांबुध्दिनाशोस्तुमित्राणामुदयंकुरु ॥ इतिविज्ञाप्यदेवेशंप्रणिपत्यपुनःपुनः । गणपतिंस्मृत्वा ॥ * आसनविधिंकरिष्ये ॥ ॐपृथ्वित्वयाधृतालोकादेवित्वंविष्णुनाधृता ॥ त्वंचधारयमांदेविपवित्रंकुरुचासनं ॥ अप सर्पंतुतेभूतायेभूताभूमिसंस्थिताः ॥ येभूताविघ्नकतारतेनःश्यंतुशिवाज्ञया ॥ अपक्रामंतुभूतानिपिशाचाःसर्वतोदिशं ॥ सर्वेषामविरोधेनपू जाकर्मसमारभे ॥ तीक्ष्णदंष्ट्रमहाकायकल्पांतदहनोपम ॥ भैरवायनमस्तुभ्यमनुज्ञांदातुमर्हसि ॥ वामपादेनघातत्रयंकुर्यात ॥ न्यासान्कृत्वा ॥ ॐयत्पुरुषंव्यदधुःकतिधाव्यकल्पयन् ॥ मुखंकिमस्यकौबाहूकावूरूपादावुच्येते ॥ हृदयायनमः ॥ ॐब्राह्मणोस्यमुखमासीद्बाहूराजन्यःकृतः ॥ ऊरूतदस्ययद्वैश्यःपद्भ्यांशूद्रोअजायत ॥ शिरसेस्वाहा ॥ ॐचंद्रमामनसोजातःश्चक्षोःसूर्योअजायत ॥ मुखादिंद्रश्चाग्निश्चप्राणाद्वायुर जायत ॥ शिखायैवषट् ॥ ॐनाभ्याआसीदंतरिक्षंशीर्ष्णोद्यौःसमवर्तत ॥ पद्भ्यांभूमिर्दिशःश्रोत्रात्तथालोकांअकल्पयन् ॥ कवचायहुं ॥ ॐस प्तास्यासन्परिधयस्त्रिःसप्तसमिधःकृताः ॥ देवायद्यज्ञंतन्वानाअबध्नन्पुरुषंपशुं ॥ नेत्रत्रयायवौषट् ॥ ॐयज्ञेनयज्ञ० ॥ अस्त्रायफट् ॥ कलशाराधनं

* टीप—चैलाजिनकुशोत्तरं ( पूर्वंकुशासनंतदुपरिअजिनासनतदुपरिऊर्णाचैलासनं ) (ऊर्णावस्त्रं) एवंसर्वत्रआग्नप्रकारः

करिष्ये ॥ ॐमहीद्यौःपृथिवीचनइमंयज्ञंमिमिक्षतां ॥ पिपृतांनोभरीमभिः ॥ ओषधयःसंवदंतेसोमेनसहराज्ञा ॥ यस्मैकरोतिब्राह्मणस्त्व
ँराजन्पारयामसि ॥ पृथिव्यैनमःसर्वोपचारार्थेगंधाक्षतपुष्पधूपदीपनैवेद्यतांबुलनस्कारान्समर्पयामि ॥ कलशस्थापनं ॥ ॐआजिघ्रक
लशंमत्युरुधारापयस्वत्यात्वाविशंत्विंदवःसमुद्रमिवसिंधवःसामासहस्रआभंजप्रजयापशुभिःसहपुनर्माविशताद्रयिः ॥ ॐइमंमेगंगेयमुनेसरस्वति
शुतुद्रिःस्तोमंँसचतापरुष्णिया ॥ असिक्न्यामरुद्धधेवितस्तयार्जीकीयेशृणुह्यासुषोमया ॥ ॐगंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीं ॥ ईश्व
रींँसर्वभूतानांतामिहोपह्वयेश्रियं ॥ ॐयाःफलिनीर्याअफलाअपुष्पायाश्चपुष्पिणीः ॥ बृहस्पतिप्रसूतास्तानोमुंचंत्वँहसः ॥ ॐअग्नेरेतश्चं
द्रँहिरण्यं ॥ अभ्द्यःसंभृतममृतंप्रजासु ॥ तत्संभरन्नुत्तरतोनिधायं ॥ अतिप्रयच्छंदुरितिंतरेयं ॥ बृहस्पतेजुषस्वनोहव्यानिविश्वदे
व्य ॥ रास्वरत्नानिदाशुषे ॥ ॐयुवासुवासाःपरीवीतआगात्सउश्रेयान्भवतिजायमानः ॥ तंधीरासःकवयउन्नयंतिस्वाध्योमनसादेवयंतः ।
ॐपूर्णादर्विपरापतसुपूर्णापुनरापत ॥ वस्नेवविक्रीणावहाइषमूर्जँशतक्रतो ॥ ॐतत्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः ॥
अहेडमानोवरुणेहबोध्युरुशँसमानआयुःप्रमोषीः ॥ अस्मिन्कलशेवरुणायनमःसर्वोपचारार्थेगंधाक्षतपुष्पधूपदीपनैवद्यनमस्कारान्समर्पयामि ॥
कलशस्यमुखेविष्णुःकंठेरुद्रःसमाश्रितः ॥ मूलेतस्यस्थितोब्रह्मामध्येमातृगणाःस्मृताः ॥ कुक्षौतुसागराःसर्वेसप्तद्वीपावसुंधरा ॥ ऋग्वेदोथ
यजुर्वेदःसामवेदोह्यथर्वणः ॥ अंगैश्चसहिताःसर्वेकलशंतुसमाश्रिताः ॥ अत्रगायत्रीसावित्रीशांतिःपुष्टिकरीतथा ॥ आयांतुदेवपूजार्थंदुरितक्षय
कारकाः ॥ गंगेचयमुनेचैवगोदावरिसरस्वती ॥ नर्मदासिंधुकावेरीजलेस्मिन्संनिधिंकुरु ॥ धेनुमुद्रांप्रदर्श्य ॥ शंखंचद्रार्कदेवत्यंवारुणंचाधिदैवतं ॥
पृष्ठेप्रजापतिस्तत्रअग्रेगंगासरस्वती ॥ त्वंपुरासागरोत्पन्नोविष्णुनाविधृतःकरे ॥ निर्मितःसर्वदेवैस्त्वंपांचजन्यनमोस्तुते ॥ पांचजन्याय

विद्महेपावमानायधीमहि ॥ तन्नःशंखःप्रचोदयात् ॥ आगमार्थंतुदेवानांगमनार्थंतुरक्षसां ॥ कुरुघंटेरवंतत्रदेवताल्हादकारकं ॥ शंख
घंटाभ्यांनमःसकलपूजार्थेगंधाक्षतपुष्पंसमर्पयामि ॥ शंखोदकेनकलशोदकेनचगायत्रीमंत्रेणपूजाद्रव्याणिआत्मानंप्रोक्ष्य ॥ घंटानादंकृत्वा ॥
पुनःशंखंपूरयित्वा ॥ अथध्यानं ॥ शांताकारंभुजगशयनंपद्मनाभंसुरेशं ॥ विश्वाधारंगगनसदृशंमेघवर्णंशुभांगं । लक्ष्मीकांतंकमलन
यनंयोगिभिर्ध्यानगम्यं ॥ वंदेविष्णुंभवभयहरंसर्वलोकैकनाथं ॥ इतिविष्णोः ॥ अथशिवस्य ॥ ध्यायेन्नित्यंमहेशंरजतगिरिनिभंचारुचंद्राव
तंसंरत्नाकल्पोज्वलांगंपरशुमृगवराभीतहस्तंप्रसन्नम् ॥ पद्मासीनंसमंतात्स्तुतिममरगणैर्व्याघ्रकृत्तिंवसानंविश्वाद्यंविश्ववंद्यंनिखिलभयहरंपंचव
क्त्रंत्रिनेत्रं ॥ ॥ अथगणेशस्य ॥ एकदंतंशूर्पकर्णंगजवक्त्रंचतुर्भुजं ॥ पाशांकुशधरंदेवंध्यायेत्सिद्धिविनायकं ॥ अथसूर्यः ॥ ध्येयःसदासवि
तृमंडलमध्यवर्तीनारायणःसरसिजासनसंनिविष्टः ॥ केयूरवान्मकरकुंडलवान्किरीटीहारीहिरण्मयवपुर्धृतशंखचक्रः ॥ अथदेव्याः ॥ नमोदेव्यै
महादेव्यैशिवायैसततंनमः ॥ नमःप्रकृत्यैभद्रायैनियताःप्रणतास्मताम् ॥ श्रीमहाविष्णुप्रमुखपंचायतनदेवताभ्योनमःध्यायामिध्यानंसमर्पयामि ॥
ॐसहस्रशीर्षापुरुषः ॥ सहस्राक्षःसहस्रपात् ॥ सभूमिंविश्वतोवृत्वा ॥ अत्यतिष्ठद्दशांगुलं ॥ आवाहनार्थेअक्षतान्समर्पयामि ॥
ॐपुरुषएवेदꣳसर्वं ॥ यद्भूतंयच्चभव्यं ॥ उतामृतत्वस्येशानः ॥ यदन्नेनातिरोहति ॥ श्रीमहा०आसनस्थानेतुलसीपत्रंसमर्पयामि ॥
ॐएतावानस्यमहिमा ॥ अतोज्यायाꣳश्चपूरुषः ॥ पादोस्यविश्वाभूतानि ॥ त्रिपादस्यामृतंदिवि ॥ श्रीमाहाविष्णू० ॥ पादयोः
पाद्यंसमर्पयामि ॥ ॐत्रिपादूर्ध्वउदैत्पुरुषः ॥ पादोस्येहाभवत्पुनः ॥ ततोविष्वङ्व्यक्रामत् ॥ साशनानशनेअभि ॥ श्रीमाहाविष्णू०
अर्घ्यंसमर्पयामि ॥ ॐतस्माद्विराडजायत ॥ विराजोअधिपूरुषः ॥ सजातोअत्यरिच्यत ॥ पश्चाद्भूमिमथोपुरः ॥ श्रीमाहाविष्णू० ॥
आचमनीयंस० ॥ ॐयत्पुरुषेणहविषा ॥ देवायज्ञमतन्वत ॥ वसंतोअस्यासीदाज्यं ॥ ग्रीष्मइध्मःशरद्धविः ॥ श्रीमहाविष्णु०स्नानीयं

समर्पयामि ॥ पंचामृतस्नानं ॥ ॐआप्यायस्वसमेतुतेविश्वतःसोमवृष्णियं ॥ भवावाजस्यसंगथे ॥ श्रीमहा०पयसास्नपयामि ॥ ॐद
धिक्राव्णोअकारिषंजिष्णोरश्वस्यवाजिनः ॥ सुरभिनोमुखाकरत्प्रणआयूंषितारिषत् ॥ श्रीमहावि०दध्नास्नपयामि ॥ ॐघृतंमिमिक्षिरे
घृतमस्ययोनिर्घृतेश्रितोघृतमुवस्यधाम ॥ अनुष्वधमावहमादयस्वस्वाहाकृतंवृषभवक्षिहव्यं ॥ श्रीमहा०घृतेनस्नपयामि ॥ ॐमधुवाता
ऋतायतेमधुक्षरंतिसिंधवः ॥ माध्वीर्नःसंत्वोषधीः ॥ मधुनक्तमुतोषसिमधुमत्पार्थिवंरजः ॥ मधुद्यौरस्तुनःपिता ॥ मधुमान्नोवनस्प
तिर्मधुमांअस्तुसूर्यः ॥ माध्वीर्गावोभवंतुनः ॥ श्रीमहावि०मधुनास्नपयामि ॥ ॐस्वादुःपवस्वदिव्यायजन्मनेस्वादुरिंद्रायसुहवीतुनाम्ने ॥
स्वादुर्मित्रायवरुणायवायवेबृहस्पतयेमधुमांअदाभ्यः ॥ शर्करयास्नपयामि ॥ ॐआपोहिष्ठामयोभुवःस्तानऊर्जेदधातन ॥ महेरणायचक्षसे ॥
योवःशिवतमोरसस्तस्यभाजयतेहनः ॥ उशतीरिवमातरः । तस्माअरंगमामवोयस्यक्षयायजिन्वथ । आपोजनयथाचनः । इतितृचेनमलापकर्षस्नानंस
मर्पयामि ॥ यत्पुरुषेणह० शुद्धोदकेनस्नपयामि ॥ सर्वोपचारार्थेगंधाक्षतपुष्पधूपदीपनैवेद्यनमस्कारान्समर्पयामि ॥ अभिषेकः ॥ पुरुषसूक्तलक्ष्मी
सूक्तविष्णुसूक्तेनअभिषेकंकुर्यात् ॥ अभिषेकस्नानांतेआचमनीयंसमर्पयामि ॥ ॐनर्यप्रजांमेगोपाय ॥ अमृतत्वायजीवसे ॥ जातांज
निष्यमाणांच ॥ अमृतेसत्येप्रतिष्ठितां ॥ सुप्रतिष्ठितमस्तु ॥ ॐतंयज्ञंबर्हिषिप्रौक्षन् ॥ पुरुषंजातमग्रतः ॥ तेनदेवाअयजंत ॥
साध्याऋषयश्चये ॥ वस्त्रंसमर्पयामि ॥ उपवस्त्रार्थेअक्षतान्समर्पयामि ॥ ॐतस्माद्यज्ञात्सर्वहुतः ॥ संभृतंपृषदाज्यं ॥ पशूंस्तांश्चक्रेवा
यव्यान् ॥ आरण्यान्ग्राम्याश्चये । ॐयज्ञो० । श्रीमहा०यज्ञोपवीतंसमर्पयामि ॥ यज्ञोपवीतानंतरंआचमनीयंसम० ॥ ॐतस्माद्यज्ञात्सर्वहुतः ॥
ऋचःसामानिजज्ञिरे ॥ छंदांसिजज्ञिरेतस्मात् ॥ यजुस्तस्मादजायत ॥ श्रीखंडंचंदनंदिव्यंगंधाढ्यंसुमनोहरम् ॥ विलेपनंसुरश्रेष्ठचंदनंप्रति
गृह्यतां ॥ ॐगंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीं ॥ ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियं ॥ श्रीमहावि०विलेपनार्थेचंदनंसमर्पयामि ॥ अक्षंम

मीमदंतह्यवप्रियाअंभूषत ॥ अस्तोषतस्वभानवोविप्रानविंष्ठयामती ॥ योजान्विंद्रतेहरीं ॥ अक्षताश्चसुरश्रेष्ठकुंकुमाक्ताःसुशोभिताः ॥ मयानि
वेदिताभक्त्यागृहाणपरमेश्वर ॥ श्रीमहावि० अलंकारार्थेअक्षता० ॥ हरिद्रारंजितादेवीसुखसौभाग्यदायिनी ॥ अतस्त्वामर्पमिष्यमिष्याभिहरिद्रां
सर्वकामदां ॥ हरिद्रांस० । कुंकुमंकामदंदिव्यंकामनाकामसंभवं ॥ कुंकुमेनार्चितेदेवीगृहाणपरमेश्वरी ॥ कुंकु० ॥ अहिरिवभोगैःपर्यैतिबाहुं
ज्यायांहेतिंपरिबाधमानः । हस्तघ्नोविश्वान्वयुनानिविद्वान्पुमान्पुमांसंपरिपातुविश्वतः । ह० कु० । ॐतस्मादश्वा० वयः । माल्यादीनीसुगंधीनिमा
लत्यादीनिवैप्रभो ॥ मयाहृतानिपूजार्थंपुष्पाणिप्रतिगृह्यतां ॥ करवीरैर्जातिकुसुमैश्चंपकैर्बकुलैःशुभैः ॥ शतपत्रैश्चकल्हारैरर्चयेत्परमेश्वर ॥ श्रीम०
पुष्पाणि० ॥ त्रिदलंत्रिगुणाकारंत्रिनेत्रंचत्रियायुधं ॥ त्रिजन्मपापसंहारमेकबिल्वंशिवार्पणं ॥ बिल्वद० ॥ केशवादिनामभिःतुलसीप० ॥ ॐ
यत्पुरुषंव्यदधु० ॥ वनस्पतिरसोद्भूतोगंधाढ्योगंधउत्तमः ॥ आघ्रेयःसर्वदेवानांधूपोयंप्रतिगृह्यताम ॥ श्रीम० धूपसं० ॥ ॐब्राह्मणोस्य० ॥
ऊरूतदस्ययद्वैश्यः ॥ पद्भ्यांशूद्रोअजायत ॥ साज्यंचवर्तिसंयुक्तंवन्हिनायोजितंमया ॥ दीपंग्रहाणदेवेशत्रैलोक्यतिमिरापह ॥ भक्त्यादीपंप्रय
छामिदेवायपरमात्मने ॥ त्राहिमांनिरयात्घोराद्दीपोयंप्रतिगृह्यतां ॥ श्रीम० वि० दीपंदर्शयामि ॥ ॐचंद्रमामनसोजातः ॥ चक्षोःसूर्योअजायत ॥
मुखादिंद्रश्चाग्निश्च ॥ प्राणाद्वायुरजायत ॥ शर्कराखंडखाद्यानिदधिक्षीरघृतानिच ॥ आहारंभक्षभोज्यंचनैवेद्यंप्रतिगृह्यतां ॥ अमृतोपस्तरणमसि ॥
ॐप्राणायस्वाहा ॥ ॐअपानायस्वाहा । ॐव्यानायस्वाहा । ॐउदानायस्वाहा । ॐसमानायस्वाहा । नैवेद्यमध्येपानीयंस० । उत्तरापोशनंस० ।
हस्तप्रक्षालनंस० । मुखप्रक्षालनंस० । करोद्वर्तनार्थेचंदनंस० । इदंफलंमयादेवस्थापितंपुरतस्तव ॥ तेनमेसफलावाप्तिर्भवेज्जन्मनिजन्मनि ॥
श्री[illegible]स० ॥ ॐवेदाहमेतंपुरुषंमहांतं ॥ आदित्यवर्णंतमसस्तुपारे ॥ सर्वाणिरूपाणिविचित्यधीरः । नामानिकृत्वाभिवदन्यदास्ते । पूगी
फलंमहद्दिव्यंनागवल्लीदलैर्युतं ॥ लवंगादिसमायुक्तंतांबूलंप्रतिगृह्यतां ॥ तांबूलस० ॥ ॐधातापुरस्तायमुदाजहार । शक्रःप्रविद्वान्प्रदिश

श्रुतंस्त्रः ॥ तमेवंविद्वानमृतइहभवति ॥ नान्यःपंथाअयनायविद्यते ॥ हिरण्यगर्भगर्भस्थंहेमबीजंविभावसोः ॥ अनंतपुण्यफलदमतःशांतिंप्रयच्छमे ॥
श्रीमहावि०दाक्षिणांसम० ॥ एतैरुपचारैःमहाविष्णुप्रमुखपंचायतनदेवताःप्रीयंतां ॥ ॐश्रियेजातःश्रियआनिरियायश्रियंवयोजरितृभ्योददाति ।
श्रियंवसानाअमृतत्वमायन्भवंतिसत्यासमिथामितद्रौ ॥ श्रियएवैनंतच्छ्रियामादधातिसंततमृचावषट्कृत्यंसंतत्यैसंधीयतेप्रजयापशुभिर्यएवंवेद ॥
(मंगलार्तिक्यंपठित्वा) उत्तरनीराजनंस० ॥ कर्पूरगौरंकरुणावतारंसंसारसारंभुजगेंद्रहारंसदावसंतंहृदयारविंदेभवंभवानीसहितंनमामि ॥
मंदारमालाकुलतालकायैकपालमालांकितशेखराय ॥ दिव्यांबरायैचदिगंबरायनमःशिवायैचनमःशिवाय ॥ कर्पूरपूरेणमनोहरेणसुवर्णपात्रोदर
संस्थितेन ॥ प्रदीप्तभासासहसंगतेननीराजनंतेजगदीशकुर्वे ॥ कर्पूरमंगलार्तिक्यदीपं० ॥ ॐयज्ञेनयज्ञमयजंतदेवाः ॥ तानिधर्माणिप्रथ
मान्यासन् ॥ तेहनाकंमहिमानःसचंते ॥ यत्रपूर्वेसाध्याःसंतिदेवाः ॥ ॐराजाधिराजायप्रसह्यसाहिने ॥ नमोवयंवैश्रवणायकुर्महे ॥
समेकामान्कामकामायमह्यं ॥ कामेश्वरोवैश्रवणोददातु ॥ कुबेरायवैश्रवणाय ॥ महाराजायनमः ॥ ॐस्वस्तिसाम्राज्यंभौज्यंस्वाराज्यंवैराज्यं
पारमेष्ठ्यंराज्यंमाहाराज्यमाधिपत्यमयंसमंतपर्यायीस्यात्सार्वभौमःसार्वायुषआंतादापरार्धात् ॥ पृथिव्यैसमुद्रपर्यंतायाएकराळितितदप्येषश्लो
कोभिगीतोमरुतःपरिवेष्टारोमरुत्तस्यावसन्गृहे ॥ आविक्षितस्यकामप्रेर्विश्वेदेवाःसभासदइति ॥ योवैतांब्रह्मणोवेद ॥ अमृतेनावृतांपुरीं ॥
तस्मैब्रह्मचब्रह्माच ॥ आयुःकीर्तिंप्रजांददुः ॥ नारायणायविद्महेवासुदेवायधीमहि ॥ तन्नोविष्णुःप्रचोदयात् ॥ श्री.म० मंत्रपुष्पंस० ॥
नमस्करोमि ॥ यानिकानिचपापानिजन्मांतरकृतानिच ॥ तानितानिविनश्यंतिप्रदक्षिणंपदेपदे ॥ पापोहंपापकर्माहंपापात्मापापसंभवः ॥ त्राहि
मांकृपयादेवशरणागतवत्सल ॥ अन्यथाशरणंनास्तित्वमेवशरणंमम ॥ तस्मात्कारुण्यभावेनरक्षरक्षपरमेश्वर ॥ अपराधसहस्राणिक्रियंते
ऽहर्निशंमया ॥ दासोहमितिमांमत्वाक्षमस्वपरमेश्वर ॥ प्रार्थनांनमस्कारान्सम० ॥ शंखमध्येस्थितंतोयंभ्रामितंकेशवोपरि ॥ अंगलग्नंम

नुष्याणांब्रह्महत्यांव्यपोहति ॥ बाणरावणचंडीशनंदीभृंगीजटाधरः ॥ सदाशिवप्रसादोयंसर्वेगृण्हंतुशांभवाः ॥ विष्वक्सेनोद्धवाक्रूरसनकाद्याःशुकादयः ॥ महाविष्णुप्रसादोयंसर्वेगृण्हंतुवैष्णवाः ॥ प्रल्हादनारदपराशरपुंडरीकव्यासांबरीषशुकशौनकभीष्मदाल्भ्याम् ॥ रुक्मांगदार्जुनवसिष्ठविभीषणादीनपुण्यानिमांपरमभागवतान्स्मामि ॥ सनकादिकदेवेभ्योनमःसकलपूजार्थेगंधाक्षतपुष्पंसमर्पयामि ॥ अकालमृत्युहरणंसर्वव्याधिविनाशनं ॥ विष्णुपादोदकंतीर्थंजठरेधारयाम्यहं ॥ यस्यस्मृत्याचनामोक्त्यातपोपूजाक्रियादिषु ॥ न्यूनंसंपूर्णतांयातिसद्योवंदेतमच्युतं ॥ अनेनयथाज्ञानेनकृतपूजनेनश्रीभगवान्परमेश्वरःप्रीयतांनमम ॥ ॐतत्सद्ब्रह्मार्पणमस्तु ॥

## ॥ अथलक्ष्मीसूक्तं ॥

॥ श्री ॥ ॐहिरण्यवर्णांहरिणींसुवर्णरजतस्रजां । चंद्रांहिरण्मयींलक्ष्मींजातवेदोममावह ॥ तांमआवहजातवेदोलक्ष्मीमनपगामिनीं । यस्यांहिरण्यंविंदेयंगामश्वंपुरुषानहं । अश्वपूर्वांरथमध्यांहस्तिनादप्रबोधिनीं ॥ श्रियंदेवीमुपव्हयेश्रीर्मादेवीजुषतां ॥ कांसोस्मितांहिरण्यप्राकारामार्द्रांज्वलंतींतृप्तांतर्पयंतीं । पद्मेस्थितांपद्मवर्णांतामिहोपव्हयेश्रियं । चंद्रांप्रभासांयशसाज्वलंतींश्रियंलोकेदेवजुष्टामुदारां । तांपद्मिनीमींशरणमहंप्रपद्येऽलक्ष्मीर्मेनश्यतांत्वांवृणे ॥ १ ॥ आदित्यवर्णेतपसोधिजातोवनस्पतिस्तववृक्षोथबिल्वः ॥ तस्यफलानितपसानुदंतुमायांतरायाश्चबाह्याअलक्ष्मीः ॥ उपैतुमांदेवसखःकीर्तिश्चमणिनासह ॥ प्रादुर्भूतोसुराष्ट्रेस्मिन्कीर्तिमृद्धिंददातुमे ॥ क्षुत्पिपासामलांज्येष्ठामलक्ष्मीर्नाशयाम्यहं ॥ अभूतिमसमृद्धिंचसर्वांनिर्णुदमेगृहात् ॥ गंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीं ॥ ईश्वरींसर्वभूतानांतामिहोपव्हयेश्रियं ॥ मनसःकाममाकूतिंवाचःसत्यमशीमहि ॥ पशूनांरूपमन्नस्यमयिश्रीःश्रयतांयशः ॥ २ ॥ कर्दमेनप्रजाभूतामयिसंभवकर्दम ॥ श्रियंवासयमेकुलेमातरंपद्ममालिनीं ॥ आपःस्रजंतुस्निग्धानिचिक्लीतवस

भगृहे ॥ निचंदेवींमातरश्रियंवासयमेकुले ॥ आर्द्रांयःकरिणींयष्टींपिंगलांपद्ममालिनीं ॥ चंद्रांहिरण्मयींलक्ष्मींजातवेदोममावह ॥ आर्द्रां
पुष्करिणींपुष्टिंसुवर्णांहेममालिनीं ॥ सूर्यांहिरण्मयींलक्ष्मींजातवेदोममावह ॥ तांमआवहजातवेदोलक्ष्मीमनपगामिनीं ॥ यस्यांहिरण्यंप्रभू
तिंगावोदास्योश्वान्विंदेयंपुरुषानहं ॥ यःशुचिःप्रयतोभूत्वाजुहुयादाज्यमन्वहं ॥ श्रियःपंचदशर्चंचश्रीकामःसततंजपेत् ॥ ३ ॥ यालक्ष्मीः
सिंधुसंभूताभूतिरेषाविभावसु ॥ पद्माविश्वावसुर्देवीसदानोजुषतांगृहं ॥ पद्माननेपद्मनिपद्मसंभवेपद्मप्रियेपद्मदलायताक्षी ॥ विश्वप्रियेविश्वमनोनुकू
लेत्वत्पादपद्मंहृदिसंनिधत्स्व ॥ पद्माननेपद्मऊरूपद्माक्षीपद्मसंभवे ॥ तन्मेभजसिपद्माक्षीयेनसौख्यंलभाम्यहं ॥ अश्वदायैगोदायैधनदायैमहा
धने ॥ धनंमेलभतांदेवींसर्वकामांश्चदेहिमे ॥ पुत्रपौत्रंधनंधान्यंहस्त्यश्वादिगवेरथं ॥ प्रजानांभवसीमाताआयुष्मंतंकरोतुमे ॥ धनमग्निर्धनंवायुर्धनं
सूर्योधनंवसुः ॥ धनमिंद्रोबृहस्पतिर्वरुणोधनमश्नुते ॥ वैनतेयसोमंपिबसोमंपिबतुवृत्रहा ॥ सोमंधनस्यसोमिनोमह्यंददातुसोमिनः ॥ नक्रोधो
नचमात्सर्यंनलोभोनाशुभामतिः । भवंतिकृतपुण्यानांभक्तानांश्रीसूक्तंजपेत् ॥ सरसिजनिलयेसरोजहस्तेधवलतरांशुभगंधमाल्यशोभे । भगवतिहरिव
ल्लभेमनोज्ञेत्रिभुवनभूतिकरिप्रसीदमह्यं ॥ चंद्राभांलक्ष्मीमीशानींसूर्याभांश्रीयमीश्वरीं ॥ चंद्रसूर्याग्निसंकाशांश्रियंलक्ष्मीमुपास्महे ॥ श्रीवर्चस्वमा
युष्यमारोग्यमायुधात्पवमानंमह्यते ॥ धान्यंधनंपशुंबहुपुत्रलाभंशतसंवत्सरंदीर्घमायुः ॥ इतिलक्ष्मीसूक्तं ॥

## ॥ अथविष्णुसूक्तं ॥

॥ श्री ॥ ॐअतोदेवाअवंतुनोयतोविष्णुर्विचक्रमे ॥ पृथिव्याःसप्तधामभिः ॥ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदं ॥ समूळ्हमस्यपांसुरे ॥
त्रीणिपदाविचक्रमेविष्णुर्गोपाअदाभ्यः ॥ अतोधर्माणिधारयन् ॥ विष्णोःकर्माणिपश्यतयतोव्रतानिपस्पशे ॥ इंद्रस्ययुज्यःसखा ॥ तद्वि

ष्णोःपरमंपदंसदापश्यंतिसूरयः ॥ दिवीवचक्षुराततं ॥ तद्विप्रासोविपन्यवोजागृवांसःसमिंधते ॥ विष्णोर्यत्परमंपदं ॥ देवस्यत्वासवितुः प्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यामग्नेस्तेजसासूर्यस्यवर्चसेंद्रस्येंद्रियेणाभिषिंचामि ॥ (बळायश्रियेयशसेन्नाद्यायभूर्भुवःस्वःअमृताभिषेकोस्तु ॥ शांतिःपुष्टिःस्तुष्टिश्चास्तु ) ॥ ऋक्‌शाखीयाविष्णुसूक्तं ॥

## ॥ अथब्रह्मयज्ञः ॥

॥श्री॥ आचम्य ॥ पवित्रपाणिःप्राणानायम्य ॥ श्रीपरमेश्वरप्रीत्यर्थंब्रह्मयज्ञेनयक्ष्ये ॥ ॐविद्युदसिविद्यमेपाप्मानमृतात्सत्यमुपैमि ॥हस्तावनेनिज्य ॥ त्रिराचामेत् ॥ द्विःपरिमृज्य ॥ सकृदुपस्पृश्य ॥ यत्सव्यंपाणिंपादौप्रोक्षति ॥ ५ शिरः । चक्षुषी । नासिके । श्रोत्रे । हृदयमालभ्य ॥ [वामोरूपरि दक्षिणपादंनिधायवामपाणिमुत्तानंदक्षिणजानौनिधाय । तत्रसांकुशंदक्षिणपाणिनापिधायप्रणवव्याहृतीरुच्चार्यगायत्रींपादार्धर्चशःसर्वांपठेत् ] ॐभूः तत्सवितुर्वरेण्यं ॥ ॐभुवःभर्गोदेवस्यधीमहि ॥ ॐस्वःधियोयोनःप्रचोदयात् ॥ ॐभूःतत्स०महि ॥ ॐभुवःधियोयो०त् ॥ ॐस्वःतत्स वि०यात ॥ ॐभर्भु०स्वःतत्स०त् ॥ ॐइषेत्वोर्जेत्वावायवस्थोपायवस्थदेवोवःसविताप्रार्पयतु श्रेष्ठतमायकर्मण आप्यायध्वमघ्निया देवभागमूर्जस्व

---

टीपः—१ हस्तौजलेनप्रक्षाल्यत्रिराचम्य । २ । अंगुष्ठमूलेनद्विरोष्ठौसंमृज्य । ३ । आर्द्रांगुलीभिरोष्ठौसकृदुपस्पृश्य । ४ । दक्षिणहस्तेनसव्यंपाणिं पादौचप्रोक्ष्य ॥ ५ ॥ आर्द्रांगुलीभिःसंस्पृश्य ॥ शिरः,चक्षुषी, नासिके, श्रोत्रे, हृदयमालभ्य (कर्मांगमाचमनं) ॥ संस्काररत्नमाला ॥ ६ ॥ चंद्रचूड, । सिंगाभट्टी द्विवारंव्याहृति त्रिवारंगायत्री । ७ विश्वप्रकाशेव्याहृतित्रिवारंगायत्रीचतुर्वारमुक्ता.

तीःपयस्वतीःप्रजावतीरनमीवाअयक्ष्मामावस्तेनईशतमाघशꣳसोरुद्रस्यहेतिःपरिवोवृणक्तुध्रुवाअस्मिन्गोपतौस्यातबह्वीर्यजमानस्यपशून्पाहि। (इषे
त्रिचत्वारिꣳशत् ॥ ॐयज्ञस्यघोषदसिप्रत्युष्टꣳरक्षःप्रत्युष्टाअरातयःप्रेयमगाद्धिषणाबर्हिरच्छमनुनाकृतास्वधयावितष्टातआवहन्तिकवयःपुरस्ताद्देवे
भ्योजुष्टमिहबर्हिरासदेदेवानांपरिषूतमसिवर्षवृद्धमसिदेवबर्हिर्मात्वान्वङ्मातिर्यक्पर्वतेराध्यासमाच्छेत्तातेमारिषंदेवबर्हिःशतवल्शंविरोहसहस्रवल्शा ॥
विवयꣳरुहेमपृथिव्याःसंपृचःपाहिसुसंभृतात्वासंभराम्यदित्यैरास्नासीन्द्राण्यैसंनहनंपूषातेग्रन्थिंग्रथ्नातुसतेमास्थादिन्द्रस्यत्वाबाहुभ्यामुद्यच्छेबृहस्पतेर्मूर्ध्ना
हराम्युर्वन्तरिक्षमन्विहिदेवंगममसि ॥ (सहस्रवल्शाअष्टात्रिꣳशच्च) ॥ २ ॥

शुन्धध्वंदैव्यायकर्मणेदेवयज्यायैमातरिश्वनोघर्मोसिद्यौरसिपृथिव्यसिविश्वधायाअसिपरमेणधाम्नादृꣳहस्वमाह्वार्वसूनांपवित्रमसिशतधारंवसूनांपवित्र
मसिसहस्रधारꣳहुतस्तोकोहुतोद्रप्सोऽग्नयेबृहतेनाकायस्वाहाद्यावापृथिवीभ्याꣳसाविश्वायुःसाविश्वव्यचाःसाविश्वकर्मासंपृच्यध्वमृतावरीरूर्मिणीर्मधु
मत्तमामन्द्राधनस्यसातयेसोमेनत्वातनच्मीन्द्रायदधिविष्णोहव्यꣳरक्षस्व ॥ सोमेनाष्टौच। ३ । कर्मणेवांदेवेभ्यःशकेयंवेषायत्वाप्रत्युष्टꣳरक्षःप्रत्युष्टाअ
रातयोधूरसिधूर्वधूर्वन्तंधूर्वतंयोऽस्मान्धूर्वतितंधूर्वयंवयंधूर्वामस्त्वंदेवानामसिसस्नितमंपप्रितमंजुष्टतमंवह्नितमंदेवहूतममह्रुतमसिहविर्धानंदृꣳहस्वमाह्वार्मित्र
स्यत्वाचक्षुषाप्रेक्षेमाभेर्मासंविक्थामात्वाहिꣳसिषमुरुवातायदेवस्यत्वासवितुःप्रसवेऽश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यामग्नयेजुष्टंनिर्वपाम्यग्नीषोमाभ्यामिदं
देवानामिदमुनःसहस्फात्यैत्वानारात्यैसुवरभिविख्येषंवैश्वानरंज्योतिर्दृꣳहन्तांदुर्याद्यावापृथिव्योरुर्वन्तरिक्षमन्विह्यदित्यास्त्वोपस्थेसादयाम्यग्नेहव्यꣳर
क्ष ॥ इतिचतुरोनुवाकान्वेदस्वाध्यानधीयंते ॥ ४ ॥ ॐब्रह्मसंधत्तंतन्मेजिन्वतं ॥ क्षत्रꣳसंधत्तंतन्मेजिन्वतं ॥ इषꣳसंधत्तंतांमेजिन्वतं ॥ ऊ
र्जꣳसंधत्तंतांमेजिन्वतं ॥ रयिꣳसंधत्तंतांमेजिन्वतं ॥ पुष्टिꣳसंधत्तंतांमेजि० ॥ प्रजाꣳसंधत्तंतांमेजि० ॥ पशून्संधत्तंतान्मेजि० ॥
स्तुतोसिजनधाः ॥ देवास्त्वाशुक्रपाःप्रणयन्तु ॥ सुवीराःप्रजाःप्रजनयन्परीहि ॥ (ब्राह्मणं) । ॐभद्रंकर्णेभिःशृणुयामदेवाः ॥ भद्रंप

श्येमाक्षभिर्यजत्राः ॥ स्थिरैरंगैस्तुष्टुवां॒संस्तनूभिः ॥ व्यशेमदेवहितंयदायुः ॥ स्वस्तिनइंद्रोवृद्धश्रवाः ॥ स्वस्तिनःपूषाविश्ववेदाः ॥ स्वस्तिनस्ताक्ष्योअरिष्टनेमिः ॥ स्वस्तिनोबृहस्पतिर्दधातु ॥ आपंमापामपःसर्वाः ॥ अस्मादस्मादितोमुतः ॥ अग्निर्वायुश्चसूर्यश्च ॥ सहसंचस्करधियां ॥(अरण) ॐनमोब्रह्मणेधारणंमेअस्त्वनिराकरणंधारयिताभूयासंकर्णयोश्श्रुतंमाच्योढ्वंममामुष्यॐ॥ ऋतंतपःसत्यंतपःश्रुतंतपःशांतंतपोदमस्तपःशमस्तपोदानंतपोयज्ञंतपोभूर्भुवःसुवर्ब्रह्मैतदुपास्यैतत्तपः ॥ यथावृक्षस्यसंपुष्पितस्यदूराद्गंधोवात्येवंपुण्यस्यकर्मणोदूराद्गंधोवातियथासिधारांकर्तेवहितामवक्रामेयद्युवेयुवेहवाविह्वयिष्यामिकर्तंपतिष्यामीत्येवममृतादात्मानंजुगुप्सेत् ॥ ॐअग्निमीळेपुरोहितंयज्ञस्यदेवमृत्विजं ॥ होतारंरत्नधातमं ॥ ॐअग्नआयाहिवीतयेगृणानोहव्यदातये ॥ निहोतासात्सिबर्हिषि ॥ ॐशन्नोदेवीरभिष्टयआपोभवंतुपीतये ॥ शंयोरभिस्रवंतुनः ॥ अथशिक्षांप्रवक्ष्यामि । ( शिक्षा ) ॥ अथातोदर्शपूर्णमासौव्याख्यास्यामः । (कल्पं) ॥ वृद्धिरादैच् । (व्याकरणं) ॥ समाम्नायःसमाम्नातः । (निरुक्त) ॥ मयरसतजभनलगसंमितं(छंद) पंचसंवत्सरमयं । (ज्योतिषं)॥ गौःग्मा । (निघंटु) ॥ अथातोधर्मजिज्ञासा । (पूर्वमीमांसा) ॥ अथातोब्रह्मजिज्ञासा । (उत्तरमीमांसा) ॥ योगीश्वरंयाज्ञवल्क्यं । (धर्मशास्त्रं) ॥ नारायणंनमस्कृत्य । (इतिहास) ॥ ॐनमोब्रह्मणेनमोअस्त्वग्नयेनमःपृथिव्यैनमओषधिभ्यः ॥ नमोवाचेनमोवाचस्पतयेनमोविष्णवेबृहतेकरोमि ॥ त्रिवारंपठेत् ॥ वृष्टिरसिवृश्चमेपाप्मानमृतात्सत्यमुपागां ॥ इत्यपस्पृष्ट्वा ॥ *

---

* टीप— प्रातःसंध्याब्रह्मयज्ञमध्यान्हसंध्यादेवऋषिपितृतर्पणं ॥ अयंक्रमः प्रतापनारसिंहेग्रंथः ॥

## ॥ अथमध्यान्हसंध्या ॥

॥ श्री ॥ ※ आचम्यप्राणानायम्य ॥ ममोपात्तदुरितक्षयद्वाराश्रीपरमेश्वरप्रीत्यर्थंमध्यान्हसंध्यामुपासिष्ये ॥ ॐआपोहिष्ठामयोभुवः०चनः ॥ इतिमार्जनं ॥ ॐआपःपुनंतुपृथिवींपृथिवीपूतापुनातुमां ॥ पुनंतुब्रह्मणस्पतिर्ब्रह्मपूतापुनातुमां ॥ यदुच्छिष्टमभोज्यंयद्वादुश्चरितंमम ॥ सर्वंपुनंतुमामापोसतांचप्रतिग्रहꣳस्वाहा ॥ आचम्य । ॐदधिक्राव्णो० । ॐआपोहिष्ठा०चनः । ॐहिरण्यवर्णाः०मैनसः ॥ आचम्य १ । अर्घ्यदानं । ॐहꣳसःशुचिषद्वसुरंतरिक्षसद्धोतावेदिषदतिथिर्दुरोणसत् ॥ नृषद्वरसदृतसद्व्योमसदब्जागोजाऋतजाअद्रिजाऋतंबृहत् ॥ श्रीसवितासूर्यनारायणायनमःइदमर्घ्यंदत्तंनमम ॥ ॐघृणिःसूर्यआदित्योनप्रभावात्यक्षरं ॥ मधुक्षरंतितद्रसं ॥ सत्यंवैतद्रसमापोज्योतीरसोमृतंब्रह्मभूर्भुवःसुवरोम् ॥ श्रीसवितासूर्य०इदमर्घ्यंदत्तंनमम ॥ ॐभूर्भुवःसुवः ॥ तत्सवितु० । श्रीसवितासूर्यना०दत्तंनमम ॥ (तिष्ठन्अर्घ्यत्रयंदद्यात्) । ॐआपऊर्ध्वंविक्षिं०एवंवेद ।प्रातःसं०। असावादित्योब्रह्म ॥ इतिप्रदक्षिणीकृत्य ॥ आचम्य ॥ सूर्योपस्थानंकुर्यात् ॥ ॐआसत्येनरजसावर्तमानोनिवेशयन्नमृतंमर्त्यंच ॥ हिरण्ययेनसवितारथेनदेवोयातिभुवनाविपश्यन ॥ उद्वयंतमसस्परिपश्यंतोज्योतिरुत्तरं ॥ देवंदेवत्रासूर्यमगन्मज्योतिरुत्तमं । उदुत्यंजातवेदसंदेवंवहंतिकेतवः ॥ दृशेविश्वायसूर्यं ॥ चित्रंदेवानामुदगादनीकंचक्षुर्मित्रस्यवरुणस्याग्नेः ॥ आप्राद्यावापृथिवीअंतरिक्षꣳसूर्यआत्माजगतस्तस्थुषश्च ॥ तच्चक्षुर्देवहितंपुरस्ताच्छुक्रमुच्चरत् ॥ पश्येमशरदःशतंजीवेमशरदःशतंनंदामशरदःशतंमोदामशरदःशतंभवामशरदःशतꣳशृणवामशरदःशतंप्रब्रवामशरदःशतमजीतास्यामशरदःशतंज्योक्सूर्यंदृशे ॥ यउदगान्महतोर्णवाद्विभ्राजमानःसरिरस्यमध्यात्समावृषभोलो

※ टीपः—आचमनादिप्रातःसंध्यावत् ॥ १हꣳसःशुचि०बृहत्इतिमंत्रेणवार्घ्यंदद्यात् । (इतिप्रतापनारसिंहः ॥)

हिताक्षःसूर्यौविपश्चिन्मनसापुनातु ॥ यस्मिन्भूतंचभव्यंचसर्वेलोकाःसमाहिताः ॥ तेनगृण्हामित्वामहंमह्यंगृण्हामित्वामहंप्रजापतिनात्वामह्यं गृण्हाम्यसौ ॥ उपविश्य ॥ ॐमित्येकाक्षरंब्रह्म० ॥ इतिप्रातःसंध्यावत्गायत्रीजपांतंकृत्वा ॥ अष्टमुद्रान्प्रदर्श ॥ संध्यायैनमः० इतिगोत्रोच्चारपर्यंतंकृत्वा ॥ अनेनमध्यान्हसंध्याख्येनकर्मणाभगवान्परमेश्वरःप्रीयतांनमम ॥ ॐतत्सत्ब्रह्मार्पणमस्तु ॥

## ॥ अथदेवर्षिपितृतर्पणं ॥

॥ श्री ॥ आचम्यप्राणानायम्य ॥ अद्यपूर्वो० श्रीपरमेश्वरप्रीत्यर्थंदेवऋषिपितृतर्पणंकरिष्ये । * ब्रह्मादयोयेदेवाः । तान्देवांस्तर्पयामि । सर्वान्देवांस्त० ॥ सर्वान्देवगणांस्त० ॥ सर्वान्देवपत्नींस्त० । सर्वान्देवपुत्रांस्त० । सर्वान्देवपौत्रांस्त० ॥ भूर्देवांस्त० । भुवोदेवांस्त० । सुवर्देवांस्त० । भूर्भुवःसुवर्देवांस्त० ॥ २ निवीती ॥ कृष्णद्वैपायनादयोयेऋषयः ॥ तांऋषींस्त० । सर्वानृषींस्त० । सर्वानृषिगणांस्त० ॥ सर्वानृषिपत्नींस्त० । सर्वानृषिपुत्रांस्त० । सर्वानृषिपौत्रांस्त० ॥ प्रजापतिंकांडऋषिंत० ॥ सोमंकांडऋषिंत० ॥ अग्निंकांडऋषिंस्त० ॥ विश्वानदेवान्कांडऋषींस्त० ॥ सांहिकीर्देवताउपनिषदस्त० ॥ याज्ञिकीर्देवताउपनिषदस्त० ॥ वारुणीर्देवताउप० ॥ ब्रह्माणंस्वयंभुवंत० ॥ सदस्पतिंत० ॥ भूरृषी० । भुवरृषी० ॥ सुवरृषी० ॥ भूर्भवःसुवरृषींस्त० ॥ प्राचीनावीति ॥ ( पितृतीर्थेनस्त्रीनंजलीनदद्यात् ) ॥ सोमःपितृमान्यमोंगिरसोग्निष्वात्ताःकव्यवाहनादयोयेपितरः ॥ तान्पितृंस्त० ॥ सर्वा

---

* टीपः—( यवाक्षतसहितकुशाग्रैरंजलिनादेवतीर्थेनवक्ष्यमाणमंत्रैरेकैकवारंदद्यात् ॥ ) २ ( अंजलिमध्यभागेनद्विवारंऋषितीर्थेनऋषींस्तर्पयेत् ॥ )

न्पितॄꣳस्त० । सर्वान्पितृगणाꣳस्त० । सर्वान्पितृपत्नीꣳस्त० । सर्वान्पितृपुत्राꣳस्त० । सर्वान्पितृपौत्राꣳस्त० । भूःपितॄꣳस्त० । भुवःपितॄꣳस्त० । सुवःपितॄꣳस्त० । भूर्भुवःसुवःपितॄꣳस्तर्पयामि ॥ इत्यंतंजीवत्पितापिकुर्यात् ॥ पितृतर्पणंकुर्यात् * ॥ आब्रह्मस्तंबपर्यंतं देवर्षिपितृमानवाः ॥ तृप्यंतुपितरःसर्वेमातृमातामहादयः ॥ अतीतकुलकोटीनांसप्तद्वीपनिवासिनां ॥ आब्रह्मभुवनाल्लोकानिदमस्तुतिलोदकं ॥ येकेचास्मत्कुलेजाताअपुत्रागोत्रिणोमृताः ॥ तेगृण्हंतुमयादत्तंसूत्रनिष्पीडऽनोदकं ॥ इतिद्वाभ्यामंत्राभ्यांत्रिवारंतर्पयेत् ॥ सूर्यंनमस्कृत्याद्विराचम्य ॥

## ॥ अथ महान्यासः ॥

॥ श्री० ॥ अथातःपंचांगरुद्राणांन्यासपूर्वकंजपहोमार्चनविधिंव्याख्यास्यामः ॥ ॐयातेरुद्रशिवातनूरघोरापापकाशिनी ॥ तयानस्तनुवाशंतंमयागिरिशंताभिचाकशीहि ॥ शिवायैनमः ॥ ॐअस्मिन्महत्यर्णवेंतरिक्षेभवाअधि ॥ तेषाꣳसहस्रयोजनेवधन्वानितन्मसि ॥

---

* टीपः—तातांबात्रितयं (पिता, पितामहप्रपितामह। माता, पितामहि प्रपितामहि) सपत्नजननी (सापत्नमाता) मातामहादित्रयंसस्त्री (मातामह, मातुःपितामह, मातुःप्रपितामह, । मातामही, मातुःपितामही, मातुःप्रपितामहि ) स्त्री (स्त्री) तनयादि (तनय, दुहिता) तातजननीस्वभ्रातरः सस्त्रियः (पितृव्य, मातुल, भ्रातुः सपत्नीक) तातांबात्मभगिन्यपत्यधवयुक् (पितृभगिनी, मातृभगिनी, आत्मभगिनी सभर्तृका) जायापितासद्गुरु (श्वशुर, गुरु) शिष्याप्ताःपितरोमहालयविधौतीर्थेतथातर्पणे ॥ अयंक्रमः ॥

॥ शिरसेस्वाहा ॥ ॐसहस्राणिसहस्रशोयेरुद्राअधिभूम्यां ॥ तेषांसहस्रयोजनेवधन्वानितन्मसि ॥ ललाटायनमः ॥ ॐहं
सःशुचिषद्वसुरंतरिक्षसद्धोतावेदिषदातिथिर्दुरोणसत ॥ नृषद्वरसदृतसद्व्योमसदब्जागोजाऋतजाअद्रिजाऋतंबृहत् ॥ भ्रूमध्यायनमः ॥ ॐत्र्यंबकंय
जामहेसुगंधिंपुष्टिवर्धनं ॥ उर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात् ॥ नेत्राभ्यांनमः ॥ ॐनमःस्रुत्यायचपथ्यायच ॥ कर्णाभ्यांनमः ॥
ॐमानस्तोकेतनयेमानआयुषिमानोगोषुमानोअश्वेषुरीरिषः ॥ वीरान्मानोरुद्रभामितोवधीर्हविष्मंतोनमसाविधेमते ॥ नासिकायैनमः ॥ ॐअ
वतत्यधनुस्त्वंसहस्राक्षशतेषुधे ॥ निशीर्यशल्यानांमुखाशिवोनःसुमनाभव ॥ मुखायनमः ॥ ॐनीलग्रीवाःशितिकंठाःशर्वाअधःक्षमाचराः ॥
तेषांसहस्रयोजनेवधन्वानितन्मसि ॥ कंठायनमः ॥ ॐनीलग्रीवाःशितिकंठादिवंरुद्राउपश्रिताः ॥ तेषांसहस्रयोजने० ॥ उपकंठायनमः ॥
ॐनमस्तेअस्त्वायुधायानातताय्धृष्णवे ॥ उभाभ्यामुततेनमोबाहुभ्यांतवधन्वने ॥ बाहुभ्यांनमः ॥ ॐयातेहेतिर्मीढुष्टमहस्तेबभूवतेधनुः ॥
तयास्मान्विश्वतस्त्वमयक्ष्मयापरिभुज ॥ उपबाहुभ्यांनमः ॥ ॐयेतीर्थानिप्रचरंतिसृकावंतोनिषंगिणः ॥ तेषांसहस्रयोजनेवधन्वानितन्मसि ॥
हस्ताभ्यांनमः ॥ ॐसद्योजातंप्रपद्यामिसद्योजातायवैनमोनमः ॥ भवेभवेनातिभवेभवस्वमां ॥ भवोद्भवायनमः ॥ अंगुष्ठाभ्यांनमः ॥
ॐवामदेवायनमोज्येष्ठायनमःश्रेष्ठायनमोरुद्रायनमःकालायनमःकलविकरणायनमोबलविकरणायनमोबलायनमोबलप्रमथनायनमःसर्वभूतदमना
यनमोमनोन्मनायनमः ॥ तर्जनीभ्यांनमः ॥ ॐअघोरेभ्योथघोरेभ्योघोरघोरतरेभ्यः ॥ सर्वेभ्यःसर्वशर्वेभ्योनमस्तेअस्तुरुद्ररूपेभ्यः ॥ मध्य
माभ्यांनमः ॥ ॐतत्पुरुषायविद्महेमहादेवायधीमहि ॥ तन्नोरुद्रःप्रचोदयात् ॥ अनामिकाभ्यांनमः ॥ ॐईशानःसर्वविद्यानामीश्वरःसर्वभूतानां
ब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्माशिवोमेअस्तुसदाशिवोम् ॥ कनिष्ठिकाभ्यांनमः । ॐनमोवःकिरिकेभ्योदेवानांहृदयेभ्यः ॥ हृदयायनमः ॥
ॐनमोगणेभ्योगणपतिभ्यश्चवोनमः ॥ पृष्ठायैनमः ॥ ॐनमोहिरण्यबाहवेसेनान्येदिशांचपतयेनमः ॥ पार्श्वाभ्यांनमः ॥ ॐनमस्तक्षभ्योरथका

रेभ्यंश्चवोनमः ॥ कक्ष्योः ॥ ॐविज्यंधनुःकपर्दिनोविशल्योबाणवाँ उत ॥ अनेशन्नस्येषवआभुरस्य.निषंगथिः ॥ जठरायनमः ॥ ॐहिरण्यग
र्भःसमवर्तताग्रेभूतस्यजातःपतिरेकआसीत् ॥ सदाधारपृथिवींद्यामुतेमांकस्मैदेवायहविषाविधेम ॥ नाभ्यै० ॥ ॐमीढुष्टमशिवतमशिवोनःसुमना
भव ॥ परमेवृक्षआयुधंनिधायकृत्तिंवसानआचरपिनाकंबिभ्रदागहि ॥ कण्ठ्यैनमः ॥ ॐयेभूतानामधिपतयोविशिखासःकपर्दिनः ॥ तेषाँ सहस्र
योजनेवधन्वानितन्मसि ॥ गुह्यायनमः ॥ ॐसशिराजातवेदाः ॥ अक्षरंब्रह्मसंमितं ॥ वेदानाँ शिरउत्तमं ॥ जातवेदसेशिरसामाता ॥ स्वयं
ब्रह्मभूर्भुवःसुवरोम् ॥ ॐजातवेदसेसुनवामसोममरातीयतोनिदहातिवेदः ॥ सनःपर्षदतिदुर्गाणिविश्वानावेवसिंधुंदुरितात्यग्निः ॥ तामग्निवर्णां
तपसाज्वलंतींवैरोचनींकर्मफलेषुजुष्टां ॥ दुर्गांदेवींशरणमहंप्रपद्येसुतरसितरसेनमः ॥ अग्नेत्वंपारयानव्योअस्मान्स्वस्तिभिरतिदुर्गाणिविश्वा ॥
पूश्चपृथ्वीबहुलानउर्वीभवातोकायतनयायशंयोः ॥ विश्वानिनोदुर्गहाजातवेदःसिंधुंननावादुरितातिपर्षि ॥ अग्नेअत्रिवन्मनसागृणानोस्माकं
बोध्यविता तनूनां ॥ पृतनाजितँ सहमानमुग्रमग्निँ हुवेमपरमात्सधस्थात् ॥ सनःपर्षदतिदुर्गाणिविश्वाक्षामद्देवोअतिदुरितात्यग्निः ॥ अपाना
यनमः ॥ ॐमानोमहांतमुतमानोअर्भकंमानउक्षंतमुतमानउक्षितं ॥ मानोवधीःपितरंमोतमातरंप्रियामानस्तनुवोरुद्ररीरिषः ॥ ऊरुमध्या
भ्यांनमः ॥ ॐएषतेरुद्रभागस्तंजुषस्वतेनावसेनपरोमूजवतोतीह्यवततधन्वापिनाकहस्तःकृत्तिवासाः ॥ जानुभ्यांनमः ॥ ॐसँ सृष्टजित्सोमपाबा
हुशर्ध्यूर्ध्वधन्वाप्रतिहिताभिरस्ता ॥ बृहस्पतेपरिदीयारथेनरक्षोहामित्राँ अपबाधमानः ॥ जंघाभ्यांनमः ॥ ॐविश्वंभूतंभुवनंचित्रंबहुधाजातंजाय
मानंचयत् ॥ सर्वोह्येषरुद्रस्तस्मैरुद्रायनमोअस्तु ॥ गुल्फाभ्यांनमः ॥ ॐयेपथांपथिरक्षयऐलबृदायव्युधः ॥ तेषाँ सहस्रयोजनेवधन्वानितन्मसि ॥
पादाभ्यांनमः ॥ ॐअध्यवोचदधिवक्ताप्रथमोदैव्योभिषक् ॥ अहीँश्चसर्वाञ्जंभयन्त्सर्वाश्चयातुधान्यः ॥ कवचायनमः ॥ ॐनमोबिल्मिने
चकवचिनेच ॥ उपकवचायनमः ॥ ॐनमोअस्तुनीलग्रीवायसहस्राक्षायमीढुषे ॥ अथोयेअस्यसत्वानोहंतेभ्योकरंनमः ॥ तृतीयनेत्रायनमः ॥

ॐप्रमुंचधन्वंनस्त्वमुभयोरार्त्नियोर्ज्यां ॥ याश्चतेहस्तइषवःपराताभगवोवप ॥ अस्त्रायनमः ॥ ॐयएतावंतश्चभूयांसश्चदिशारुद्रावितास्थिरे ॥
तेषा० ॥ इतिदिग्बंधः ॥ ॐनमोभगवतेरुद्रायेतिनमस्कारंन्यसेत् ॥ ॐॐमूर्ध्नेनमः ॥ ॐनं नासिकायैनमः ॥ ॐ मोंललाटायनमः ॥ ॐभं
मुखायनमः ॥ ॐगंकंठायनमः ॥ ॐवंहृदयायनमः ॥ ॐतें दक्षिणहस्तायनमः ॐरुं वामहस्तायनमः ॥ ॐद्रां नाभ्यैनमः ॥ ॐयं पादा
भ्यांनमः ॥ ॐसद्योजातं०नमः ॥ पादाभ्यांनमः ॥ ॐवामदेवायनमो० ॥ ऊरुमध्याभ्यांनमः ॥ ॐअघोरेभ्योथघोरेभ्योघोरघोरतरेभ्यः ॥
सर्वेभ्यःसर्वशर्वेभ्योनमस्तेअस्तुरुद्ररूपेभ्यः ॥ हृदयायनमः ॥ ॐतत्पुरुषाय० ॥ मुखायनमः ॥ ॐईशानःसर्वविद्यानामीश्वरःसर्वभूता ॥
नांब्रह्माधिपतिब्रह्मणोधिपतिर्ब्रह्माशिवोमेअस्तुसदाशिवोम् ॥ ॐशिरसेस्वाहा ॥ ॐहंसायनमः ॥ ॐपरमहंसायनमः ॥ हंसहंसेतियोब्रूयाद्धंसोना
मसदाशिवः ॥ एवंन्यासविधिंकृत्वाततःसंपुटमारभेत् ॥ ॐत्रातारमिंद्रमवितारमिंद्रंहवेहवेसुहवंशूरमिंद्रं ॥ हुवेनुशक्रंपुरुहूतमिंद्रंस्वस्ति
नोमघवाधात्विंद्रः ॥ ललाटस्थानेइंद्रायनमः ॥ ॐत्वंनोअग्नेवरुणस्यविद्वान्देवस्यहेडोअवयासिसीष्ठाः ॥ यजिष्ठोवह्नितमःशोशुचानोविश्वाद्वेषां
सिप्रमुमुग्ध्यस्मत् ॥ नेत्रस्थानेअग्नयेनमः ॥ ॐसुगंनःपंथामभयंकृणोतुयस्मिन्नक्षत्रेयमएतिराजा ॥ यस्मिन्नेनमभ्यषिंचंतदेवास्तदस्य
चित्रंहविर्यजाम ॥ कर्णस्थानेयमायनमः ॥ ॐअसुन्वंतमयजमानमिच्छस्तेनस्येत्यांतस्करस्यान्वेषि ॥ अन्यमस्मदिच्छसातइत्यानमो
देविनिर्ऋतेतुभ्यमस्तु ॥ मुखस्थानेनिर्ऋतये० ॥ ॐतत्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोध्यु
रुशंसमानआयुःप्रमोषीः ॥ बाहुस्थानेवरुणाय० ॥ ॐआनोनियुद्भिःशतिनीभिरध्वरंसहस्रिणीभिरुपयाहियज्ञं ॥ वायोअस्मिन्हविषिमाद
यस्वयूयंपातस्वस्तिभिःसदानः ॥ नासिकास्थानेवायवे० ॥ ॐवयंसोमव्रतेतव ॥ मनस्तनूषुबिभ्रतः । प्रजावंतोअशीमहि ॥ हृदि
स्थानेसोमा० ॥ ॐतमीशानंजगतस्तस्थुषस्पतिंधियंजिन्वमवसेहूमहेवयं ॥ पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धःस्वस्तये ॥ नाभिस्था

नेईशानाय० ॥ ॐअस्मेरुद्रामेहनापर्वतासोवृत्रहत्येभरहूतौसजोषाः ॥ यःशंसतेस्तुवतेधायिपज्रइंद्रज्येष्ठाअस्मांअवंतुदेवाः ॥ मूर्ध्निस्था
नेएकादशरुद्रेभ्यो० ॥ स्योनापृथिविभवानृक्षरानिवेशनी ॥ यच्छानःशर्मसप्रथाः ॥ पादस्थानेभूम्यैनमः ॥ ॐएतत्संपुटमिंद्रादीन्दिक्षुविन्य
स्यैवमेवात्मनिरौद्रीकरणंकृत्वा ॥ त्वगस्थिगतैःपापैःप्रमुच्यतेसर्वभूतेष्वपराजितोभवति ॥ ततोयक्षराक्षसगंधर्वभूतप्रेतपिशाचयमदूतशाकिनी
डाकिनीसर्पश्वापदतस्कराद्युपद्रवाद्युपघाताःसर्वेज्वलंतंपश्यंतु ॥ मांरक्षंतु ॥ यजमानंरक्षंतु ॥ मनोज्योतिर्जुषतामाज्यंविच्छिन्नंयज्ञꣳसं
मिमंदधातु ॥ याइष्टाउषसोनिम्रुचश्चताःसंदधामिहविषाघृतेन ॥ गुह्यायनमः ॥ ॐअबोध्यग्निःसमिधाजनानांप्रतिधेनुमिवायतीमुषासं ॥
यह्वाइवप्रवयामुज्जिहानाःप्रभानवःसिस्रतेनाकमच्छ ॥ जठराय० ॥ ॐमूर्धानंदिवोअरतिंपृथिव्यावैश्वानरमृतायजातमग्निं ॥ कविꣳसम्रा
जमतिथिंजनानामासन्नापात्रंजनयंतदेवाः ॥ हृदयायनमः ॥ ॐमर्माणितेवर्मभिश्छादयामिसोमस्त्वाराजामृतेनाभिवस्तां ॥ उरोर्वरीयोवरिव
स्तेअस्तुजयंतंत्वामनुमदंतुदेवाः ॥ मुखायनमः ॥ जातवेदायदिवापावकोसि ॥ वैश्वानरोयदिवावैद्युतोसि ॥ शंप्रजाभ्योयजमानायलोकं ॥
ऊर्जंपुष्टिंददद्भ्यावव्रत्स्व ॥ शिरसेस्वाहा ॥ आत्मरक्षाकर्तव्या ॥ ॐब्रह्मात्मन्वदसृजत ॥ तदकामयत ॥ समात्मनापद्येयेति ॥ आत्मन्नात्म
न्नित्यामंत्रयत ॥ तस्मैदशमꣳहूतःप्रत्यशृणोत् ॥ सदशहूतोभवत् ॥ दशहूतोहवैनामैषः ॥ तंवाएतंदशहूतꣳसंतं ॥ दशहोतेत्याचक्षतेपरो
क्षेण ॥ परोक्षप्रियाइवहिदेवाः ॥ आत्मन्नात्मन्नित्यामंत्रयत ॥ तस्मैसप्तमꣳहूतःप्रत्यशृणोत् ॥ ससप्तहूतोभवत् ॥ सप्तहूतोहवैनामैषः ॥
तंवाएतꣳसप्तहूतꣳसंतं ॥ सप्तहोतेत्याचक्षतेपरोक्षेण ॥ परोक्षप्रियाइवहिदेवाः ॥ आत्मन्नात्मन्नित्यामंत्रयत ॥ तस्मैषष्ठꣳहूतःप्रत्यशृणोत् ॥
सषड्ढूतोभवत् ॥ षड्ढूतोहवैनामैषः ॥ तंवाएतꣳषड्ढूतꣳसंतं ॥ षड्ढोतेत्याचक्षतेपरोक्षेण ॥ परोक्षप्रियाइवहिदेवाः ॥ आत्मन्नात्मन्नित्यामं
त्रयत ॥ तस्मैपंचमꣳहूतःप्रत्यशृणोत् ॥ सपंचहूतोभवत् ॥ पंचहूतोहवैनामैषः ॥ तंवाएतंपंचहूतꣳसंतं ॥ पंचहोतेत्याचक्षतेपरोक्षेण ॥

स्वस्तिनोबृहस्पतिर्दधातु ॥ पश्चात्क्षि० ॥ ॐत्रातारमिंद्रमवितारमिंद्रꣳहवेहवेसुहवꣳशूरमिंद्रं ॥ हुवेनुशक्रंपुरुहूतमिंद्रꣳस्वस्तिनो
मघवाधात्विंद्रः ॥ उत्तरतःक्षिपेत् ॥ ऊर्ध्वऊषुणेतिऊर्ध्वंक्षिपेत् ॥ ॐऊर्ध्वऊषुणऊतयेतिष्ठादेवोनसविता ॥ ऊर्ध्वोवाजस्यसनितायदंजिभिर्वाघ
द्भिर्विह्वयामहे ॥ स्योनापृथिवीतिपृथिव्यां ॥ ॐस्योनापृथिविभवानृक्षरानिवेशनी ॥ यच्छानःशर्मसप्रथाः ॥ गंधद्वारेतिमृदमादाय ॥
ॐगंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीं ॥ ईश्वरीꣳसर्वभूतानांतामिहोपह्वयेश्रियं ॥ उदुत्यंजातवेदसमितिआदित्यायदर्शयित्वा ॥ ॐउदु
त्यंजातवेदसंदेवंवहंतिकेतवः ॥ दृशेविश्वायसूर्यं ॥ सहस्रशीर्षात्र्यंबकमितिद्वाभ्यांशिरसिआलिप्य ॥ ॐसहस्रशीर्षापुरुषः ॥ सहस्राक्षः
सहस्रपात् ॥ सभूमिंविश्वतोवृत्वा ॥ अत्यतिष्ठद्दशांगुलं ॥ ॐत्र्यंबकंयजामहेसुगंधिंपुष्टिवर्धनं ॥ उर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात् ॥
ॐश्रीर्मेभजतु ॥ ललाटे ॥ अलक्ष्मीर्मेनश्यतु । आत्मानंहस्तेनशिरःप्रदक्षिणीकृत्य ॥ हस्तौप्रक्षाल्य ॥ पुनरादाय ॥ ॐविष्णुंमुखावै
देवाश्छंदोभिरिमांल्लोकाननपजय्यमभ्यजयन् ॥ मुखे । ॐओजोग्रीवाभिर्निर्ऋतिमस्थभिरिंद्रꣳस्वपसावहेनरुद्रस्यविचलस्कंधोहोरात्रयोर्द्वितो
योर्द्धमासानांतृतीयोमासांचतुर्थऋतूनांपंचमसंवत्सरस्यषष्ठः ॥ इतिग्रीवायां ॥ ॐमहाꣳइंद्रोवजबाहुःषोडशीशर्मयच्छतु ॥ स्वस्तिनोमघवाक
रोतुहंतुपाप्मानंयोस्मान्द्वेष्टि ॥ बाह्वोः ॥ ॐसोमानꣳस्वरणंकृणुहिब्रह्मणस्पते ॥ कक्षीवंतंयऔशिजं ॥ कक्ष्योः । ॐशरीरंयज्ञश
मलंकुसीदंतस्मिन्सीदतुयोस्मान्द्वेष्टि ॥ शरीरं ॥ ब्रह्मजज्ञानंप्रथमंपुरस्ताद्विसीमतःसुरुचोवेनआवः ॥ सबुध्नियाउपमाअस्यविष्ठाःसतश्चयोनि
मसतश्चविवः ॥ स्तनौ ॥ ॐनाभिर्मेचित्तंविज्ञानं ॥ नाभिं ॥ ॐआपांतमन्युस्तृपलप्रभर्माधुनिःशिमीवांछरुमाꣳऋजीषी ॥
सोमोविश्वान्यतसावनानिनार्वागिंद्रंप्रतिमानानिदेभुः ॥ कट्योः ॥ ॐविष्णोरराटमसिविष्णोःपृष्ठमसिविष्णोश्नप्त्रेस्थोविष्णोःस्यूरसिविष्णोर्ध्रु

वर्मसिवैष्णवर्मसिविष्णवेत्वा ॥ पृष्ठे ॥ ॐप्रायुर्मेपचितिर्भसत ॥ पायौ (गद) ॥ ॐवरुणस्यस्कंभनमसिवरुणस्यस्कंभसर्जनमसिप्रत्यस्तोवरुणस्य
पाशः ॥ मेंन्द्रयोः ॥ ॐआनंदनंदावांडौमे ॥ भगःसौभाग्यंपसः ॥ आंडौ ॥ ॐऊरूवोरोजोरिष्टाविश्वान्यंगानितनूः ॥ तनुवामेसहनमस्तेअ
स्तुमामाहिंसीः ॥ इत्युर्वोः ॥ ॐजंघांभ्यांपभ्यांवमोसिविशिराजाप्रतिष्ठितः ॥ जंघयोः ॥ ॐचरणंपवित्रंवितंतंपुराणंयेनपूतस्तर
तिदुष्कतानि ॥ तेनपवित्रेणशुद्धेनपूताः ॥ अतिपाप्मानमरातितरेम ॥ चरणौ ॥ ॐइदंविष्णुर्विचक्रमेत्रेधा निदधेपदं ॥ समूढमस्यपा
ंसुरे ॥ पादयोः ॥ ॐत्रीणिपदाविचक्रमेविष्णुर्गोपाअदाभ्यः ॥ अतोधर्माणिधारयन् ॥ पादतले । एवंविलिप्य ॥ सजोषाइंद्रसगणइतिशेषंदूर्वा
सहितंलोष्टंशिरसिनिधाय ॥ ॐसजोषाइंद्रसगणोमरुद्भिःसोमंपिबवृत्रहंच्छूरविद्वान् ॥ जहिशत्रूंरपमृधोनुदस्वाथाभयंकृणुहिविश्वतोनः ॥
यद्पांक्रूरंयदमेध्यंयदशांतंतदपगच्छतात् ॥ अत्याशनादतीपानाद्यचउग्रात्प्रतिग्रहात् ॥ तन्नोवरुणोराजापाणिनाह्यवमर्शतु ॥ सोहमपापो
विरजो निर्मुक्तोमुक्तकिल्बिषः ॥ नाकस्यपृष्ठमारुह्यगच्छेद्ब्रह्मसलोकतां ॥ यश्चाप्सुवरुणःसपुनात्वघमर्षणः ॥ ॐसुमित्रानआपओषधयःसंतु ।
अंजलावपआनीय । दुर्मित्रास्तस्मैभूयासुः । प्रथमं । योस्मान्द्वेष्टि । इतिद्वितीयं । यंचवयंद्विष्मः । जलांजलिंतीरेविसृजेत्स्नात्वाचम्य । भस्मस्नानं ।
भस्मादायाभिमंत्रयेत् ॥ ॐअग्निरितिभस्म ॥ वायुरितिभस्म ॥ जलमितिभस्म ॥ स्थलमितिभस्म ॥ व्योमेतिभस्म । सर्वंहवाइदं
भस्म ॥ ॐईशानःसर्वविद्यानामीश्वरःसर्वभूतानांब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्माशिवोमेअस्तुसदाशिवोम् ॥ शिरसि ॥ ॐतत्पुरुषायविद्महे
महादेवायधीमहि ॥ तन्नोरुद्रःप्रचोदयात् ॥ मुखे ॥ ॐअघोरेभ्योथघोरेभ्योघोरघोरतरेभ्यः ॥ सर्वेभ्यःसर्वशर्वेभ्योनमस्तेअस्तुरुद्ररूपे
भ्यः ॥ हृदये ॥ ॐवामदेवायनमोज्येष्ठायनमःश्रेष्ठायनमोरुद्रायनमःकालायनमःकलविकरणायनमोबलविकरणायनमोबलायनमोबलप्रथनायनमः

सर्वंभूतदमनायनमोंमनोन्मनायनमः ॥ गुह्ये ॥ ॐसद्योजातंप्रपद्यामिसद्योजातायवैनमोनमः ॥ भवेभवेनातिभावेभवस्वमां ॥ भवोद्भवायनमः ॥
पादयोः ॥ प्रणवेनसर्वांगेभस्मविलिप्य ॥ स्नात्वाचम्य ॥ गोमयमादाय ॥ ॐगंधद्वारां० श्रियं । ॐअग्रमग्रंचरंतीनामोषधीनांवनेवने ॥ तासामृषभंप
त्नीनांपवित्रंकायशोधनं ॥ तन्मेरोगांश्चशोकांश्चनुदगोमयसर्वदा ॥ शिरःप्रभृत्यंगानिविलिप्य ॥ आपोहिष्ठेतितिसृभिःहिरण्यवर्णाइतिच
तसृभिःपवमानःसुवर्जनइत्येतैर्मंत्रैःशिरसिमार्जयेत् ॥ ॐआपोहिष्ठा० चनः ॥ ॐहिरण्यवर्णाःशुचयःपावकायासुजातःकश्यपोया
स्विंद्रः ॥ अग्निंयागर्भंदधिरेविरूपास्तानआपःशꣳस्योनाभवंतु ॥ यासाꣳराजावरुणोयातिमध्येसत्यानृतेअवपश्यंजनानां ॥ मधु
श्चुतःशुचयोयाःपावकास्तानआपःशꣳस्योनाभवंतु ॥ यासांदेवादिविकृण्वंतिभक्षंयाअंतरिक्षेवहुधाभवंति ॥ याःपृथिवींपयसोंदंतिशुक्रा
स्तानआपःशꣳस्योनाभवंतु ॥ शिवेनंमाचक्षुषापश्यतापःशिवयातनुवोपस्पृशतत्वचंमे ॥ सर्वाꣳअग्नीꣳरप्सुषदोहुवेवोमयिवर्चोबलमो
जोनिधत्त ॥ ॐपवमानःसुवर्जनः ॥ पवित्रेणविचर्षणिः ॥ यःपोतासपुनातुमा ॥ पुनंतुमादेवजनाः ॥ पुनंतुमनवो
धिया ॥ पुनंतुविश्वआयवः ॥ जातवेदःपवित्रवत् ॥ पवित्रेणपुनाहिमा ॥ शुक्रेणदेवदीद्यत् ॥ अग्नेक्रत्वाक्रतूꣳरनु ॥ यत्तेपवि
त्रमर्चिषि ॥ अग्नेविततमंतरा ॥ ब्रह्मतेनपुनीमहे ॥ उभाभ्यांदेवसवितः ॥ पवित्रेणसवेनच ॥ इदंब्रह्मपुनीमहे ॥ वैश्वदेवीपुनत
देव्यागात् ॥ यस्यैबह्वीस्तनुवोवीतपृष्ठाः ॥ तयामदंतःसधमाद्येषु ॥ वयꣳस्यामपतयोरयीणां ॥ वैश्वानरोरश्मिभिर्मापुनातु ॥ वातः
प्राणेनेषिरोमयोभूः ॥ द्यावापृथिवीपयसापयोभिः ॥ ऋतावरीयज्ञियेमापुनीतां ॥ बृहद्भिःसवितस्तृभिः ॥ वर्षिष्ठैर्देवमन्मभिः ॥ अग्नेदक्षैः
पुनाहिमा ॥ येनदेवाअपुनत ॥ येनापोदिव्यंकशः ॥ तेनदिव्येनब्रह्मणा ॥ इदंब्रह्मपुनीमहे ॥ यःपावमानीरध्येति ॥ ऋषिभिः
सभृतꣳरसं ॥ सर्वꣳसपूतमश्नाति ॥ स्वदितंमातरिश्वना ॥ पावमानीर्योअध्येति ॥ ऋषिभिःसंभृतꣳरसं ॥ तस्मैसरस्वतीदुहे ॥ क्षी

रꣳसर्पिर्मधूदकं ॥ पावमानीःस्वस्त्ययनीः ॥ सुदुघाहिपयस्वतीः ॥ ऋषिभिःसंभृतोरसः ॥ ब्राह्मणेष्वमृतꣳहितं ॥ पावमानीर्दिशंतुनः ॥
इमंलोकमथोअमुं ॥ कामान्त्समर्धयंतुनः ॥ देवीर्देवैःसमाभृताः ॥ पावमानीःस्वस्त्ययनीः ॥ सुदुघाहिघृतश्चुतः ॥ ऋषिभिःसंभृतोर
सः ॥ ब्राह्मणेष्वमृतꣳहितं ॥ येनदेवाःपवित्रेण ॥ आत्मानंपुनतेसदा ॥ तेनसहस्रधारेण ॥ पावमान्यःपुनंतुमा ॥ प्राजापत्यंपवि
त्रं ॥ शतोद्यामꣳहिरण्मयं ॥ तेनब्रह्मविदोवयं ॥ पूतंब्रह्मपुनीमहे ॥ इंद्रःसुनीतीसहमापुनातु ॥ सोमःस्वस्त्यावरुणःसमीच्या ॥
यमोराजाप्रमृणाभिःपुनातुमा ॥ जातवेदामोर्जयंत्यापुनातु ॥ हिरण्यशृंगमितितीर्थंप्रार्थयेत् ॥ ॐहिरण्यशृंगंवरुणंप्रपद्येतीर्थंमेदेहियाचितः ॥
यन्मयाभुक्तमसाधूनांपापेभ्यश्चप्रतिग्रहः ॥ यन्मेमनसावाचाकर्मणावादुष्कृतंकृतं ॥ तन्नइंद्रोवरुणोबृहस्पतिःसविताचपुनंतुपुनःपुनः ॥
नमोग्नयेप्सुमतेनमइंद्रायनमोवरुणायनमोवारुण्यैनमोद्भ्यः ॥ यदपांक्रूरंयदमेध्यंयदशांतंतदपगछतात् ॥ अत्याशनादतीपानाद्यच्चउग्रा
त्प्रतिग्रहात् ॥ तन्नोवरुणोराजापाणिनाह्यवमर्शतु ॥ सोहमपापोविरजोनिर्मुक्तोमुक्तकिल्बिषः ॥ नाकस्यपृष्ठमारुह्यगछेद्ब्रह्म
सलोकतां ॥ यश्चाप्सुवरुणःसपुनात्वघमर्षणः ॥ इमंमेगंगेतिदक्षिणहस्तांगुष्ठमप्सुत्रिःप्रदक्षिणमावर्तयित्वा ॥ ॐइमंमेगंगेयमुनेसरस्व
तिशुतुद्रिस्तोमꣳसचतापरुष्णिया ॥ असिक्रियामरुद्वृधेवितस्तयार्जीकीयेशृणुह्यासुषोमया ॥ ऋतंचसत्यमितिजपित्वा ॥ ॐऋतंचसत्यंचाभीद्धात्त
पसोध्यजायत ॥ ततोरात्रिरजायततततःसमुद्रोअर्णवः ॥ समुद्रादर्णवादधिसंवत्सरोअजायत ॥ अहोरात्राणिविदधद्विश्वस्यमिषतोवशी ॥
सूर्याचंद्रमसौधातायथापूर्वमकल्पयत् ॥ दिवंचपृथिवींचांतरिक्षमथोसुवः ॥ यत्पृथिव्याꣳरजस्वमांतरिक्षेविरोदसी ॥ इमाꣳस्तदापोवरुणःपु
नात्वघमर्षणः ॥ पुनंतुवसवःपुनातुवरुणःपुनात्वघमर्षणः ॥ एषभूतस्यमध्येभुवनस्यगोप्ता ॥ एषपुण्यकृतांलोकानेषमृत्योर्हिरण्मयं ॥
द्यावापृथिव्योर्हिरण्मयꣳसꣳश्रितꣳसुवः ॥ सनःसुवःसꣳशिशाधि ॥ आर्द्रंज्वलतिज्योतिरहमस्मि ॥ ज्योतिर्ज्वलतिब्रह्माहमस्मि ॥ योह

मस्मिब्रह्माहमस्मि ॥ अहमस्मिब्रह्माहमस्मि ॥ अहमेवाहंमांजुहोमिस्वाहा ॥ अकार्यकार्यवकीर्णीस्तेनोभ्रूणहागुरुतल्पगः ॥ वरुणोपामघ
मर्षणःस्तस्मात्पापात्प्रमुच्यते ॥ रजोभूमिस्त्वमाꣳरोदयस्वप्रवदंतिधीराः ॥ आक्रान्त्समुद्रःप्रथमेविधर्मंजनयन्प्रजाभुवनस्यराजा ॥ वृषापवित्रे
अधिसानोअव्येबृहत्सोमोवावृधेस्वानइंदुः ॥ ॐप्रजापतेरक्ष्यश्वयत्तत्परापतत्तदश्वोभवद्यदश्वयत्तदश्वस्याश्वत्वंतद्देवाअश्वमेधेनैवप्रत्यंदधुरेषवै
प्रजापतिꣳसर्वंकरोतियोश्वमेधेनयजंतेसर्वएवभवतिसर्वस्यवाएषाप्रायश्चित्तिःसर्वस्यभेषजꣳसर्वंवाएतेनपाप्मानंदेवाअतरन्नपिवाएतेनंब्रह्महत्यामतर
न्त्सर्वंपाप्मानं ॥ तरतितरंतिब्रह्महत्यांयोऽश्वमेधेनयजंतेयउचैनमेवंवेदोत्तरंवैतत्प्रजापतेरक्ष्यश्वयत्तस्मादश्वस्योत्तरतोवंद्यान्तिदक्षिणतोऽन्येषांपशूनां
वेतसःकटोभवत्यप्सुयोनिर्वाअश्वोऽप्सुजोवेतसःस्वएवैनंयोनौप्रतिष्ठापयतिचतुष्टोमःस्तोमोभवतिसरड्वाअश्वस्यसक्थ्यावृहत्तद्देवाश्चतुष्टोमेनैवप्रत्यंद
धुर्यच्चतुष्टोमःस्तोमोभवत्यश्वस्यसर्वत्वाय ॥ ॐआपोइदꣳसर्वंविश्वाभूतान्यापःप्राणावाआपःपशवआपोन्नमापोमृतमापःसंम्राडापोविराडापःस्व
राडापःछंदाꣳस्यापोज्योतीꣳष्यापोयजूꣳष्यापःसत्यमापःसर्वादेवताआपोभूर्भुवःसुवरापओं ॥ सर्वेषुवाएषुलोकेष्ववसितपन्नोति ॥ नमोग्नयेप्सु
मतइतिनमस्कारंकृत्वा ॥ ॐनमोग्नयेप्सुमतेनमइंद्रायनमोवरुणायनमोवारुण्यैनमोद्भ्याः ॥ यदपांक्रूरंयदमेध्यंयदशांतंतदपगच्छत । अत्या
शनाद्तीपानाद्यच्चउग्रात्प्रतिग्रहात् । तन्नोवरुणोराजापाणिनाह्यवमर्शतु । सोहमपापोविरजोनिर्मुक्तोमुक्तकिल्बिषः ॥ नाकस्यपृष्ठमारुह्यगच्छे
द्ब्रह्मसलोकतां ।' यश्चाप्सुवरुणःसपुनात्वघमर्षणः ॥ इतिदक्षिणस्यांगुष्ठेनजलमालोड्य ॥ इमंमेगंगेतिजलमभिमंत्र्य ॥ ॐइमंमेगंगे०
मेया ॥ द्रुपदादिवमुंचतु ॥ द्रुपदादिवेन्मुमुचानः ॥ स्विन्नःस्नात्वीमलादिव ॥ पूतंपवित्रेणेवाज्यं ॥ आपःशुंधंतुमैनसः ॥ अघम
र्षणंकृत्वा ॥ नासिकांधृत्वा ॥ जुंबकायस्वाहेति ॥ जुंबकायस्वाहेत्यवभृथउत्तमःमाहुतिंजुहोति ॥ वरुणोवैजुंबकः ॥ अंततएववरुण

मवंयजते ॥ खलतेर्विक्लिधस्यंशुक्लस्यांपिंगाक्षस्यंमूर्धंजुंहोति ॥ एतद्वैवरुणस्यरूपं ॥ रूपेणैववरुणमवंयजते ॥ निमज्जसम्यक्स्नात्वाचम्य ॥ व्याहृतिभिःदेवऋषिपितृंस्तर्पयेत् ॥ स्नानांगतर्पणंकुर्यात् ॥ ब्रह्मादयोयेदेवाः ॥ तांदेवाꣳस्तर्पयामि ॥ भूर्देवाꣳस्त० ॥ भुवोदेवाꣳस्त० ॥ सुवर्देवाꣳस्त० ॥ भूर्भुवःसुवर्देवाꣳस्त० ॥ निवीती ॥ कृष्णद्वैपायनादयोयेऋषयः ॥ तानृषीꣳस्त० ॥ भूर्ऋषीꣳस्त० ॥ भुवर्ऋषीꣳस्त० । सुवर्ऋषिꣳस्त० ॥ भूर्भुवःसुवर्ऋषिꣳस्त० ॥ प्राचीनावीती ॥ सोमःपितृमान्यमोंगिरस्वोग्निष्वात्ताःकव्यवाहनादयायेपितरः ॥ तान्पितृꣳस्त० ॥ भूःपितृꣳस्त० ॥ भुवःपितृꣳस्त० ॥ सुवःपितृस्त० ॥ भूर्भुवःसुवःपितृꣳस्तर्प० ॥ इतितर्पयित्वा ॥ यन्मयादूषितंतोयंशारीरमलसंभवं ॥ तस्यपापविशुध्यर्थंयक्ष्माणंतर्पयाम्यहं ॥ अग्निदग्धाश्चयेजीवायेप्यदग्धाःकुलेमम ॥ भूमौदत्तेनतोयेनतृप्तायांतिपरांगतिं ॥ शुचीवोहव्याइतिमंत्रेणवस्त्रमाद्भिःप्रोक्ष्य ॥ ॐशुचींहव्यामरुतःशुचीनाꣳशुचिꣳहिनोम्यध्वरꣳशुचिभ्यः ॥ ऋतेनसत्यमृतसापआयञ्छुचिजन्मानःशुचयःपावकाः ॥ देवस्यत्वेतिवस्त्रमादाय ॥ ॐदेवस्यत्वा०माददे ॥ उदुत्यंजातवेदसमित्यादित्यायदर्शयित्वा ॥ ॐउदुत्यंजातवेदसं०सूर्यं ॥ अवधूतꣳरक्षोइतिवस्त्रमवधूय ॥ ॐअवधूतꣳरक्षोवधूताअरातयः ॥ आवहंतीतिपंचभिर्वाक्यैर्वासःपरिधाय ॥ ॐआवहंतीवितन्वाना ॥ कुर्वाणाचीरमात्मनः ॥ वासाꣳसिममगावश्च ॥ अन्नपानेचसर्वदा ॥ ततोमेश्रियमावह ॥ लोमशांपशुभिःसहस्वाहा ॥ वासःपरिधाय ॥ द्विराचम्य ॥ तिलकानिकृत्वा ॥ आचम्यप्राणानायम्य ॥ श्रीपरमे०उत्सर्जनांगंपंचगव्यभक्षणंप्राशनंचकरिष्ये

---

टीप—* त्रीन्प्राणायामंकृत्वा ॥ यथाशक्तिगायत्रींजपेत् ॥ नमस्कारान्प्रदक्षिणानिकृत्वाब्राह्मणःपूतोभवति ॥

गायत्र्यागोमूत्रं ॥ गंधद्वारेतिगोमयं ॥ आप्यायस्वेतिक्षीरं ॥ दधिक्राव्णोतिदधि ॥ शुक्रमसीतिघृतं ॥ देवस्यत्वेतिकुशोदकं ॥ प्रणवे नालोड्य ॥ यज्ञियकाष्ठेननिर्मथ्य ॥ प्रणवेनाभिमंत्र्य ॥ ॐयत्वगस्थिगतंपापंदेहेतिष्ठतिमामके ॥ प्राशनंपंचगव्यस्यदहत्वग्निरिवेंधनम् ॥ ॐप्राश्याचम्य ॥ आचम्यसर्वेःसहपवित्रपाणिःप्राणानायम्य ॥ अद्यपूर्वोच्च० शुभतिथौश्रीपरमेश्वरप्रीत्यर्थंउत्सर्जनांगभूतंप्राजापत्यादिनवकांडऋषिस्थापनंपूजनंचकरिष्ये ॥ अग्नेःपूर्वतःपीठेतंडुलकृतस्थंडिलेदर्भमयानपूगीफलेषुवाऋषीनावाहयेत् ॥ निवीतीभूत्वा ॥ अस्मिनकुशव टौॐभूर्भुवःसुवःप्रजापतयेकांडऋषयेनमः ॥ प्रजापतिंकांडऋषिमावाहयामि ॥ अस्मिनकु० ॐभूर्भुवःसुवःसोमायकांडऋषयेनमःसोमंकांड ऋषिमा० ॥ २ ॥ अस्मि० ॐभूर्भु० अग्नयेकांडऋषये० । अग्निंकांडऋषिमा० ॥ ३ ॥ अ० ॐभूर्भुवःसु० विश्वेभ्योदेवेभ्यःकांड ऋषिभ्योन० ॥ विश्वान्देवान्कांडऋषिनावाह० ॥ ४ ॥ अस्मिन्० ॐभूर्भु०सांहितीभ्योदेवताभ्यउपनिषभ्द्यो० ॥ सांहितीर्देव ताउपनिषदआ० ॥ ५ ॥ अस्मि० ॐभूर्भु० याज्ञिकीभ्योदेवताभ्यउपनिषभ्द्योन० ॥ याज्ञिकीर्देवताउपनिषद० ॥ ६ ॥ अस्मि० ॐभूर्भु० वारुणीभ्योदेवताभ्यउपनिषभ्द्योन० ॥ वारुणीर्देवताउपनिषद० ॥ ७ ॥ अस्मिनॐभर्भु० ब्रह्माणंस्वयं भुवे० ॥ ब्रह्माणंस्वयंभुवमा० ॥ ८ ॥ अस्मिन० ॐभूर्भु०सदसस्पतयेनमः ॥ सदसस्पति० ॥ ॐनयंप्रजांमेगो पाय ॥ अमृतत्वायंजीवसें ॥ जातांजनिष्यमाणांच ॥ अमृतेंसत्येप्रतिष्ठितां ॥ सुप्रतिष्ठितमस्तु ॥ ॐभूर्भुवःसुवःप्राजापत्यादिनवकांडऋषिभ्यो

---

टीप—१ त्रिपलं २ अंगुष्ठपरिमितं ३ सप्तपलं ४ सप्तपलं ५ एंकपलं ६ (गंगातीरेपंचगव्यंनकारयेत )पंचगव्यस्नानंतत्तन्मंत्रैःकुर्यात् (इतियाजुषचिंतामणौ

नमःप्राजापत्यादिनवकांडऋषींध्यायामीतिषोडशोपचारैःसंपूज्य ॥ ॐऋषेयऋषिर्वाएतानिर्मितायत्सोमिश्रन्यस्तायदसंयुक्तास्युःप्रजयापशुभिर्य जमानस्यविर्तिष्ठेरन्नर्ध्यचौंसन्दधातिसंयुक्तेनैवनास्ताअस्मैसंयुक्ताअवरुद्धाःसर्वामाशिषंदुन्हे ॥ मंत्रपुष्पांजलिसम० ॥ प्रार्थयामि । नमस्क रोमि ॥ अनेनकृतपूजनेनपूर्वाराधनेनप्राजापत्यादिनवकांडऋषयःप्रीयंतां ॥ इतिऋषिपूजनं ॥ अथऋषितर्पणं ॥ सव्येसहानिवीती भूत्वानवकांडऋषींस्तर्पयेत् ॥ प्रजापतिंकांडऋषिंतर्पयामि ॥ सोमंकांडऋषिंतर्पयामि ॥ अग्निंकांडऋषिंतर्प० ॥ विश्वान्देवान्कांड ऋषींत० ॥ सा०हिकीर्देवताउपनिषदस्त० ॥ याज्ञिकीर्देवताउपनिषदस्तर्प० ॥ वारुणीर्देवताउपनिषदस्तर्प० ॥ ब्रह्माण०स्वयंभुवंतर्प० ॥ सदसस्पतिंतर्प० ॥ १ ॥ इतितर्पयित्वा ॥ अग्निंप्रतिष्ठाप्य । अद्यपूर्वोच्चारित० उत्सर्जनांगंहवनंकर्तुंस्थंडिलादिसकलंकर्मकरिष्ये ॥ यत्राग्निस्थाप्य तेतत्रप्रादेश(हस्त)मात्रं (श्वततंडुलचूर्णेन)चतुरस्रंस्थंडिलंकल्पयित्वा ॥ प्राचीरुदकसं०स्थाः ॥ उदीचीप्राक्सं०स्थाःतिस्रःतिस्रोरेखालिखित्वा ॥ अद्भिरवोक्ष्य ॥ भूर्भुवःसुवरोमित्यग्निंप्रतिष्ठाप्य ॥ शेषमुत्सृज्य ॥ अप्रचानीयपात्रेअक्षतोदकंनिक्षिप्य ॥ उत्तरेणपूर्वेणवान्यतोयमुप दध्यात् ॥ एतद्धार्येनविद्यते ॥ अग्निमिध्वा ॥ ॐचत्वारि०भवॐभूर्भुवस्सुवः ॥ तत्सवितुर्वरेण्यं ॥ भर्गोदेवस्यधीमहि ॥ धियोयोनःप्रचोदयात् ॥ परिषिच्य ॥ अलंकृत्य ॥ अग्नयेनमः ॥ हुतवहायनमः ॥ हुताशिनेनमः ॥ कृष्णवर्त्मनेनमः ॥ देवमुखायनमः ॥ सप्तजिव्हायनम ॥ वैश्वनरायनमः ॥ जातवेदसेनमः ॥ ॐअदितेनुमन्यस्व ॥ ॐअनुमतेनुमन्यस्व ॥ ॐसरस्वतेनुमन्यस्व ॥ ॐदेवसवितः प्रसुवा ॥ परिस्तीर्य ॥ दक्षिणोत्तरैरुत्तराधरैःप्रागुदगग्रैर्दर्भैरग्निंपारिस्तृणाति । दक्षिणाःप्रागग्रैःपित्र्येषु ॥ उत्तरेणाग्निंप्रागग्रांदर्भा

---

१ दीप पूर्वे २ दक्षिणे ३ पश्चिमे ४ उत्तरतः ५ ईशानीमारभ्येशानीपर्यंतंअग्रेरंभसापरिषिच्य ६ पूर्वादिअष्टदिक्षु

न्सꣳस्तीर्य ॥ तेषुद्वंद्वन्यंचिपात्राणिप्रयुनक्ति ॥ दर्व्याज्यस्थाल्यौप्रोक्षणपूर्णपात्रेइध्मस्रुवाविति ॥ समौसाग्रौद्वौदर्भौप्रादेशमात्रेपवित्रेकृत्वाऽद्भि
रनुमृज्य ॥ प्रोक्षणपात्रेनिधायप्रोक्ष्य ॥ अपरेणाग्निंपवित्रांतर्हितेपात्रेऽपआनीय ॥ हस्तयोरंगुष्ठोपकनिष्ठिकाभ्यामुदगग्रेगृहीत्वा ॥ प्राची
स्त्रिरुत्पूय ॥ पात्राण्युत्तानानिकृत्वा ॥ इध्मंविस्रस्य ॥ सर्वाणिपात्राणित्रिःप्रोक्षति ॥ प्रोक्षणीपात्रंदक्षिणतोनिधाय ॥ पूर्णपात्रमा
दायपूर्ववत्कृत्वा ॥ मुखसममुधृत्य ॥ उत्तरेणाग्निंतंडुलोपरिदर्भेषुसादयित्वादर्भैःप्रछाद्य ॥ ब्राह्मणंदक्षिणतोदर्भेषुनिपात्य ॥ अस्मिन्नु
त्सर्जनाख्येकर्मणित्वंब्रह्माभव ॥ ब्रह्मणेनमःइदमासनंअष्टार्ध्यैःसंपूर्णार्चनमस्तुआज्यंविलाप्य ॥ अपरेणाग्निंपवित्रांतर्हितायामाज्यस्था
ल्यामाज्यंनिरूप्य ॥ उदीचोंगारान्निरूह्य ॥ तेष्वंगारेष्वाज्यमधिश्रित्य ॥ ज्वलतादर्भेणावद्युत्य ॥ द्वेदर्भाग्रेःप्रछिद्यप्रक्षाल्याज्येप्राक्षिप्य ॥
पुनर्ज्वलतानेनैवदर्भेणआज्यंसहत्रिःपर्यग्निकृत्वा । तदुल्मुकंनिरस्य । अप० । उदगुद्वस्यांगारान्प्रत्यूह्य ॥ उदगग्राभ्यांपवित्राभ्यांपुनराहारमाज्यं
त्रिरुत्पूय ॥ पवित्रग्रंथिंविस्रस्य ॥ प्रागग्रमग्नौप्रहरति ॥ अग्नेःपश्चात्तदर्भेष्वाज्यस्थालींप्रतिष्ठाप्य ॥ स्रुक्स्रुवावग्नौप्रतितप्य ॥ दर्भाग्रैःसंमार्ष्टि ॥
॥ * स्रुवमग्रैरंतरतोभ्याकारꣳसर्वतोबिलमभिसमाहारंमूलैर्दंडं ॥ आज्यपात्रस्योत्तरतोस्रुवंनिधाय ॥ जुहूमग्रैरंतरतोभ्याकारंप्राचींमध्यैर्बाह्यतः
प्रतीचींमूलैर्दंडं ॥ पुनःप्रातितप्यप्रोक्ष्य ॥ स्रुवमुत्तरतोनिधाय ॥ दर्भानद्भिःसꣳस्पृश्यअग्नौप्रहरति ॥ परिधीन्परिदधाति ॥ स्थविष्ठंपश्चात् ॥
दाक्षिणतोणीयाꣳसंदीर्घं ॥ अनिष्ठꣳह्रस्वमुत्तरतः ॥ उदगग्रंमध्यमंप्रागग्राावितरौमध्यमंपरिधिमुपस्पृश्य ॥ पुरस्तादूर्ध्वेद्वेआघारसमिधावा

---

टीप —१ प्रतापनारसिंहः * पुरस्तात्प्रत्यगपवर्गंदक्षिणतउदगपवर्गमुत्तरतोदक्षिणापवर्गं

दधाति ॥ आग्नेय्यामेकामितरामैशान्यां ॥ अग्निंपरिषिच्य ॥ ॐअदितेनुमन्यस्व ॥ अनुमतेनुमन्यस्व । सरस्वतेनुमन्यस्व । देवसवितःप्रसुव ॥
समिधमेकामवशिष्य ॥ पंचदशेध्मानादधाति ॥ इध्ममलंकृत्य ॥ स्वयमलंकृत्य ॥ ब्रह्माणमलंकृत्य ॥ इध्ममूलमध्याग्रेषुस्रुवेण
त्रिरभिघार्य ॥ मूलमध्ययोर्मध्यभागेगृहीत्वाअस्मिनवेदोत्सर्जनहोमेब्रह्मन्हनइध्मानाधास्ये ॥ आधत्स्व ॥ आसनात्किंचिदुत्थाय ॥ उपविश्य ॥
स्रुवेणाज्यमादायस्रुचिंपूरयित्वा ॥ उत्तरपरिधिसंधिमन्ववहृत्यप्रजापतिंमनसाध्यायनदक्षिणाप्रांचमृजुःसंततमाघारयति ॥ ॐप्रजापतयेस्वा०
प्रजापतयइ० ॥ स्रुचाद्वितीयमेंद्रमितरपरिधिसंधिमन्ववहृत्यइंद्रंमनसाध्यायनजुहोति ॥ ॐइंद्रायस्वा०इंद्रायेदं० ॥ ॐअग्नयेस्वा०अग्नयइ० ॥
उत्तरपूर्वदेश ॥ ॐसोमायस्वा०सोमायेदं०दक्षिणपूर्वदेशे ॥ समंपूर्ववणयथोपदेशं ॥ प्रधानाहुतीर्हुत्वा ॥ अग्नयेस्वाहेतिअग्निमुखाहुतिंजुहोति ॥
चतुर्गृहीतमाज्यंगृहीत्वा ॥ ॐप्रजापतयेकांडऋषयेस्वाहा ॥ प्रजापतयेकांडऋषयइदं० ॥ इतिसर्वत्रत्यागः ॥ ॐसोमायकांडऋषयेस्वाहा ॥
सोमायकांडऋषयइ० ॥ ॐअग्नयेकांडऋ० । अग्न० । ॐविश्वेभ्योदेवेभ्यःकांडऋषिभ्यःस्वा० ॥ विश्वेभ्योदेवेभ्यःकांडऋषिभ्यइ० ॥ ॐसा
ंहितीभ्योदेवताभ्यउपनिषद्भ्यःस्वा० ॥ सांहितीभ्योदेवताभ्यइ० ॥ ॐयाज्ञिकीभ्योदेवताभ्यउपनिषद्भ्यःस्वा० ॥ याज्ञिकीभ्योदेवताभ्य
उपनिषद्भ्यस्वा० । याज्ञिकी० ॥ ॐवारुणीभ्योदेवताभ्यउपनिषद्भ्यःस्वाहा ॥ वारुणीभ्योदेवताभ्यउपनिषद्भ्यइ० ॥ ॐब्रह्मणेस्वयंभुवे
स्वा ॥ ब्रह्मणे० । ॐसदसस्पतयेस्वाहा ॥ सदसस्पतयइ० ॥ ॐसदसस्पतिमद्भुतंप्रियमिंद्रस्यकाम्यं ॥ सनिंमेधामयासिषःस्वाहा ॥
सदसस्पतयइदं० ॥ चतुरोवेदान्जुहोति ॥ चतुर्गृहीतमाज्यंगृहीत्वा ॥ ॐअग्निमीळेपुरोहितंयज्ञस्यदेवमृत्विजं ॥ होतारंरत्नधातमंस्वाहा ॥
ऋग्वेदायेदं० ॥ ॐइषेत्वोर्जेत्वावायवस्थोपायवस्थदेवोवःसवितापार्पयतुश्रेष्ठतमायकर्मणेस्वाहा ॥ यजुर्वेदायेदं० ॥ ॐअग्नआयाहिवीत

येंगृणानोहव्यदातये ।। निहोतासत्सिबर्हिषिस्वाहा ।। सामवेदायेदं० ।। ॐशन्नोदेवीरभिष्टय आपोभवंतुपीतये ।। शंयोरभिस्त्रवंतुनःस्वाहा ।।
अथर्ववेदायेदं० ※।। ततःतिलसक्तुहोमंकुर्यात् ।। अतीतसंवत्सरकृतदोषपरिहारार्थंतिलांजुहोमिसरसाꣳसपिष्टानहत्यादिभिःस्वाहाकारांतैःपंचविंश
तिमंत्रैःघृतसक्तुविमिश्रमिश्रिताहुतर्हिष्यामि ।। ( मंत्रोक्तदेवताभ्यइदंनममेतिसर्वत्रत्यागः ) ।। ॐतिलांजुहोमिसरसाꣳसपिष्टानगंधारममचित्तेरमंतु
स्वाहा । श्रियाऽ० । १ । ॐगावोहिरण्यंधनमन्नपानꣳसर्वेषाꣳश्रियैस्वाहा । श्रिया० । २ । ॐश्रियंचलक्ष्मिंचपुष्टिंचकीर्तिंचानृण्यतां ।। ब्रह्मण्यं
बहुपुत्रतां । श्रद्धामेधेप्रजाःसंददातुस्वा० । श्रिया० । ॐतिलाःकृष्णास्तिलाःश्वेतास्तिलाःसौम्यावशानुगाः । तिलाःपुनंतुमेपापंयत्किंचिद्दुरितंमं
यिस्वाहा ।। श्रिया० ।। ४ ।। ॐचोरस्यान्नंनवश्राद्धब्रह्महागुरुतल्पगः ।। गोस्तेयꣳसुरापानंभ्रूणहत्यातिलाशांतिꣳशमयंतुस्वा० ।। श्रिया०
।। ५ ।। ॐश्रीश्चलक्ष्मीश्चपुष्टीश्चकीर्तिंचानृण्यतां ।। ब्रह्मण्यंबहुपुत्रतां ।। श्रद्धामेधेप्रज्ञातुजातवेदःसंददातुस्वाहा ।। श्रिया० ।। ६ ।।
ॐप्राणापानव्यानोदानसमानामेशुध्यंतांज्योतिरहंविरजाविपाप्माभूयासꣳस्वाहा ।। प्राणादिभ्योदेवता० ।। ॐवाङ्मनःश्चक्षुश्श्रोत्रजिव्हाघ्रा
णरेतोबुध्य्याकूतिःसंकल्पामेशुध्यंतांज्योतिरहंवि० ।। वाङ्मनादिभ्योदे० ।। ॐत्वक्चर्ममाꣳसरुधिरमेदोमज्जास्नायवोस्थीनिमेशुध्यंतांज्यो
तिर० ।। त्वगादिभ्योदे० ।। ॐशिरःपाणिपादपार्श्वपृष्ठोरूदरजंघशिश्नोपस्थपायवोमेशुध्यंतांज्योति० ।। शिरादिभ्योदे० ।। १० ।।
उत्तिष्ठपुरुषहरितपिंगललोहिताक्षिदेहिदेहिददापयितामेशुध्यंतांज्योतिर० ।। उत्तिष्ठादिभ्योदेव० ।। ॐपृथिव्यापस्तेजोवायुराकाशामेशुध्यंतां

---

टीपः—अवदानधर्मेणरावदाय ।। २ स्रुवेणस्रुचमुपस्तीर्यमध्यात्पूर्वार्धात्चावदाय ।। हविरवत्तंचाभिघार्य ।।

ज्योतिर्० ॥ पृथ्व्यादिभ्योदे० ॥ ॐशब्दस्पर्शरूपरसगंधामेशुध्यंतांज्योतिर्० ॥ शब्दादिभ्योदे० ॥ ॐमनोवाक्कायकर्माणिमेशुध्यंतांज्यो
तिरहं० ॥ मनसादिभ्यो० ॥ ॐअव्यक्तभावैरहंकारैर्ज्योतिरहंवि० ॥ अव्यक्तादिभ्योदेवताभ्यइ० ॥ ॐआत्मामेशुध्यंतांज्योतिर्०
॥ आत्मनेदं० ॥ ॐअंतरात्मामेशुध्यंताज्योतिर्० ॥ अंतरात्मनइ० ॥ ॐपरमात्मामेशुध्यंतांज्यो० ॥ परमात्मनइ० ॥ ॐक्षुधे
स्वाहा ॥ क्षुधेदं० ॥ ॐक्षुत्पिपासायस्वाहा ॥ क्षुत्पिपासायेद० ॥ ॐविविट्यैस्वाहा ॥ विविट्यायेदं० ॥ ॐऋग्विधानायस्वाहा ॥
ऋग्विधानायेदं० ॥ ॐकषोत्कायस्वाहा ॥ कषोत्कायेदं० ॥ ॐक्षुत्पिपासामलंज्येष्ठामलक्ष्मीनाशयाम्यहं ॥ अभूतिमसमृद्धिंचसर्वांनिर्णुदमेपा
प्मानꣳस्वाहा ॥ क्षुत्पिपासायेदं० ॥ ॐअन्नमयप्राणमयमनोमयाविज्ञानमयमानंदमयमात्मामेशुध्यंतांज्योतिरहंविरजाविपाप्माभूयासꣳस्वाहा ॥
अन्नादिभ्योदेवताभ्यइदं ।२५। इत्येतैर्मंत्रैर्हुत्वासर्वपापविनिर्मुक्तोभवति ॥ अथ ब्रह्मयज्ञः ॥ आचम्यप्राणानायम्य ॥ उत्सर्जनांगंश्रीपरमे
श्वरप्रीत्यर्थंब्रह्मयज्ञेनयक्ष्ये ॥ दर्भेष्वासीनोदर्भान्धारयमाणः । ॐविद्युदसिविद्यमेपाप्मानमृतात्सत्यमुपैमि । * हस्तावंवनुज्य ॥ त्रिराचामेत् ॥
द्विःपरिमृज्य ॥ सकृदुपस्पृश्य ॥ यत्सव्यंपाणिंपादौप्रोक्षति ॥ ५ शिरः । चक्षुषी । नासिके । श्रोत्रे । हृदयमालभ्य ॥ ( वामोरूपरिदक्षिण
पादंनिधायवामपाणिमुत्तानंदक्षिणजानौनिधाय ॥ तत्रसांकुशंदक्षिणपाणिनापिधाय ॥ प्रणवव्याहृतीरुक्त्वागायत्रींपादार्धर्चशःसर्वांपठेत् )

---

टीप:— *हस्तौजलेनंप्रक्षाल्य ॥ १ त्रिराचम्य । २ । अंगुष्ठमूलेनद्विरोष्ठौसंमृज्य । ३ । आर्द्रांगुलीभिरोष्ठौसकृदुपस्पृश्य । ४ । दक्षिणहस्तेनसव्यं
पाणिंपादौचप्रोक्ष्य ॥ ५ ॥ आर्द्रांगुलीभिःसंस्पृश्य ॥ (कर्मांगमाचनं) ॥ संस्काररत्नमाला ॥ ६ ॥

ॐ भूः तत्सवितुर्वरेण्यं ॥ ॐ भुवः भर्गो देवस्य धीमहि ॥ ॐ स्वः धियो यो ० त् ॥ ॐ भूः तत्स ० महि ॥ ॐ भुवः धियो यो ० त् । ॐ स्वः
तत्स ० यात् ॥ ॐ भूर्भुव ० स्वः तत्स ० त् ॥ ॐ इषे त्वोर्जे त्वा वायव स्थोपायव स्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण आप्यायध्वमघ्न्या देवभागमूर्ज
स्वतीः पयस्वतीः प्रजावतीरनमीवा अयक्ष्मा मा व स्तेन ईशत माघशꣳसो रुद्रस्य हेतिः परि वो वृणक्तु ध्रुवा अस्मिन् गोपतौ स्यात बह्वीर्यजमानस्य पशून्पाहि ॥ ॐ
यज्ञस्य घोषदसि प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातयः प्रेयमगाद्धिषणा बर्हिरच्छ मनुना कृता स्वधया वितष्टा त आवहन्ति कवयः पुरस्ताद्देवेभ्यो जुष्टमिह बर्हिरासदे दे
वानां परिषूतमसि वर्षवृद्धमसि देवबर्हिर्मा त्वान्वङ्मा तिर्यक्पर्व ते राध्यासमाच्छेत्ता ते मा रिषं देवबर्हिः शतवल्शं विरोह सहस्रवल्शा वि वयꣳ रुहेम पृथिव्याः सं
पृचः पाहि सुसम्भृता त्वा सम्भराम्यदित्यै रास्नासीन्द्राण्यै सन्नहनं पूषा ते ग्रन्थिं ग्रथ्नातु स ते मास्थादिन्द्रस्य त्वा बाहुभ्यामुद्यच्छे बृहस्पतेर्मूर्ध्ना हराम्युर्वन्तरिक्षमन्वि
हि देवङ्गममसि ॥ शुन्धध्वं दैव्याय कर्मणे देवयज्यायै मातरिश्वनो घर्मोऽसि द्यौरसि पृथिव्यसि विश्वधाया असि परमेण धाम्ना दृꣳहस्व मा ह्वार्वसूनां पवित्रमसि
शतधारं वसूनां पवित्रमसि सहस्रधारम् । हुतस्तोको हुतो द्रप्सोऽग्नये बृहते नाकाय स्वाहा द्यावापृथिवीभ्याꣳ सा विश्वायुः सा विश्वकर्मा सा विश्वधायाः सम्पृच्य
ध्वमृतावरीरूर्मिणीर्मधुमत्तमा मन्द्रा धनस्य सातये सोमेन त्वातनच्मीन्द्राय दधि विष्णो हव्यꣳ रक्षस्व ॥ ३ ॥ कर्मणे वां देवेभ्यः शकेयं वेषाय त्वा प्रत्युष्टꣳ रक्षः प्र
त्युष्टा अरातयो धूरसि धूर्व धूर्वन्तं धूर्व तं योऽस्मान्धूर्वति तं धूर्व यं वयं धूर्वामस्त्वं देवानामसि सस्नितमं पप्रितमं जुष्टतमं वह्नितमं देवहूतममह्रुतमसि हविर्धानं दृꣳहस्व
मा ह्वार्मित्रस्य त्वा चक्षुषा प्रेक्षे मा भेर्मा संविक्था मा त्वा हिꣳसिषमुरु वाताय देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपाम्यग्नीषो
माभ्यामिदं देवानामिदमु नः सह स्फात्यै त्वा नारात्यै सुवरभि विख्येषं वैश्वानरं ज्योतिर्दृꣳहन्तां दुर्या द्यावापृथिव्योरुर्वन्तरिक्षमन्विह्यदित्यास्त्वोपस्थे सादया
म्यग्ने हव्यꣳ रक्षस्व । इति चतुर्गेनुवाका न्वेदस्याध्यानधीयते ॥ ४ ॥ ॐ ब्रह्म संधत्तं तन्मे जिन्वतं ॥ क्षत्रꣳ संधत्तं तन्मे जिन्वतं ॥ इषꣳ संधत्तं तां मे जिन्वतं ॥

ऊर्ज॑ꣳसं॒धत्त॒न्ताम्मे॑जिन्वतं ॥ र॒यिꣳसं॒धत्त॒तांम्मे॑जिन्वतं ॥ पुष्टि॒ꣳसं॒धत्त॒त्ताम्मे॑जि० ॥ प्र॒जाꣳसं॒धत्त॒ताम्मे॑जि० ॥ प॒शूꣳसं॒धत्त॒तान्मे॑जि० । स्तु॒तो॑सि॒ जनं॑धाः ॥ दे॒वास्त्वा॑शु॒क्र॒पाः॒प्रण॑यंतु ॥ सु॒वीरा॑ःप्र॒जाःप्र॒ज॒नय॒न्परी॑हि ॥ ॐभ॒द्रंकर्णे॑भिःशृणुयामदेवाः ॥ भ॒द्रंप॑श्येमा॒क्षभि॒र्यज॑त्राः ॥ स्थि॒रैरंगै॑स्तुष्टु॒वाꣳसस्त॒नूभिः॑ ॥ व्यशे॑म॒दे॒वहि॑तं॒यदायुः॑ ॥ स्व॒स्ति॒न॒इंद्रो॑वृ॒द्धश्र॑वाः ॥ स्व॒स्तिनः॑पू॒षावि॒श्ववे॑दाः ॥ स्व॒स्ति॒न॒स्तार्क्ष्यो॑अरि॑ष्टनेमिः ॥ स्व॒स्ति॒नो॒बृह॒स्पति॑र्दधातु ॥ आपं॑मापा॒मपः॒सर्वाः॑ ॥ अ॒स्मा॒द॒स्मा॒दि॒तो॒मुतः॑ ॥ अ॒ग्निर्वा॒युश्च॒सूर्य॑श्च ॥ स॒हस्त्रं॒च॒स्कर॒र्धिया॑ ॥ ॐनमो॒ब्रह्म॑णे धा॒रणं॑मे॒अ॒स्त्वनि॑राकरणं॒धा॒रयि॑ताभूयासं॒कर्ण॑यो॒श्रु॒तंमाच्यो॑ढ्वंममा॒मुष्य॒ॐ ॥ ऋ॒तं॑तपः॒स॒त्यंत॑पः॒श्रु॒तंत॑पः॒शा॒न्तंत॑पो॒दम॒स्तपः॒शम॒स्तपो॒ दा॒नंत॑पो॒यज्ञं॑त॒पो॒भूर्भु॒वः॒सुव॒र्ब्रह्मै॒तदु॒पास्यै॒ तत्तपः॑ ॥ यथा॑वृ॒क्षस्य॒सं॒पु॒ष्पि॒तस्य॒दू॒राद्गं॒धो॒वा॒ति॒यथा॑सिधा॒रां॒क॒र्तेवं॒हि॒तामवक्रा॒मे॒यद्यु॒वेयु॒वेहवा॒वि॒ह्वयि॑ष्यामि॒क॒र्तपं॑ ति॒ष्यामी॒त्ये॒वम॒मृता॒दा॒त्मानं॑जु॒गुप्से॑त् ॥ ॐअ॒ग्निमी॑ळे पु॒रोहि॑तं॒य॒ज्ञस्य॑दे॒वमृ॒त्विजं॑ ॥ होता॑रंर॒त्न॒धात॑मं ॥ ॐअग्न॒आया॑हिवी॒तये॑गृ॒णानो॑ह॒व्यदा॑तये ॥ निहोता॑सत्सिब॒र्हिषि॑ ॥ ॐशन्नो॑दे॒वीर॒भिष्ट॑य॒आपो॑भवंतु॒पी॒तये॑ ॥ शंयोर॒भिस्र॑वंतुनः ॥ अथशिक्षांप्रवक्ष्यामि ॥ अथतोदर्शपूर्णमासौव्याख्यास्यामः । वृद्धिरादैच् । समाम्नायःसमाम्नातः ॥ मयरसतजभनलगसंमितं । पंचसंवत्सरमयं । गौःग्मा । अथातोधर्मजिज्ञासा । अथातोब्रह्मजिज्ञासा । योगीश्वरंयाज्ञवल्क्यं । नारायणंनमस्कृत्य । ॐतच्छं॒योरावृ॑णीमहे । गा॒तुंय॒ज्ञाय॑ । गा॒तुंय॒ज्ञप॑तये । दैवी॑स्व॒स्तिर॑स्तुनः ॥ स्व॒स्तिर्मानु॑षेभ्यः । ऊ॒र्ध्वंजि॑गातुभेष॒जं । शंनो॑अस्तुद्वि॒पदे॑ । शंचतु॑ष्पदे ॥ ॐनमो॒ब्रह्म॑णे॒नमो॑अस्त्व॒ग्नये॒नमः॑पृथि॒व्यै॒नम॒ओष॑धीभ्यः । नमो॑वा॒चेनमो॑वा॒चस्पत॑ये॒नमो॒विष्ण॑वेबृ॒ह॒तेक॑रोमि ॥ त्रिवारंपठेत् ॥ ॐवृष्टि॑रसि॒वृश्च॑मेपा॒प्मान॒मृता॒त्स॒त्यमुपा॑गां ॥ इत्यपउपस्पृश्य ॥ उत्सृष्टावेदाः ॥ समित्संन्नहनंजयादिःब्रह्मविसर्जनांते ॥ अग्नयेस्वाहा ॥ अग्नयइदं ॥ रुद्रायतंतिचरायस्वाहा ॥ रुद्रायतंतिचरायेदं० ॥ उत्सर्जनहोमप

॥ श्राव

॥ ३८

तिष्ठासिध्यर्थंवृद्धिकामःजयादिहोमंकारय्ये ॥ ॐचित्तंचस्वाहा ॥ चित्तायेदं० ॥ चित्तिश्चस्वाहा ॥ चित्यायेदं० ॥ आकूतंचस्वा० ॥
आकूताये० ॥ आकूतिश्च० । आकूत्यायेदं० । विज्ञातंचस्वा० । विज्ञातायेदं० । विज्ञानंचस्वा० । विज्ञानायेदं० । मनश्चस्वा० । मनसइ० ।
शक्वरीश्चस्वा० । शक्वर्यो० । दर्शश्चस्वा० । दर्शायेदं० । पूर्णमासश्चस्वा० । पूर्णमासायेदं० । बृहच्चस्वा० । बृहतइ० । रथंतरंचस्वा० । राथं
तरायेदं० । ॐप्रजापतिर्जयानिंद्रायवृष्णेप्रायच्छदुग्रःपृतनाज्येषुतस्मैविशःसमनमंतसर्वाःसउग्रःसाहिहव्योबभूवस्वाहा ॥ प्रजापतयइ० ॥ ॐअग्निर्भू
तानामधिपतिःसमावत्वस्मिन्ब्रह्मन्नस्मिन्क्षत्रेस्यामाशिष्यस्यांपुरोधायामस्मिन्कर्मन्नस्यांदेवहूत्या०स्वाहा ॥ अग्नयेभूतानामधिपतयइदं० ॥ ॐइं
द्रोज्येष्ठानामधिपतिःसमावत्व० ॥ इंद्रायज्येष्ठानामधिपतयइदं० ॥ ॐयमःपृथिव्याधिपतिःसमावत्व०स्वाहा ॥ यमायपृथिव्याधिपतयइदं० ॥
ॐवायुरंतरिक्षस्याधिपतिःसमावत्व०स्वाहा ॥ वायवेंतरिक्षस्याधिपतयइ० ॥ ॐसूर्योदिवोधिपतिःसमाव०स्वाहा ॥ सूर्यायदिवोधिपतयइ० ॥
ॐचंद्रमानक्षत्राणामधिपतिःसमा०स्वाहा । चंद्रमसेनक्षत्राणामाधिपतयइ० । ॐबृहस्पतिर्ब्रह्मणोधिपतिःसमा०स्वाहा । बृहस्पतेब्रह्मणोधिपतयइ०
॥ ॐमित्रसत्यानामधिमतिःसमा०स्वाहा ॥ मित्रायसत्यानामाधिपतयइ० ॥ ॐवरुणोपामधिपतिःसमा०स्वाहा ॥ वरुणायापामाधिपतयइदं० ॥
ॐसमुद्रस्रोत्यानामाधिपतिःसमा०स्वाहा । समुद्रायस्रोत्यानामधिपतयइ० । ॐअन्नं०साम्राज्यानामधिपतितन्मावत्वस्मिन्ब्रह्मं०स्वाहा । अन्ना
यसांम्राज्यानामधिपतिनइ० । ॐसोमओषधीनामधिपतिःसमा०स्वाहा । सोमायौषधीनामाधिपतयइदं । ॐसवितापसवानामधिपतिःसमा०स्वाहा
॥ सवित्रेप्रसवानामाधिपतयइ० । ॐरुद्रःपशूनामधिपतिःसमाव०स्वाहा । रुद्रायपशूनामाधिपतयइ० । अपउपस्पृश्य । ॐत्वष्टारूपाणामधिपतिः
समा० । त्वष्ट्रेरूपाणामधिपतयइ० । ॐविष्णुःपर्वतानामधिपतिःसमा०स्वाहा । विष्णवेपर्वतानामधिपत० । ॐमरुतोगणानामधिपतयस्तेमावं

त्वस्मिन्ब्रह्मन्नस्मिन्क्ष० ॥ मरुभ्योगणानामधिपतिभ्यइ० ॥ ॐपितरःपितामहाःपरेवरेततास्ततामहाइहमावत ॥ अस्मिन्ब्रह्मन्नस्मिक्षत्रे०
स्वाहा ॥ पितृभ्यःपितामहेभ्यःपरेभ्योवरेभ्यइदं० ॥ जीवत्पितृकस्यएतद्धोमलोपः ॥ ॐपितामहाअवरेततास्ततामहाइहमावता ॥ अस्मि
नब्रह्मं स्वाहा ॥ पितामहेभ्यःपरेभ्योवरेभ्यस्ततेभ्यःस्ततामहेभ्यइदं० ॥ अपउपस्पृश्य ॥ ॐऋताषाडृतधामाग्निर्गंधर्वःसइदंब्रह्मक्षत्रंपातु
तस्मैस्वाहा ॥ ऋतासहेऋतधाम्नेग्नयेगंधर्वायेदं० ॥ ॐतस्यौषधयोप्सरसऊर्जोनामताइदंब्रह्मक्षत्रंपांतुताभ्यःस्वाहा ॥ ओषधीभ्योप्सरोभ्य
ऊर्ग्भ्यइदं० ॥ ॐसꣳहितोविश्वसामासूर्योगंधर्वःसइदंब्रम्हक्षत्रंपातुतस्मैस्वाहा ॥ सꣳहितायविश्वसाम्नेसूर्यायगंधर्वायेदं० ॥ ॐतस्यमरीचयोप्स
रसआयुवोनामताइदंब्रम्हक्षत्रंपांतुताभ्यःस्वाहा ॥ मरीचिभ्योप्सरोभ्यआयुभ्यइदं० ॥ ॐसुषुम्नःसूर्यरश्मिश्चंद्रमागंधर्वःसइदंब्रम्हक्षत्रंपातुतस्मैस्वा
हा ॥ सुषुम्नायसूर्यरश्मयेचंद्रमसेगंधर्वायेदं ॥ ॐतस्यनक्षत्राण्यप्सरसोबेकुरयोनामताइदंब्रम्हक्षत्रंपांतुताभ्यःस्वाहा ॥ नक्षत्रेभ्योप्सरोभ्यो
बेकुरुभ्यइदं० ॥ ॐभुज्युःसुपर्णोयज्ञोगंधर्वःसइदंब्रम्हक्षत्रंपातुतस्मैस्वाहा ॥ भुज्यवेसुपर्णाययज्ञायगंधर्वायेदं० ॥ ॐतस्यदक्षिणाअप्सरसं
स्तवानामताइदंब्रम्हक्षत्रंपांतुताभ्यःस्वाहा । दक्षिणाभ्योसरोभ्यःस्तवाभ्यइदं० । ॐप्रजापतिर्विश्वकर्मामनोगंधर्वःसइदंब्रम्हक्षत्रंपातुतस्मैस्वाहा ।
प्रजापतयेविश्वकर्मणेमनसेगंधर्वायेदं० ॥ ॐतस्यर्क्सामान्यप्सरसोवन्हयोनामताइदंब्रह्मक्षत्रंपांतुताभ्यःस्वाहा ॥ ऋक्सामेभ्योप्सरोभ्यवन्हि
भ्यइदं० ॥ ॐइषिरोविश्वव्यचावातोगंधर्वःसइदंब्रह्मक्षत्रंपातुतस्मैस्वाहा ॥ इषिरायविश्वव्यचसेवातायगंधर्वायेदं० ॥ ॐतस्यापोप्सरसो
मुदानामताइदंब्रह्मक्षत्रंपांतुताभ्यःस्वाहा ॥ अभ्द्योप्सरोभ्योमुदाभ्यइदं० ॥ ॐभुवनस्यपतेयस्यंतउ .रिगृहाइहच ॥ सनोरास्वाज्यानिꣳरा
यस्पोषꣳसुवीर्यꣳसंवत्सरीणाꣳस्वस्तिꣳस्वाहा ॥ भुवनस्यपत्येदं० ॥ ॐपरमेष्ठ्यधिपतिर्मृत्युर्गंधर्वःसइदंब्रम्हक्षत्रंपातुतस्मैस्वाहा ॥ परमे

ष्ठिनेधिपतयेमृत्यवेगंधर्वायेदं० ॥ ॐतस्यविश्वंमप्सरसोभुवोनामताइदंब्रह्मक्षत्रंपांतुताभ्यःस्वाहा ॥ विश्वस्माभ्योप्सरोभ्यभूभ्यइदं० ॥ ॐसु
क्षितिःसुभूतिर्भद्रकृत्सुवर्वान्पर्जन्योगंधर्वःसइदंब्रह्मक्षत्रंपांतुतस्मैस्वाहा ॥ सुक्षितयेसुभूतयेभद्रकृतेसुवर्वतेपर्जन्यायगंधर्वायेदं० ॥ ॐतस्यविद्यु
तोप्सरसोरुचोनामता इदंब्रह्मक्षत्रंपांतु ताभ्यःस्वाहा ॥ विद्युभ्योप्सरोभ्योरुग्भ्यइदं० ॥ ॐदूरेहेतिरमृडयोमृत्युर्गंधर्वःसइदंब्रह्मक्षत्रंपांतुतस्मै
स्वाहा ॥ दूरेहेतवेमृडयायमृत्यवेगंधर्वायेदं० ॥ ॐतस्यप्रजाअप्सरसोभीरुवोनामसइदंब्रह्मक्षत्रंपांतुताभ्यःस्वाहा ॥ प्रजाभ्योप्सरोभ्यो
भीरुभ्यइदं० ॥ ॐचारुःकृपणकाशीकामोगंधर्वःसइदंब्रह्मक्षत्रंपांतुतस्मैस्वाहा ॥ चारवेकृपणकाशिनेकामायगंधर्वायेदं० ॥ ॐतस्याधयो
प्सरसःशोचयंतीर्नामताइदंब्रह्मक्षत्रंपांतुताभ्यःस्वाहा ॥ आधिभ्योप्सरोभ्यःशोचयंतीभ्यइदं० ॥ ॐसनोभुवनस्यपतेयस्यतउपरिगृहाइ
हच ॥ उरुब्रह्मणेस्मैक्षत्रायमहिशर्मयच्छस्वाहा ॥ ब्रह्मणइदं० ॥ ॐप्रजापतेनत्वदेतान्यन्योविश्वारूपाणिपरिताबभूवयत्कामास्तेजुहुमस्तन्नोअस्तुवयंस्यामपतयोरयीणांस्वाहा ॥ प्रजापतयइ० ॥
ॐभूःस्वाहा ॥ अग्नयइदं० ॥ ॐभुवःस्वाहा ॥ वायवइदं० ॥ ॐसुवःस्वाहा ॥ सूर्याये० ॥ ॐयदस्यकर्म
णोत्यरीरिचंयद्वान्यूनमिहाकरं ॥ अग्निष्टत्स्विष्टकृद्विद्वान्सर्वंस्विष्टंसुहुतंकरोतुस्वाहा ॥ अग्नयेस्विष्टकृतइदं० ॥ परिधीन्प्रहृत्य ॥ आधारस
मिधोप्रहृत्य ॥ तनुभ्यइदं० ॥ अस्मिन्प्रकृतेकर्मणिज्ञाताज्ञातकृतदोषनिबर्हणार्थअनाज्ञातत्रयंकर्मातारितकर्मलोपकर्मविपर्यासप्रायाश्चित्तार्थंत्वन्नोअग्ने
सत्वन्नोअग्नेइतिस्वराक्षरपदवृत्तवर्णलोपप्रायश्चित्तार्थंआभीर्गीर्भिरितिवाङ्नियमलोपप्रायाश्चित्तार्थंइदंविष्णुर्व्यंबकमितिऋत्विग्द्रव्यप्रायाश्चित्तार्थंय
द्विद्वांसइतिसर्वोपघातप्रायश्चित्तार्थंपुनस्त्वादित्याइतिसर्वप्रायश्चित्तार्थंभूर्भुवःसुवरोमित्येतैर्मंत्रैराज्याहुतीर्होष्ये ॥ ॐअनाज्ञातंयदाज्ञातंयज्ञस्य
क्रियतेमिथु ॥ अग्नेतदस्यकल्पयत्वंहिवेत्थयथातथंस्वाहा ॥ अग्नयइदं० ॥ ॐपुरुषसंमितोयज्ञोयज्ञःपुरुषसंमितः ॥ अग्नेतदस्यकल्पयत्व

॰हिवेत्थंयथातथ॰स्वाहा ॥ अग्नयइदं ॥ ॐयत्पाकत्रामनसादीनदक्षानयज्ञस्यमन्वतेमर्तासः ॥ अग्निष्टद्धोताक्रतुविद्विजानन्यजिष्ठोदेवा
॰ऋतुशोयजातिस्वाहा ॥ अग्नयइदं० ॥ ॐत्वन्नोअग्नेवरुणस्यविद्वान्देवस्यहेडोवयासिसीष्ठाः ॥ यजिष्ठोवह्नितमःशोशुचानोविश्वाद्वेषां॰
सिप्रमुमुग्ध्यस्मत्स्वाहा ॥ अग्निवरुणाभ्यामिदं० ॥ ॐसत्वन्नोअग्नेवमोभवोतीनेदिष्ठोअस्याउषसोव्युष्टौ ॥ अवयक्ष्वनोवरुण॰रराणोवीहि
मृडीक॰सुहवोनएधिस्वाहा ॥ अग्निवरुणाभ्यामिदं० ॥ ॐआभीर्गीर्भिर्यदतोनऊनमाप्यायथहरिवोवर्धमानः ॥ यदास्तोतृभ्योमहिगोत्रा
रुजासिभूयिष्ठभाजोअधतेस्यामस्वाहा ॥ इंद्रायहरिवतेवर्धमानायेदं० ॥ ॐइदंविष्णुर्विचक्रमे०सुरेस्वाहा ॥ विष्णवइदं० ॥ त्र्यंबकंय
जामहे०मृतात्स्वाहा ॥ त्र्यंबकायेदं० ॥ ॐयद्विद्वा॰सोयदविद्वा॰सोमुग्धाःकुर्वन्त्यृत्विजः ॥ अग्निर्मातस्मादेनसःश्रद्धादेवीचमुंचता॰स्वाहा ॥
अग्निश्रद्धादेवीभ्यामिदं० ॥ ॐपुनस्त्वादित्यारुद्रावसवःसमिंधतांपुनर्ब्रह्माणोवसुनीथयज्ञैः ॥ घृतेनत्वंतनुवोवर्धयस्वसत्याःसंतुयजमानस्य
कामाःस्वाहा ॥ अग्नयेवसुनीथायेदं० ॥ सर्वप्रायश्चित्तंकरिष्ये ॥ ॐभूर्भुवःसुवःस्वाहा ॥ प्रजापतयइदं० ॥ प्रागादिपरिस्तरणान्यु
त्तरेविसृजेत् ॥ अदितेन्वमं॰स्थाः ॥ अनुमतेन्वम॰स्थाः ॥ सरस्वतेन्वम॰स्थाः ॥ देवसवितःप्रासावीः ॥ प्रणीतास्त्वपआनीयप्रतिदिशंव्यु
त्सिच्य ॥ ॐसदसिसन्मेभूयाःसर्वमसिसर्वमेभूयाःपूर्णमसिपूर्णमेभूयाअक्षितमसिमामेक्षेष्ठाः प्राच्यांदिशिदेवाऋत्विजोमार्जयंतांदक्षिणायांदिशिमा
साःपितरोमार्जयंतांप्रतीच्यांदिशिगृहाःपशवोमार्जयंतामुदीच्यांदिश्यापओषधयोवनस्पतयोमार्जयंतामूर्ध्वायांदिशियज्ञःसंवत्सरोयज्ञपतिर्मार्जयंतां।
अंजलौपूर्णपात्रमानयति ॥ रेतएवास्यांप्रजांदधाति ॥ प्रजयाहिमनुष्यःपूर्णः ॥ मुखंविमृष्टे ॥ अवभृथस्यैवरूपंकृत्वोत्तिष्ठति ॥ समुद्रंवः
प्रहिणोमिस्वांयोनिमपिगच्छत ॥ अच्छिद्रःप्रजयाभूयासंमापरासेचिमत्पयः ॥ भवत्कृतब्रह्मदक्षिणांमनसोत्साहपरिमितंहिरण्यंतुभ्यमहंसंप्रददे

नमम ॥ शिरसिमार्जयित्वा ॥ ब्रम्हाणंविसृजेत् ॥ अग्नेर्वायव्यदेशे आयतनाद्बहिरश्वत्थादिपर्णेअग्नयेनमइतिगंधादिनासंपूज्य ॥ ॐअग्ने नयसुपथारायेअस्मान्विश्वानिदेववयुनानिविद्वान् ॥ युयोध्यस्मज्जुहुराणमेनोभूयिष्ठांतेनमउक्तिंविधेम ॥ नमस्करोमि ॥ ॐयज्ञनमस्तेयज्ञ । नमोनमश्चतेयज्ञ ॥ शिवेनमे संतिष्ठस्व ॥ स्यो[illegible]संतिष्ठस्व ॥ सुभूतेनमेसंतिष्ठस्व ॥ ब्रम्हवर्चसेनमेसंतिष्ठस्व ॥ यज्ञस्यर्धिमनुसंतिष्ठस्व ॥ उपतेयज्ञनमः उपतेनमः उपतेनमः ॥ इतिसंप्रार्थ्य ॥ उपविश्य ॥ स्रुवाबिलपृष्ठेनविभूतिंगृहीत्वा ॥ ॐबृहत्साम क्षत्रभृद्वृद्धवृष्णियंत्रिष्टुभौजःशुभितमुग्रवीरं ॥ इंद्रस्तोमेनपंचदशेनमध्यमिदंवातेनसगरेणरक्ष ॥ इतिमंत्रेणविभूतिंधृत्वा ॥ प्रमादा त्कुर्वतांकर्मप्रच्यवेताध्वरेषुयत् ॥ स्मरणादेवतद्विष्णोःसंपूर्णस्यादितिश्रुतिः ॥ स्वस्तिश्रद्धांमेधांयशःप्रज्ञांविद्यांबुद्धिंश्रियंबलं ॥ आयु ष्यंतेजआरोग्यंदेहिमेहव्यवाहन ॥ यस्यस्मृत्या० अनेनऋग्भिर्ब्राम्हणैसहवेदोत्सर्जनाख्येनकर्मणाभगवान्परमेश्वरःप्रीयतांनमम ॥ प्राजापत्यादि नवकांडऋषिप्रीत्यर्थंउत्तरपूजांकरिष्ये ॥ चंदनादिनासंपूज्य ॥ अनेनउत्तराराधनेनप्राजापत्यादिकांडऋषयःप्रीयतांनमम ॥ ॐविश्वेत्ता तेसवनेषुप्रवाच्यायाचकर्थमघवन्निंद्रसुन्वते ॥ पारावतंयत्पुरुसंभृतंवस्वपावृणोःशरभायऋषिबंधवे ॥ ऋषीनजलेनुद्वासयेत् ॥ कृतस्य० वेदो त्सर्जनाख्येनकर्मणाभगवान्परमेश्वरप्रीयतांनमम ॥ भूयसींदद्यात् ॥ इत्युत्सर्जनप्रयोगः ॥ *उत्सर्जनाकरणाभावेकेवलकामोकार्षीन्मन्युरकार्षी न्मंत्रंपठित्वा । अद्य० एवंगुणविशेषण० तिथौ अतीतसंवत्सरउत्सर्जनलोपजनितप्रत्यवायपरिहारार्थंयथाशक्तिकामोकार्षीन्मन्युरकार्षीमंत्रजपमहं

---

टीपः—* याजुषचिंतामणौतुउपाकर्मदिनेइदमेवप्रायश्चित्तंउत्सर्जनाभावेआदौकृत्वा ॥ अयंआंध्रदेशेप्रचारः ॥ उपाकर्मकुर्यात् ॥

करिष्ये ॥ ॐकामोकार्षीन्नमोनमः ॥ कामोकार्षीत्कामःकरोतिनाहंकरोमिकामःकर्तानाहंकर्ताकामःकारयितानाहंकारयिताएषतेकामकामाय स्वाहा ॥ मन्युरकार्षीन्नमोनमः ॥ मन्युरकार्षीन्मन्युःकरोतिनाहंकरोमिमन्युःकर्तानाहंकर्तामन्युःकारयितानाहंकारयिताएषतेमन्योमन्यवे स्वाहा ॥ अनेनयथाशक्तिमंत्रजपाख्येनकर्मणाभगवान्परमेश्वरःप्रीयतांनमम ॥

## ॥ अथवेदोपाकर्मप्रयोगः ॥

॥ श्री० ॥ श्रावण्यांपौर्णमास्यांउदयव्यापिन्यांसंगवेवामहापगाप्सुस्नात्वा ॥ शिष्यैःसहआचम्यपवित्रपाणिःप्राणानायम्य ॥ ममकायिकवाचिकमानसिकसांसर्गिकैनोनिबर्हणार्थंअध्येष्यमाणानांछंदसांश्रीपरमेश्वरप्रीत्यर्थंवेदोपाकरणाख्यंकर्मकरिष्ये ॥ तत्रादौनिर्विघ्नतासिध्यर्थंगणपतिपूजनंकरिष्ये ॥ गणपतिंसंपूज्य ॥ उपाकर्मांगंऋषिपूजनंऋषितर्पणंचकरि० ॥ निवीतीभूत्वा ॥ ॐभूर्भुवःसुवःअस्मिनकुशवटौप्रजापतयेकांडऋषयेनमः ॥ प्रजापतिंकांडऋषिमावाहयामि ॥ १ ॥ पूर्ववत् ॥ ॐभू०सोमायकांडऋषयेनमः ॥ सोमंकांडऋषिमावा० ॥ ॐभू०अग्नयेकांडऋषयेनमः ॥ अग्निंकांडऋषिमा० ॥ ३ ॥ ॐभू०विश्वेभ्योदेवेभ्यःकांडऋषिभ्योनमः ॥ विश्वान्देवानकांडऋषिमावा० ॥ ॐभू० सांहितीर्देवताउपनिषभ्योनमः ॥ सांहितीर्देवताउपनिषदमा० ॥ ॐभू०याज्ञिकीर्देवताउपनिषभ्योनमः ॥ याज्ञिकीर्देवताउपनिषदमा० ॥ ॐभू०वारुणीर्देवताउपनिषभ्योनमः ॥ वारुणीर्देवताउपनिषदमा० ॥ ब्रह्माणंस्वयंभुवेनमः ॥ ब्रह्माणंस्वयंभुवमावा ॥ सदसस्पतयेनमः ॥

सदसस्पतिमावाह० ॥ ९ ॥ पूर्ववत्नवकांडऋषिभ्योनमःषोडशोपचारैःसंपूज्य ॥ ॐऋषेंऋषेर्वाएतानिर्मितायत्सामिध्रेन्य०माशिषंदुन्हे ॥
मंत्रपुष्पंप्रार्थनान्नमस्कारान्समर्पयामि ॥ अनेनकृतपूजनेनप्राजापत्यादिनवकांडऋषयःप्रीयंतां ॥ निवीतीभूत्वा ॥ प्रजापतिंकांडऋषीतर्पयामि ॥
सोमंकांडऋषिंत० ॥ अग्निंकांडऋषिंत० ॥ विश्वान्देवान्कांडऋषींत० ॥ सांहितीर्देवताउपानिषदस्त० ॥ याज्ञिकीर्देवताउपनिषद
स्तर्प० ॥ वारुणीर्देवताउपानिषदस्त० ॥ ब्राह्मणंस्वयंभुवस्त० ॥ सदस्पतिंतर्प० ॥ इतितर्पणं ॥ अग्निंप्रतिष्ठाप्य ॥ यत्राग्नि
स्थाप्येतत्याद्याग्निमुखांतंकृत्वा ॥ प्रधानहोमंकुर्यात् ॥ चतुर्वारमाज्यंगृहीत्वा ॥ ॐप्रजापतयेकांडऋषयेस्वाहा ॥ प्रजापतयेकांडऋषय
इदं० ॥ ॐसोमायकांडऋषयेस्वा० ॥ सोमा० ॥ ॐअग्नयेकांडऋषयेस्वा० ॥ अग्नयेकांडऋषयइदं० ॥ ॐविश्वेभ्योदेवेभ्यःकांडऋ
षिभ्यःस्वा० ॥ विश्वेभ्योदेवेभ्यकांडऋषिभ्यइदं० ॥ ॐसांहितीर्देवताउपनिषभ्द्यःस्वाहा ॥ सांहितीभ्योदेवताउप० ॥ ८ ॥ ॐया
ज्ञिकीभ्योदेवताउपनिषभ्द्यःस्वा० ॥ याज्ञीकीभ्योदेवताभ्यउ० ॥ ॐवारुणीभ्योदेवताभ्यउपानिषभ्द्यःस्वा० ॥ वारुणीर्देवताउपनिषद० ॥
ॐब्रह्मणेस्वयंभुवेस्वा० ॥ ब्रह्मणेस्वयंभुवइ० ॥ ॐसदसस्पतेस्वा० ॥ सदसस्पतयइदं ॥ ९ ॥ ॐसदसस्पतिमद्भुतंप्रियामिंद्रस्यकाम्यं ॥
सनिंमेधामयासिषंस्वाहा ॥ सदस्पतयइदं०चतुरोवेदांजुहोति ॥ ॐअग्निमीळेपुरो०स्वाहा ॥ ऋग्वेदायेदं० ॥ ॐइषेत्वोर्जेत्वा०स्वाहा ॥
यजुर्वेदायेदं० ॥ ॐअग्नआयाहिवी०स्वाहा ॥ सामवेदाये० ॥ ॐशंनोदेवीरभि०स्वाहा ॥ अथर्ववेदायेदं० ॥ ( उत्सर्जनवत्तिलसक्तु
होमं ) कृताकृतं ॥ ततोयज्ञोपवीतमिंत्रणमशौचएकंयज्ञोपवीतंहुत्वा ॥ ॐयज्ञोपवीतंपरमंपवित्रंप्रजापतेयत्सहजंपुरस्तात् ॥ आयुष्यमग्रियं
प्रतिमुंचशुभ्रंयज्ञोपवीतंबलमस्तुतेजःस्वाहा ॥ परमात्मनइदं० ॥ अद्य०श्रीपर०आयुष्याभिवृध्यर्थंब्राह्मणेभ्यःयज्ञोपवीतदानमहंक० ॥ स्वपि

तूनुद्दिश्यब्राम्हणेभ्यःयज्ञोपवं तानिदत्वा ॥ स्वयंयज्ञोपवीतानिधृत्वा ॥

## ॥ अथयज्ञोपवीतसंस्कारः ॥

॥ श्री॰ ॥ सर्वैःसहआचम्यप्राणानायम्य ॥ श्रीपरमेश्वरप्रीत्यर्थंयज्ञोपवीतसंस्कारंकरिष्ये ॥ ॐब्रह्मजज्ञानंप्रथमंपुरस्ताद्विसीमतःसुरुचो
वेनआवः ॥ सबुध्नियाउपमाअस्यविष्ठाःसतश्चयोनिमसतश्चविवः ॥ ॐअतोदेवा॰माभिः ॥ ॐत्र्यंबकंयजामहे॰मृतात् ॥ ॐआपोहि
ष्ठा॰चनः ॥ ॐहिरण्यवर्णाःशु॰निधत्त ॥ ॐपवमानःसुवर्जनः ॥ पवित्रेणविचर्षणिः ॥ यःपोतासपुनातुमा ॥ पुनंतमादेवजनाः ॥
पुनंतुमनवोधिया ॥ पुनंतुविश्वआयवः ॥ जातवेदःपवित्रवत् ॥ पवित्रेणपुनाहिमा ॥ शुक्रेणदेवदीद्यत् ॥ अग्नेक्रत्वाक्रतूꣳरनु ॥
यत्तेपवित्रमर्चिषि ॥ अग्नेविततमंतरा ॥ ब्रह्मतेनपुनीमहे ॥ उभाभ्यांदेवसवितः ॥ पवित्रेणसवेनच ॥ इदंब्रह्मपुनीमहे ॥ वैश्वदे
वीपुनतीदेव्यागात् ॥ यस्यैबह्वीस्तनुवोवीतपृष्ठाः ॥ तयामदंतःसधमाद्येषु ॥ वयꣳस्यामपतयोरयीणां ॥ वैश्वानरोरश्मिभिर्मापुनातु ॥
वातःप्राणेनेषिरोमयोभूः ॥ द्यावापृथिवीपयसापयोभिः ॥ ऋतावरीयज्ञियेमापुनीतां ॥ बृहद्भिःसवितस्तृभिः ॥ वर्षिष्ठैर्देवमन्माभिः ॥
अग्नेदक्षैःपुनाहिमा ॥ येनदेवाअपुनता ॥ येनापोदिव्यंकशः ॥ तेनदिव्येनब्रह्मणा ॥ इदंब्रह्मपुनीमहे ॥ यःपावमानीरध्येति ॥
ऋषिभिःसंभृतꣳरसं ॥ सर्वꣳसपूतमश्नाति ॥ स्वदितंमातरिश्वना ॥ पावमानीर्योअध्येति ॥ ऋषिभिःसंभृतꣳरसं ॥ तस्मैसरस्वतीदु
हे ॥ क्षीरꣳसर्पिर्मधूदकं ॥ पावमानीःस्वस्त्ययनीः ॥ सुदुघाहिपयस्वतीः ॥ ऋषिभिःसंभृतोरसः ॥ ब्राह्मणेष्वमृतꣳहितं ॥ पावमा
नीर्दिशंतुनः ॥ इमंलोकमथोअमुं ॥ कामान्समर्धयंतुनः ॥ देवीर्देवैःसमाभृताः ॥ पावमानीःस्वस्त्ययनीः ॥ सुदुघाहिघृतश्चुतः ॥

ऋषिभिःसंभृतोरसः ॥ ब्राह्मणेश्वमृतंहितं ॥ येनदेवाःपवित्रेण ॥ आत्मानंपुनतेसदा ॥ तेनसहस्रधारेण ॥ पावमान्यःपुनंतुमा ॥
प्राजापत्यंपवित्रं ॥ शतोद्यामंहिरण्मयं ॥ तेनब्रम्हविदोवयं ॥ पूतंब्रह्मपुनीमहे ॥ इंद्रःसुनीतीसहमापुनातु ॥ सोमःस्वस्त्यावरुणःसमी
च्या ॥ यमोराजाप्रमृणाभिःपुनातुमा ॥ जातवेदामोर्जयंत्यापुनातु ॥ ॐभूरग्निंचपृथिवींचमांच ॥ त्रींश्चलोकान्संवत्सरंच ॥ प्रजा
पतिस्त्वासादयतु ॥ तयादेवतयांगिरस्वध्रुवासीद ॥ भुवोवायुंचांतरिक्षंचमांच ॥ त्रींश्चलो०सीद ॥ सुवरादित्यंचदिवंचमांच ॥ त्रींश्
श्चलो०सीद ॥ भूर्भुवःसुवश्चंद्रमसंचदिशश्चमांच ॥ त्रींश्च०सीद ॥ इतिसंपुटःस्तेनग्रंथिंधारयित्वा ॥ दशगायत्र्याप्रोक्ष्य ॥ ॐकारं
प्रथमतंतौन्यसामि ॥ अग्निंद्वितीयतं० ॥ नागांतृतीयतं० ॥ सोमंचतुर्थतं० ॥ पितॄन्पंचमतं० ॥ प्रजापतिंषष्ठतं० ॥ वायुंसप्तमतं
तौ० ॥ सूर्यंअष्टमतंतौ० ॥ विश्वान्देवान्नवमतंतौ० ॥ इत्येतैर्मंत्रैरभिमंत्र्य ॥ सूर्यायदर्शयित्वा ॥ ॐउदुत्यंजातवेदसंदेवंवहंतिकेतवः ।
दृशेविश्वायसूर्यं ॥ ॐउद्वयंतमसस्परिपश्यंतोज्योतिरुत्तरं ॥ देवंदेवत्रासूर्यमगन्मज्योतिरुत्तमं ॥ ॐचित्रंदेवानामुदगादनीकंचक्षुर्मित्रस्यव
रुणस्याग्नेः ॥ आप्राद्यावापृथिवीअंतरिक्षंसूर्यआत्माजगतस्तस्थुषश्च ॥ देवस्यत्वा०चामि ॥ इतित्रिःस्ताडयेत् ॥ ॐआपोअस्मान्मातरःशुंधयं
तुघृतेननोघृतप्वःपुनंतु ॥ विश्वंहिरिप्रंप्रवहंतिदेवीरुदिदाभ्यःशुचिरापूतएमि ॥ सोमस्यतनूरसितनुवंमेपाहि ॥ महीनांपयोसिवर्चोधाअसिवर्चः ॥
इत्यादिभिर्मंत्रैःशुद्धिंकृत्वा । अद्यपूर्वो०ममआत्मन०श्रौतस्मार्तकर्मानुष्ठानसिध्यर्थंयज्ञोपवीतधारणंकरिष्ये । ॐयज्ञोपवीतं०दक्षिणबाहुमुद्धार्य ।
आचम्य । यज्ञोपवीतसं० ॥ उत्सर्जनवत्ब्रम्हयज्ञंकृत्वा । उपाकृतावेवेदाः—(स्वस्वपितृतर्पणंकुर्यात् )। इत्युक्त्वाजलंस्पृशेयुः । समुद्रंगछस्वा
हेतिजीर्णोपवीतंजलेविसृज्य । उत्सर्जनवत् ॥ (व्यस्तजयादि ) ब्रम्हविसर्जनांतंकृत्वा ॥ अग्निंसंपूज्य ॥ विभूतिंधृत्वा ॥ प्राजापत्यादिनवकांड

ऋषीन्उत्तरपूजांविधाय ॥ विश्वेत्तातेतिऋषीन्जलेतुद्वासयेत् ॥ अनेनएभिर्ब्राम्हणैःसहवेदोपाकरणाख्येनकर्मणाभगवान्परमेश्वरःप्रीयतांनमम ॥
॥ अ॰यनूतनब्रम्हचारिश्रावणी । अद्य॰ममवेदग्रहणाधिकारासिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंउपाकर्माख्यंकर्मक॰ । आदौनिर्विघ्नतासिध्यर्थं
गण॰पु॰मा॰नां॰क॰ ॥ उक्तरीत्याकुर्यात् ॥ यज्ञोपवीतधारणकाले॰यज्ञोपवीत,वस्त्र,मेखला,अजिन,दंड,उपनयनवद्धारयित्वा ॥
जीर्णानिविसृज्यजलेक्षिपेत् ॥ तत्रमंत्राः ॥ ॐयज्ञोपवीतं॰तेजः ॥ ॐरेवतीस्त्वाव्यक्षिणन्कृत्तिकास्त्वाकृंतन्ऽस्त्वा ॥ धियोवयंत्वमयुअंवृ
जंन्त्सहस्रमंताऽअभितोअयच्छन् ॥ देवीर्देवायपरिधीसविज्ञेमहत्तदासामभवन्माहित्वनं ॥ इतिद्वाभ्यांवासोभिमंत्र्य ॥ ॐयाअकृंतन्नवयन्या
अतन्वतयाश्चदेवीरंतानभितोददंत ॥ तास्त्वांदेवीर्जरसेसंव्ययंत्वायुष्मानिदंपरिधस्त्ववासः ॥ परिधत्तधत्तवाससैनऽशतायुषंकृणुतदीर्घमायुः ॥
बृहस्पतिःप्रायच्छद्वासएतत्सोमायराज्ञेपरिधातवाउं ॥ जरांगच्छासिपरिधस्त्ववासोभवाकृष्टीनामभिशस्तिपावा ॥ शतंचजीवशरदः
सुवर्चारायश्चपोषमुपसंव्ययस्व ॥ इतिमंत्रेणवासःपरिधाय ॥ ॐइयंदुरुक्तात्परिबाधमानाशर्मवरूथंपुनतीनआगात् । प्राणापानाभ्यांबलमाभ
रंतीप्रियादेवानांऽसुभगामेखलेयं । ऋतस्यगोप्त्रीतपसःपरस्पीघ्नतीरक्षःसहमानाअरातीः । सानःसमंतमनुपरीहिभद्रयाभर्त्तारस्तेमेखलेमारिषाम ॥
मेखलांधृत्वा ॥ ॐमित्रस्यचक्षुर्धरुणंबलीयस्तेजोयशस्वीस्थविरंसमिद्धं ॥ अनाहनस्यंवसनंजरिष्णुपरीदंवाज्यजिनंदधेहं ॥ अजिनंधारये
त् ॥ ॐसुश्रवःसुश्रवसंमाकुरुयथात्वंऽसुश्रवःसुश्रवाअस्येवमहंऽसुश्रवःसुश्रवाभूयासंयथात्वंऽसुश्रवोदेवानांनिधिगोपोस्येवमहंब्राह्मणानांब्रह्मणो
निधिगोपोभूयासं । पालाशदंडंदक्षिहस्तेनादत्ते । इतिनूतनब्रह्मचारिश्रावणीः ॥ समावर्तनानंतरंउपाकर्मकृतंचेत्वस्त्रादिधारणंवर्ज्यं । इतिश्रावणीस.

---

स्वपितृतर्पणं:—सूत्रादिषुअनुक्तंशिष्टैःपरिगृहीतंअतःकृताकृतमितिवदंति ॥ प्रथमोपाकर्मगुरुशुक्रास्तादौसिंहस्थेगुरौचनकार्यं ॥

## ॥ अथापस्तंबश्राद्धसंकल्पप्रयोगः ॥

॥ श्रीगणेशायनमः ॥ आचम्यप्राणानायम्य० ॥ विष्णुर्विष्णुर्विष्णुः ॥ श्रीमद्भगवतोमहापुरुषस्यवि० एवंगुणविशेषण० पुण्यतिथौ ॥ अस्मत्पितुःप्रतिसांवत्सरिकश्राद्धांगत्वेनअग्नौकरणार्थंअग्निसिद्धिंकरिष्ये ॥ यत्राग्निस्थाप्यतेतत्रप्रादेशमात्रंश्वेततंडुलचूर्णेनचतुरस्रंस्थंडिलंकल्पयित्वा ॥ (तत्रयज्ञियकाष्ठेन)प्राचीरुदक्संस्थाः ॥ उदीचीप्राक्संस्थाः ॥ तिस्रःतिस्रोरेखालिखित्वा ॥ अद्भिरवोक्ष्य ॥ भूर्भुवः सुवरोमित्यग्निंप्रतिष्ठाप्य ॥ शेषमुत्सिच्य ॥ उत्तरेणपूर्वेणवान्यत्तोयमुपदध्यात् ॥ एतद्धार्येणविद्यते ॥ अग्निमिध्वा ॥ ॐउपावरोह जातवेदःपुनस्त्वंदेवेभ्योहव्यंवहनःप्रजानन् ॥ आयुःप्रजांरयिमस्मासुधेह्यजस्रोदीदिहिनोदुरोणेस्वाहा ॥ अग्नयइदं० । ॐभूर्भुवःसुवः । तत्सवितुर्वरेण्यं ॥ भर्गोदेवस्यधीमहि ॥ धियोयोनःप्रचोदयात् ॥ ईशानीमारभ्यप्रदक्षिणंपरिषिच्य ॥ अष्टदिक्षुअलंकृत्य ॥ अग्नयेनमः ॥ हुतवहायनमः ॥ हुताशिनेनमः ॥ कृष्णवर्त्मनेनमः ॥ देवमुखायनमः ॥ सप्तजिव्हायनमः ॥ वैश्वानरायनमः ॥ जातवेदसेनमः ॥ अदितेनुमन्यस्व–(दक्षिणतःप्राचीपर्यंत) ॥ अनुमतेनुमन्यस्व–(पश्चादुदीचीपर्यं०) ॥ सरस्वतेनुमन्यस्व–उत्तरतःप्राचीप०) । देवसवितःप्रसुव–(ईशानीमारभ्यप्रदक्षिणंपरिषिच्य) ॥ चतुर्दिक्षुपरिस्तीर्य ॥ ॐचत्वारिशृंगात्रयोअस्यपादाद्वेशीर्षेसप्तहस्तासोअस्य ॥ त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्यांआविवेश ॥ सप्तहस्तश्चतुश्शृंगसप्तजिव्होद्विशीर्षकः ॥ त्रिपात्प्रसन्नवदनसुखासीनशुचिस्मितः ॥ स्वाहांतुदक्षिणेपार्श्वेदेवींवामेस्वधांतथा ॥ बिभ्रद्दक्षिणहस्तैस्तुशक्तिमन्नंस्रुचंस्रुवं ॥ तोमरंव्यजनंवामैर्घृतपात्रंचधारयन् ॥ आत्माभिमुखमासीनएवंरूपोहुताशनः ॥ अग्नेवैश्वानरशांडिल्यगोत्रमेषध्वजप्राङ्मुखममसंमुखोवरदोभव ॥ (अग्निविच्छेदजनितप्रत्यवायपरिहारार्थं)औपा

सनांतरितप्रायाश्चितार्थंचअयाश्चमनोज्योतिरितिभूर्भुवःसुवरोमित्येतैर्मंत्रैराज्याहुतीर्होष्ये ॥ (स्रुवेणचतुर्गृहीतमाज्यं) ॐअयाश्चाग्नेस्यनभिश
स्तीश्चंसत्यमित्वमयाअसि ॥ अयंसामनंसाधृतोयसांहव्यमूंहिषेयानोधेहिभेषजंस्वाहा ॥ अयसेग्नयइदं० ॥ ॐमनोज्योतिर्जुषतामाज्यं
विच्छिन्नंयज्ञंसमिमंदधातु ॥ याइष्टाउषसोनिम्रुचश्चताःसंदधामिहविषाघृतेनस्वाहा ॥ उषसोनिम्रुग्भ्यइदं ॥ ॐभूर्भुवःसुवःस्वाहा ॥ प्रजाप
प्रजापतयइदं० ॥ श्रीपरमेश्वरप्रीत्यर्थंसायंप्रातरौपासनहोमंतंडुलैर्होष्ये ॥ तंडुलानादाय ॥ ॐअग्नयेस्वाहा ॥ अग्नयइदं० ॥ ॐअग्नये
स्विष्टकृतेस्वाहा ॥ अग्नयेस्विष्टकृतइदं० ॥ ॐसूर्यायस्वाहा ॥ सूर्यायेदं० ॥ ॐअग्नयेस्विष्टकृतेस्वाहा ॥ अग्नयेस्विष्टकृतइदं० ॥
आहुतिसंसर्गप्रायश्चित्तार्थंसमिद्धोमंकरिष्ये ॥ ॐयत्रवेत्थवनस्पतेदेवानांगुह्यानामानि ॥ तत्रहव्यानिगामयस्वाहा ॥ वनस्पतयइदं० ॥
ॐभूर्भुवःसुवःस्वाहा ॥ प्रजापतयइदं० ॥ अदितेन्वमंस्थाः । अनुमतेन्वमंस्थाः । सरस्वतेन्वमंस्थाः । देवसवितःप्रासावीः ॥ ॐअग्ने
त्वन्नोअंतमउतत्राताशिवोभवावरूथ्यः ॥ तंत्वाशोचिष्ठदीदिवःसुम्नायनूनमीमहेसखिभ्यः ॥ वसुरग्निर्वसुश्रवाअच्छानक्षिद्युमत्तमंरयिंदाः ॥
सनोबोधिशुधीहवमुरुष्याणोअघायतःसमस्मात् ॥ स्वस्तिश्रद्धांमेधांयशःप्रज्ञांविद्यांबुद्धिंश्रियंबलं ॥ आयुष्यंतेजआरोग्यंदेहिमेहव्यवाहनोभ
मः ॥ प्रमादात्कुर्वतांकर्मप्रच्यवेताध्वरेषुयत् ॥ स्मरणादेवतद्विष्णोःसंपूर्णस्यादितिश्रुतिः ॥ सायंप्रातरौपासनहोमसाद्गुण्यार्थंअनाज्ञातत्रयं
दशगायत्रीजपमहंकरिष्ये ॥ ॐअनाज्ञातंयदाज्ञातंयज्ञस्यक्रियतेमिथु ॥ अग्नेतदस्यकल्पयत्वंहिवेत्थयथातथं ॥ पुरुषसंमितो
यज्ञोयज्ञःपुरुषसंमितः ॥ अग्नेतदस्यकल्पयत्वंहिवेत्थयथातथं ॥ यत्पाकत्रामनसादीनदक्षानयज्ञस्यमन्वतेमर्तासः ॥ अग्निष्टद्धोताक्रतुविद्वि
जानन्यजिष्ठोदेवांऋतुशोयजाति ॥ दशगायत्रींजपेत् ॥ अनेनसायंप्रातरौपासनहोमाख्येनकर्मणाभगवान्परमेश्वरःप्रीयतांनमम ॥ वैश्वदेवंकु

कुर्यात् ॥ अद्यपूर्वोच्चारित एवं गुण० पुण्यतिथौ अन्नसंस्कारार्थं आत्मसंस्कारार्थं पंचसूनादोषपरिहारार्थं षडाहुतिवैश्वदेवेन यक्ष्ये ॥ ॐ भूर्भुवःसुवः पूर्व
वत्परिषिच्य ॥ अग्नयेनमः इत्यलंकृत्य ॥ अदितेनुमन्यस्वेतिपुनः परिषिञ्च्य ॥ चत्वारिशृंगेतिध्यात्वावरदोभव ॥ गृहसिद्धमन्नमादाय ॥ अग्ना
वधिश्रित्य ॥ उदगुद्वास्य ॥ गायत्र्याप्रोक्ष्य ॥ अभिघार्य ॥ ॐ अग्नयेस्वाहा ॥ अग्नयइदं ॥ ॐ सोमायस्वाहा ॥ सोमायेदं० ।
ॐ विश्वेभ्योदेवेभ्यःस्वाहा ॥ विश्वेभ्योदेवेभ्यइदं० ॥ ॐ ध्रुवायभूमायस्वाहा ॥ ध्रुवायभूमायेदं० ॥ ॐ ध्रुवक्षितयेस्वाहा ॥ ध्रुवक्षि
तयइदं० ॥ ॐ अच्युतक्षितयेस्वाहा ॥ अच्युताक्षितयइ० ॥ ॐ अग्नयेस्विष्टकृतेस्वाहा ॥ अग्नयेस्विष्टकृतइदं० ॥ परिषिच्य ॥
वैश्वदेवसाद्गुण्यार्थं व्याहृतिहोमंकरिष्ये ॥ ॐ भूःस्वाहा ॥ अग्नयइदं० ॥ ॐ भुवःस्वाहा ॥ वायवइदं० ॥ ॐ सुवःस्वाहा । सूर्यायेदं
ॐ भूर्भुवःसुवःस्वाहा ॥ प्रजापतयइदं० ॥ ॐ अदितेन्वमꣳस्थाः ॥ अनुमतेन्वमꣳस्थाः ॥ सरस्वतेन्वमꣳस्थाः ॥ देवसवितःप्रासावीः ॥ ॐ अ
ग्नेत्वन्नो अंतम० समस्मात् ॥ स्वस्तिश्रद्धांमेधां० श्रुतिः ॥ अनेनषडाहुतिवैश्वदेवाख्येनकर्मणाभगवान्परमेश्वरःप्रीयतांनमम ॥ इतिसपत्नीकपुरुष
स्यअग्नौकरणार्थअग्निसिद्धिवैश्वदेवप्रयोगः ॥ अथब्रह्मचारीविधुरस्नातकश्चाग्निसिद्धिप्र० ॥ आचम्यप्राणाना० । श्रीपरमेश्वरप्रीत्यर्थंप्रतिसां
वत्सरिकश्राद्धांगअग्नौकरणार्थंअग्निसिद्धिंक० । यत्राग्निस्थाप्यते प्राचीरुदक्सꣳस्थाः इतिपूर्ववत । भूर्भुवःसुवरोमित्यग्निंप्रतिष्ठाप्य० अग्निमिध्वा
ॐ भूर्भुवःसुवः इत्यग्निंपूर्ववत्परिषिच्य । अग्नयेनमः इत्याद्यलंकृत्य । अदितेनुमन्यस्वेतिपरिषिच्य । परिस्तीर्य । चत्वारिशृंगेतिध्यात्वा ॥ अयाश्चे
तिमंत्रेणैकाज्याहुतिंहुत्वा ॥ ॐ अयाश्चा० ॥ अदितेन्वमꣳस्थाःपरिषिच्य । ॐ अग्नेत्वंन्नो० स्मात् । अनेनअग्नौकरणार्थअग्निसिद्धेनभगवान्परमे

श्वराः प्रीयतांनमम ॥ षडाहुतिवैश्वदेवंकुर्यात् ॥ * एवंविधुरदूरभार्याप्रवासीस्नातकब्रम्हचारीणइति ॥ ॥ ॥ ॥
आचम्य । पवित्रपाणिःप्राणानायम्य । पवित्रंवंतःपरिवाचंमासतेपितैषांप्रत्नोअभिरंक्षतिव्रतं । महःसंमुद्रंवरुणस्तिरोदंधेधीराइच्छेकुर्धरुणेष्वारभं ।
॥ पवित्रेधृत्वा । तिथिर्विष्णुस्तथावारोनक्षत्रंविष्णुरेवच ॥ योगश्चकरणंचैवसर्वंविष्णुमयंजगत् ॥ विष्णुर्विष्णुर्विष्णुः ॥ श्रीमद्भगवतोम० पुण्यति
थौपुरूरवार्द्रवसंज्ञकानांविश्वेषांदेवानां ॥ प्राचीनावीती ॥ अस्मत्पितृपि०ामहप्रपितामहानां—( अमुकगोत्राणांअमुकशर्मणांवसुरुद्रादित्यस्वरूपा
णां) । प्रतिसांवत्सरिकश्राद्धादौदेहेंद्रियआत्मद्रव्यस्थलगृहभां०भाजनशुध्यर्थंप्रायाश्चित्तसूक्तजाप्यमंत्रपठनमहंकरिष्ये । कुरुष्व । सव्यं ॥ यवोदक
तिलोदकंचकरिष्ये ॥ इमंमेगंगेयमुने० मया—(ताम्रपात्रेउदकांनिक्षिप्य) ॥ गंधद्वारांदुरा० श्रियं—(इतिगंध) ॥ यवोसिधान्यंराजोवावारुणोमधुसंयु
तः । निर्णोदःसर्वपापनांपवित्रमृषिभिःस्मृतं—(इतियवान्) ॥ तिलोसिसोमदेवत्योगोसवोदेवनिर्मितः ॥ प्रत्नवाद्भिःप्रत्नस्वधएहि ॥ तिलान् कांडा
त्कांडात्प्ररोहंतीपरुषःपरुषःपरिं ॥ एवानोदूर्वेप्रतंनुसहस्रेणशतेनच—(इतिकूर्चेनिक्षिप्य) ॥ याःफलिनीर्याअफलाअपुष्पायाश्चपुष्पिणीः ॥ बृह
स्पतिप्रसूतास्तानोमुंचंत्वंहसः—( पूगीफलं ) ॥ अग्नेरेतःश्चंद्रंहिरण्यमद्भ्यःसंभूतममृतंप्रजासु ॥ तत्संभरन्नुत्तरतोनिधायातिप्रयच्छंदुरितंतरेयं ॥

---

टीपः—बृहन्नारदीये—स्नातकाविधुरावास्युयदिवाब्रह्मचारिणः ॥ अग्नौकरणहोमंतुकुर्युस्तेलौकिकेनलः ॥ तैत्तिरीयैब्रह्मचारिस्नातकविधुरलौकिका
ग्नावेवअयाश्चमंत्रेणेतिसिद्धिकृत्वाहोमः । कार्यःसंस्काररत्नमाला ! १ कूर्चप्रमाणः—दर्शेपंचाह्निकेसप्तमहालयनवस्तथा ॥ कूर्चंतुत्रिविधंज्ञेयंशेषंषट्पौरुषं
विदुः ॥

बृहस्पतेजुषस्वनोहव्यानिविश्वदेव्य । रास्वरत्नानिदाशुषे (इतिहिरण्यं) । यवतिलपात्रयोः अयंगंधःइमानिपुष्पाणिगुलसादिलसहितानिदर्भपत्राणि।
कूष्मांडैर्जुहुयाद्योपूतइवमन्येतयथास्तेनोयथाभ्रूणहैवमेषभवतियोयोनौरेतःसिंचतियदर्वाचीनमेनोभ्रूणहत्यायास्तस्मान्मुच्यतेयावदेनोदीक्षामुपैति
दीक्षितएतैःसंततिर्जुहोतिसंवत्सरेदीक्षितोभवतिसंवत्सरादेवात्मानंपुनीतेमासंदीक्षितोभवतियोमासःससंवत्सरःसंवत्सरादेवात्मानंपुनीतेचतुर्विंश
तिंरात्रींदीक्षितोभवतिचतुर्विंशतिरर्धमासाःसंवत्सरःसंवत्सरादेवात्मानंपुनीतेद्वादशरात्रींदीक्षितोभवतिद्वादशमासाःसंवत्सरःसंवत्सरादेवात्मानं
पुनीतेषड्रात्रींदीक्षितोभवतिषडाक्रुतवःसंवत्सरःसंवत्सरादेवात्मानंपुनीतेतिस्रोरात्रींदीक्षितोभवतित्रिपदागायत्रीगायत्रिय एवात्मानंपुनीतेनमांस
मश्नीयान्नस्त्रियमुपेयान्नोपर्यासीतजुगुप्सेतानृतात्पयोब्राह्मणस्यव्रतंयवागूराजन्यस्यामिक्षावैश्यस्याथसौम्येप्यध्वरएतद्व्रतंब्रूयाद्यदिमन्येतोपदस्यामी
त्योदनंधानाःसक्तून्घृतमित्यनुव्रतयेदात्मनोनुपदासाय ॥ तिलोदकयवोदकेनमार्जनंकुर्यात् ॥ शुचीवोहव्यामरुतःशुचीनांशुचिंहिनोम्य
ध्वरंशुचिभ्यः ॥ ऋतेनसत्यमृतसापआयन्छुचिजन्मानःशुचयःपावकाः ॥ अग्निःशुचिव्रततमःशुचिर्विप्रःशुचिःकविः ॥ शुचीरोचतआहु
तः ॥ उदग्नेशुचयस्तवशुक्राभ्राजंतईरते ॥ तवज्योतींष्यर्चयः ॥ ब्राह्मणेष्वमृतंहितं ॥ येनदेवाःपवित्रेण ॥ आत्मानंपुनतेसदा ॥
तेनसहस्रधारेण ॥ पावमान्यःपुनंतुमा ॥ प्राजापत्यंपवित्रं ॥ शतोद्यामंहिरण्मयं ॥ तेनब्रह्मविदोवयं ॥ पूतंब्रह्मपुनीमहे ॥ इंद्रः
सुनीतिसहमापुनातु ॥ सोमःस्वस्त्यावरुणःसमीच्या ॥ यमोराजाप्रमृणाभिःपुनातुमा ॥ जातवेदामोर्जयंत्यापुनातु ॥ अपवित्रःपवित्रो
वासर्वावस्थांगतोपिवा ॥ यस्स्मरेत्पुंडरीकाक्षंसबाह्याभ्यंतरःशुचिः ॥ सर्वाणिस्थलानिशुचयोभवंतु—(संतुशुचीनि०) ॥ तिलदर्भहिरण्यं
गृहीत्वा—( विप्रानत्रिःप्रदक्षिणीकृत्य ) ॥ समस्तसंपत्समवाप्तिहेतवःसमुत्थितापत्कुलधूमकेतवः ॥ अपारसंसारसमुद्रसेतवःपुनंतुमांब्राह्मण

पादपांसवः ॥ आपद्घनध्वांतसहस्रभानवः समीहितार्थार्पणकामधेनवः ॥ समस्ततीर्थाम्बुपवित्रमूर्तयोरक्षंतुमांब्राह्मणपादपांसवः ॥ विप्रौघ
दर्शनात्क्षिप्रंक्षीयंतेपापराशयः ॥ वंदनान्मंगलावाप्तिरर्चनादच्युतंपदं ॥ आधिव्याधिहरंनृणांमृत्युदारिद्र्यनाशनं ॥ श्रीपुष्टिकीर्तिदंवंदे
विप्रश्रीपादपंकजं ॥ यावंतोवैदेवतास्ताःसर्वावेदविदिब्राह्मणेवसंतितस्माद्ब्राह्मणेभ्योवेदविद्भ्योदिवेदिवेनमस्कुर्यान्नाश्लीलंकीर्तयेदेताएवदेवताः
प्रीणाति ॥ द्वौनमस्कारौकृत्वा ॥ नमोदेवेभ्यः ॥ अपसव्यं ॥ स्वधापितृभ्यः ॥ पितृपितामहप्रपितामहानांअमुकगोत्राणांअ०
श० ॥ पितुःप्रतिसांवत्सरिकश्राद्धंकर्तुंममाधिकारसंपदस्त्वितिभवंतोब्रुवंतु—( अस्तुश्राद्धाधिकारसंपत् ) ॥ कालस्यमुख्यकालो
स्त्वितिभवंतोब्रुवंतु—( कालस्यमुख्यकालोस्तु० ) ॥ ॥ ॥ पाकादीनांपवित्रतास्त्वितिभवंतोब्रुवंतु—( पाकादीनांपवित्रतास्तु० )
सर्वेपाकाःशुचयोभवंतु ॥ सव्यं । प्राणानायम्य ॥ पुरूरवार्द्रवसंज्ञकानांविश्वेषांदेवानां ॥ अपसव्यं ॥ पितुःप्रतिसांवत्सरिकश्राद्धेपितृपिता
महप्रपितामहानां ॥ गो० श० वसुरुद्रा० ॥ प्रतिसांवत्सरिकश्राद्धंसदैवंसपिंडंसाग्नौकरणंपार्वणविधिनायुष्मदनुज्ञयासद्यःकरिष्ये—( कुरुष्व ) ।
सव्यंब्राह्मणवरणंक० । कुरु० । पुरूरवार्द्रवसंज्ञकानांविश्वेषांदेवानांस्थानेत्वयाक्षणःकरणीयः । ( सुकरणीयः ) । एवंद्वितीयदेवार्थेक्षणःकरणीयः ।
( सुकर० ) ॥ अपसव्यं ॥ अस्मत्पितृपितामहप्रपितामहानां ॥ गो०श०वसुरु०स्थानेत्वयाक्षणःकरणीयः—( सुकरणीयः ) । ( पित्रर्थेत्वया
क्षणःकरणीयःपितामहस्यत्वया०प्रपितामहस्य० ) ॥ सव्यं ॥ अक्रोधनैःशौचपरैःसततंसत्यवादिभिःभवितव्यंभवद्भिश्चमयाचअस्मत्पि
तुःप्रतिसांवत्सरिकश्राद्धकारणात् ॥ (श्राद्धकर्माणि) ॥ * देवपात्रस्थानेचतुरस्रमंडलंकृत्वा ॥ अपंगेयः । यवाक्षतकुशाः ॥ पुरूरवार्द्रवसंज्ञं

---

टीपः—१ प्रादेशमात्रंदेवानांउत्तरेचतुरस्रकं ॥

कामविश्वेदेवाः आगतंसुस्वागतं ॥ पुरु० देवाः इदंवः पाद्यंब्राह्मणेभूर्भुवःसुवः इदंवःपाद्यं(सुपाद्यं) ॥ शंन्नोदेवीरभिष्टय आपोभवंतुपीतये ॥
शंयोरभिस्रवंतुनः ॥ शुक्रमसिज्योतिरसितेजोसिदेवोवः सवितोत्पुनात्वच्छिद्रेणपवित्रेणवसोः सूर्यस्यरश्मिभिः ॥ चरणंपवित्रंविततंपुराणंयेन
पूतस्तरतिदुष्कृतानि ॥ तेनपवित्रेणशुद्धेनपूताः अतिपाप्मानमरातिंतरेम ॥ नमोब्रह्मण्यदेवायगोब्राह्मणहितायच ॥ जगद्धितायकृष्णाय
गोविंदायनमोनमः ॥ वंदनान्मंगलावाप्तिः ॥ अपसव्यं ॥ पितृपार्श्वस्थानेत्रर्तुलमंडलंकृत्वा ॥ अपंगंधः अयंतिलकुशाः अस्मत्पितृपि०सहाः ॥
आगतं–( सुस्वागतं ) ॥ गोत्राः पितृपितामहप्रपितामहाः । भूर्भुवःस्वधाइदंवःपाद्यं ३ ॥ सव्येनसुपाद्यं ॥ शंनोदेवी० ॥ अप० ॥ शुक्रमसि
ज्यो० ॥ सव्यं ॥ चरणंपवि० ॥ वंदनान्मंगलावाप्तिः ॥ हस्तौपादौप्रक्षाल्य ॥ ब्राम्हणैःसहआचम्य ॥ पुरुरवार्द्रवसंज्ञकाविश्वेदेवाः
भूर्भुवःसुवःस्तां अयंवोविष्टरः ॥ अत्रोपविशंतुभवंतः–( अत्रोपविशामः ) ॥ अस्म० ॥ अस्मत्पितृपितामहप्रपितामहाः भूर्भुवःस्वधास्तांअ
मीतेविष्टरः ॥ अत्रोपविशंतुभवंतः–( अत्रोपविशामः ) ॥ विष्टरांतेपवित्रत्यागः ॥ आचम्य ॥ पवित्रेधृत्वा ॥ पवित्रांवंतःप० ॥
अग्रपूर्वोद्व् तियो ॥ प्राचीनावीतीअस्मत्पितुःप्रतिसांवत्सरिकश्राद्धकर्मकरिष्ये–कु० ॥ चतुर्दिक्षुयवोदकंप्रोक्षेत् ॥ अपहताअसु
रारक्षांसिपिशाचायेक्षयंतिपृथिवीमनु । अन्यत्रेतोगच्छंतुयत्रेतेषांगतंमनः ॥ अप० । दक्षिणतः । चतुर्दिक्षुतिलान्विकीर्य ॥ वातिलोदकंप्रोक्ष्य ॥
उदीरतामवरउत्परासउन्मध्यमाःपितरःसोम्यासः ॥ असुंयईयुरवृकाऋतज्ञास्तेनोवंतुपितरोहवेषु ॥ सव्यं ॥ गायत्रीमंत्रेणपाकप्रोक्षणं ॥

---

टीपः—१ वितस्तिमात्रंपितृणांदक्षिणेवर्तुलंभवेत् ॥ २ बहिरंगणेअवर्षंकृत्वातत्रब्राह्मणानांपादप्रक्षालनं —विश्वप्रकाशः

यद्देवादेवहेळनंदेवासश्चकृमावयं ॥ आदित्यास्तस्मान्मामुंचतर्तस्यर्तेनमामित ॥ देवाजीवनकाम्यायद्वाचानृतमूदिम ॥ तस्मान्नइह
मुंचतविश्वेदेवाःसजोषसः ॥ ऋतेनद्यावापृथिवीऋतेनत्वꣳसरस्वति ॥ कृतात्पाह्येनसोयत्किंचानृतमूदिम ॥ पाकादिनापवित्रतास्तु ॥
सर्वेपाकाःशुचयोभवंतु ॥ श्राद्धार्थाःसंपादितपदार्थाःदेशतःकालतश्चश्राद्धहविर्योग्याभवंतु ॥ अप० श्राद्धकालेगयाध्यात्वाध्यात्वादेवंगदाधरं ॥
वस्वादींश्चपितृन्ध्यात्वाततःश्राद्धंप्रवर्ततेप्रवर्तय ॥ सव्यं ॥ देवताभ्यः ॥ अप० ॥ पितृभ्यश्च नमःस्वाहायैस्वधायैनित्यमेवनमोनमोनित्यमे
वनमोनमः ॥ सव्यं ॥ पुरूरवा० ब्रह्मणेभूर्भुवःसुवः—इदमासनं ॥ स्वासनं ॥ आस्यतांधर्मोसिआपः ॥ देवेक्षणःक्रियतां ॥ ॐतथा ॥ प्राप्नो
तुभवाप्राप्नवानि ॥ भूमिंप्रोक्ष्य ॥ दर्भानास्तीर्य ॥ पात्राद्वयंन्युब्जंनिधाय ॥ प्रोक्ष्य ॥ उत्तानेप्रोक्ष्य ॥ यवान्विकीर्यदर्भांतर्हितेष्व
पआसिच्य ॥ तूष्णींउदकमापूर्य ॥ शन्नोदेवीत्यभिमंत्र्य ॥ शंन्नोदेवी० ॥ यवोसिधान्य० ॥ अर्घ्यपात्रयोःअयंगंधः । इमानिवःपुष्पाणि
तुलसीदलानि ॥ विश्वेभ्योदेवेभ्योवोजुष्टंगृण्हामि २ इतिमंत्रेणार्घ्यपात्रयोःकुशंभ्रामयित्वानिरस्य ॥ देवपात्रेसंपन्नमस्तुसंपन्नेस्वाहार्घ्याःसं
त्वर्घ्यौ ॥ पुरूरवार्द्रवसंज्ञकाविश्वान्देवान्भवत्स्वावाहयिष्ये—(आवाहय) ॥ विश्वेदेवासआगतशृणुताम इमꣳहवं ॥ एदंबर्हिर्निषीद
त ॥ विश्वेदेवाःशृणुतेमꣳहवंमेयेअंतरिक्षेयउपद्यविष्ठ ॥ येअग्निजिव्हाउतवायजत्राआसद्यास्मिन्बर्हिषिमादयध्वं ॥ आगच्छंतुमहाभागावि
श्वेदेवामहाबलाः ॥ येअत्रविहिताश्राद्धेसावधानाभवंतुते—(सावधानोऽस्तु) ॥ यादिव्याआपःपयसासंबभूवुर्याअंतरिक्षउतपार्थिवीर्याः ।
हिरण्यवर्णायज्ञियास्तानआपःशꣳस्योनासुहवाभवंतु ॥ पुरूरवार्द्रवसंज्ञकाविश्वेदेवाःइदंवोअर्घ्यं—(अस्त्वर्घ्यं) ॥ पात्रेस्थानेस्था ॥ ततःशुद्धोदकं ।
अर्चंतप्रार्चंतप्रियमेधासोअर्चंता ॥ अर्चंतुपुत्रकाउतपुरंनधृष्ण्वर्चत ॥ पुरूरवा० यथाभागशःअमीवोगंधाः—(सुगंधाः) ॥ स्वाहानमोनमम ॥

आयंनेतेपरायंणंदूर्वारोहंतुपुष्पिणीः । न्हदाश्चंपुंडरीकाणिसमुद्रस्यंगृहाइमे । माल्यार्थेइमानिवःपुष्पाणि–सुपुष्पाणि । स्वाहानमोनमम ॥ धूरसि
धूर्वधूर्वंतंधूर्वतंयोस्मान्धूर्वातितंधूर्वयंवयंधूर्वामः ॥ उदकेनैवसांकल्पितंवोधूपः–(सुधूपः) ॥ उद्दीप्यस्वजातवेदोपघ्नंनिर्ऋतिंमम ॥ पशूंश्चमह्यमावह
जीवनंचदिशोदिश ॥ ज्वालाभिधेगृहस्थितंवोज्योतिः–(सुज्योति) ॥ अनुलेपनार्थेगोपीचंदनं–(सुचंदनं) ॥ धारणार्थेयज्ञोपवीतं–(सूप
वीतं) ॥ फलार्थेपूगफलं–(सुफलं) ॥ आच्छादनार्थेकिंचिद्धिरण्यं ॥ पवित्रार्थेइमौकुशौ–(अस्तुपवित्रं) ॥ युवासुवासाःपरिवीतआ
गात्सउश्रेयान्भवतिजायमानः ॥ तंधीरासःकवयउन्नयंतिस्वाधियोमनसादेवयंतः ॥ देवेभ्यःएतानिगंधपुष्पधूपदीपआच्छादनांताःपंचोपचाराः
सर्वेसंपूर्णाभवंतु ॥ अर्चनविधौस्वर्चितमस्तु ॥ युष्मदनुज्ञेयादेवाद्यर्चनंसंपूर्णं ॥ अपसव्यं ॥ पित्राद्यर्चनंकरिष्ये–(कुरुष्व) ॥ पितृपि
तामहप्रपितामहानांगोत्रा॰श॰वसुरुद्रादित्यस्वरूपाणां ॥ ब्रह्मणेभूर्भुवःस्वधाइदमासनं–(स्वासनं) ॥ आस्यतांधर्मोसिअपः ॥ प्रतिसां
वत्सरिकश्राद्धेपित्र्येक्षणःक्रीयतां ॥ ओंतथा ॥ प्राप्नोतुभवान्–प्राप्नवानि ॥ भूमिंप्रोक्ष्य ॥ दक्षिणाग्रांदर्भानास्तीर्य ॥ तत्र
पात्रत्रयंन्युब्जंनिधाय ॥ गायत्र्याप्रोक्ष्य ॥ उद्धृत्य ॥ उत्तानेप्रोक्ष्य ॥ दक्षिणाग्रान्दर्भान्निधाय ॥ उदकंपूरयित्वा ॥ शंन्नोदेवी
त्यभिमंत्र्य ॥ शन्नोदेवी॰ ॥ तिलोसिसोम॰एहि । अस्मत्पितरंअमुकगोत्रंअ॰शर्माणंवसुरूपंइमान्लोकान्प्रीणयाहिनस्वधानमः । एवं ।
पितामहं॰ ॥ प्रपितामहं॰–(प्रतिमंत्रंप्रतिपात्रेतिलान्निक्षिप्य) ॥ अर्घ्यपात्रेषुअयंगंधःइमानिपुष्पाणितुलसीदलानी ॥ सर्वेउपचाराःतिलैः
संपूर्णाःसंतु ॥ पितृपात्रेतेवोजुष्टंगृण्हामिपितामहपात्रे॰प्रपितामहपात्रेतेवो॰अर्घ्यपात्रेषुदर्भंन्यासइत्वा ॥ अर्घ्यपात्राणिसंपन्नानिसुसंपन्ना
नि ॥ स्वधार्घ्यःसंत्वर्घ्यः ॥ अस्मत्पितृपितामहप्रपितामहान्अमुकगोत्रान्अमुकशर्मणःवसु॰पान् ॥ भवत्सुआवाहयिष्ये–आवाहया ॥

उशंतस्त्वाहवामहउशंतःसमिधीमहि ॥ उशन्नुशतआवहपितॄन्हविषेअत्तवे ॥ आयंतुनःपितरःसोम्यासोग्निष्वात्ताःपथिभिर्देवयानैः ॥ अस्मि
न्यज्ञेस्वधयामदंत्वधिब्रुवंतुतेवंत्वस्मान्–(हस्तेतिलान्गृहीत्वाप्रतिविप्रमावाह्य) ॥ सावधानाभवंतुते–(सावधानोस्तु) ॥ यादिव्याआपःपय
सा०भवंतु ॥ अस्मत्पितःगोत्रशर्मन्वसुरूपइदंतेर्घ्यं–(अस्त्वर्घ्यं) ॥ एवंपितामह०गो०श०रु०इदंतेर्घ्यंप्रपितामहः०गो०श०आ०इदंतेर्घ्यं–ततः
शुद्धोदकं ॥ अर्चंतप्रार्चत० ॥ गंधद्वारां० ॥ पितृपितामहप्रपितामहाःयथाभागशःअमीतेगंधाः–(सुगंधाः)आयनेते० ॥ माल्यार्थेइमानि
वपुष्पाणि–(सुपुष्पाणि) ॥ धूरसिधूर्व०धूपः–(सुधूपः) ॥ उद्दीप्यस्वजात० ॥ सूर्यस्थितंवोज्योतिः–(सुज्योतिः) ॥ अनुलेप
नार्थेगोपीचंदनं–(सुचंदनं) ॥ धारणार्थेयज्ञोपवीतं–(सूपवीतं) ॥ फलार्थेपूगफलं–(सुफलं) ॥ आच्छादनार्थेकिंचिद्धिरण्यं ॥ पवित्रा
र्थेइमेकुशाः–(अस्तुपवित्रं) ॥ इदंपितृभ्योनमोअस्त्वद्ययेपूर्वासोयउपरासईयुः ॥ येपार्थिवेरजस्यानिषत्तायेवानूनंसुवृजनासुविक्षु ॥ पितृ
पितामहप्रपितामहाःएतेअत्रगंधपुष्पधूपदीपआच्छादनांताःपंचोपचाराःसर्वसंपूर्णाभवंतु । अर्चनविधेस्त्वर्चितमस्तु । युष्मदनुज्ञयापित्राद्यर्चनंसंपूर्णं ।
सव्यं ॥ विष्णोस्मरणपर्यंकंमंडलादिपात्रासादनंकरिष्ये–(कुरुष्व) ॥ देवस्थानेचतुरस्रमंडलंकृत्वा ॥ अपसव्यं ॥ पितृपात्रस्थानेवर्तुलमंड
लंकृत्वा ॥ भोजनपात्राणिस्थापयेत् ॥ अद्य०पुण्यतिथौअस्मत्पितुःप्रतिसांवत्सरिकश्राद्धेभवदनुज्ञयाअग्नावग्नौकरणंकरिष्ये–(क्रीयतां) ॥ अ
ग्नौकरणार्थंपात्रस्थमन्नमादाय ॥ गायत्र्याप्रोक्ष्य ॥ अभिघार्य ॥ अन्नंचतुर्भागंकृत्वा ॥ ईशान्यभागेअभिघार्य ॥ तूष्णींअग्निंपरिषिच्य ॥
अग्नेश्चतुर्दिक्षुदर्भान्परिस्तीर्य ॥ उपवीती ॥ सोमायपितृपीतायस्वधानमःस्वाहा ॥ अप० ॥ सोमायपितृपीतायेदं० ॥ उप० ॥ अग्नयेक
व्यवाहनायस्वधानमःस्वाहाअप० ॥ अग्नयेकव्यवाहनायेदं० ॥ तूष्णींअप्रदक्षिणंपरिषिच्य ॥ पितृपात्रेअभिघार्य ॥ स्वधेयंअस्तुस्वधा ।

इत्यन्नंदद्यात्-(द्विवारं) ॥ आस्वधेत्याश्रावयति ॥ अस्तुस्वधेतिप्रत्याश्रावयति ॥ स्वधानमइतिवषट्कारोतिस्वधाकारोहिपितॄणां ॥ सव्यं ॥
मूर्धानंदिवो अरतिंपृथिव्यावैश्वानरमृतायजातमग्निं ॥ कविꣳसम्राजमतिथिंजनानामासन्नापात्रंजनयंतदेवाः ॥ इतिमंत्रेणदेवपात्रेअभिघार्य ॥
आमासुपक्वमैरयआसूर्यꣳरोहयोदिवि ॥ घर्मनसामंतपतासुवृक्तिभिर्जुष्टंगिर्वणसेगिरः ॥ सोमोधेनुꣳसोमोअर्वंतमाशुंसोमोवीरंकर्मण्यंददातु ॥
सादन्यंविदथ्यꣳसभेयंपितुःश्रवणंयोददाशदस्मै । पितृपात्रेअभिघार्य । देवपूर्वकमन्नादिपरिवेष्य । अन्नशुध्यर्थंअन्नसूक्तंपठेत् । आब्रह्मन्ब्राह्म
णोब्रह्मवर्चसीजायतामास्मिन्राष्ट्रेराजन्यइषव्यःशूरोमहारथोजायतांदोग्ध्रीधेनुर्वोढानड्वानाशुःसप्तिःपुरंधिर्योषांजिष्णूरथेष्ठाःसभेयोयुवास्ययजमा
नस्यवीरोजायतांनिकामेनिकामेनःपर्जन्योवर्षतुफलिन्योनओषधयःपच्यंतांयोगक्षेमोनःकल्पतां ॥ आब्रह्मन्ब्राह्मणोब्रह्मवर्चसीजायतामित्याह ॥
ब्राह्मणएवब्रह्मवर्चसंदधाति ॥ तस्मात्पुराब्राह्मणोब्रह्मवर्चस्यजायत ॥ आस्मिन्राष्ट्रेराजन्यइषव्यःशूरोमहारथोजायतामित्याह ॥ राजन्यएवशौ
र्यंमहिमानंदधाति । तस्मात्पुराराजन्यइषव्यःशूरोमहारथोजायत ॥ दोग्ध्रीधेनुरित्याह । धेन्वामेवपयोदधाति । तस्मात्पुरादोग्ध्रीधेनुरजायत ।
वोढानड्वानित्याह ॥ अनडुह्येववीर्यंदधाति ॥ तस्मात्पुरावोढानड्वानजायत ॥ आशुःसप्तिरित्याह ॥ अश्वएवजवंदधाति ॥ तस्मात्पुराशुर
श्वोजायत ॥ पुरंधिर्योषेत्याह ॥ योषित्येवरूपंदधाति ॥ तस्मात्स्त्रीयुवतिःप्रियाभावुका ॥ जिष्णूरथेष्ठाइत्याह ॥ आह्वैवतत्रजिष्णु
रथेष्ठाजायते ॥ यत्रैतेनयज्ञेनयजंते ॥ सभेयोयुवेत्याह ॥ योवैपूर्ववयसी ॥ ससभेयोयुवा ॥ तस्माद्युवापुमान्प्रियोभावुकः ॥ आस्य
यजमानस्यवीरोजायतामित्याह ॥ आह्वैवतत्रयजमानस्यवीरोजायते ॥ यत्रैतेनयज्ञे० ॥ निकामेनिकामेनःपर्जन्योवर्षत्वित्याह ॥ निकामेनिका
मेह्वैवतत्रपर्जन्योवर्षति ॥ यत्रैतेनयज्ञेन० ॥ फलिन्योनओषधयःपच्यंतामित्याह ॥ फलिन्योह्वैवतत्रौषधयःपच्यंते ॥ यत्रैतेनयज्ञेन० ॥

योगक्षेमोनःकल्पतामित्याह ॥ कल्पतेहवैतत्रप्रजाभ्योगक्षेमः ॥ यत्रैतेनयज्ञेनयजंते ॥ नमःककुभायनिषंगिणेस्तेनानांपतयेनमः ॥ नमोनि
षंगिणइषुधिमतेतस्कराणांपतयेनमः ॥ नमोनिषंगिणेचेषुधिमतेच ॥ येतीर्थानिप्रचरंतिसृकावंतोनिषंगिणः ॥ तेषाꣳसहस्रयोजनेवधन्वा
नितन्मसि ॥ सइषुहस्तैःसनिषंगिभिर्वशीसꣳस्रष्टासयुधइंद्रोगणेन ॥ सꣳसृष्टजित्सोमपाबाहुशर्ध्यूर्ध्वधन्वाप्रतिहिताभिरस्ता १ इत्यन्नसूक्तं ॥
गायत्रीमंत्रेणपात्रस्थमन्नंप्रोक्ष्य ॥ सत्यंत्वर्तेनपरिषिंचामि ॥ देवपात्रेयवोदकेनप्रदक्षिणंपरिषिच्य ॥ पृथ्वीतेपात्रंद्यौरपिधानंब्राह्मणस्त्वा
मुखेअमृतेअमृतंजुहोमिस्वाहाब्राह्मणानांत्वाविद्यावतांप्राणापानयोर्जुहोम्यक्षितमसिमैषांक्षेष्ठाअमुत्रामुष्मिंलोके ॥ इदंविष्णुर्वि॰सुरे ॥ स्वाहा
श्रीविष्णोहव्यंरक्षस्वपुरूरवा॰देवाःएतद्वोहव्यंसपरिकरंब्राह्मणस्त्वाहवनीयार्थेदत्तंदास्यमानंचआतृप्तेःतत्सर्वंगयइयंभूमिगयागदाधरोभोक्ताभोक्ता
चब्रह्माब्रह्मरूपमन्नंकल्पितसौवर्णपात्रस्थितममृतंअक्षय्यवटच्छायेयं–(अंगुष्ठेनान्नमुपस्पर्शयति) ॥ पुरूरवार्द्रवसंज्ञिकेभ्योविश्वेभ्योदेवेभ्यःइदमिद
मन्नंशक्त्योपस्कारसहितंअमृतरूपेणस्वाहासंपद्यतांहव्यंनमम ॥ गयायांश्रीविष्णुपदेदत्तमन्नमक्षय्यमस्त्वितिभवंतोब्रुवंतु ॥–गयायांविष्णुपदेद
त्तमस्तु ॥ येदेवादिव्येकादशस्थपृथिव्यामध्येकादशस्थ ॥ अप्सुषदोमहिनैकादशस्थतेदेवायज्ञमिमंजुषध्वं ॥ विश्वेदेवास्तुष्टावरदाभवंतु ॥
एवंद्वितीयदेवपात्रे ॥ पितृपात्रेगायत्र्यामन्नंप्रोक्ष्य ॥ अपसव्यं ॥ सत्यंत्वर्तेनपरिषिंचामि ॥ पृथ्वीतेपात्रं॰स्वधाश्री
विष्णोःक॰पंइक्षस्व ॥ अस्मत्पितृपितामहप्रपितामहोदेवताःएतद्वःकव्यंसपरीकरंदत्तंदास्यमानंचआतृप्तेःतत्सर्वंगयइयंभूमिगयागदाधरोभोक्ताभो
क्ताचब्रह्माब्रह्मरूपमन्नंकल्पितरजतपात्रस्थितमन्नंअक्षय्यवटछायेयं ॥ पितृपिता॰भ्यःगोत्रेभ्यःशर्मभ्यःइदमिदमन्नंअमृतरूपेणसंपद्यतांस्वधाक
व्यंनमम ॥ गयायांश्रीरुद्रपादादिसमस्तपादेषुदत्तमस्तु ॥ गयागदाधरःप्रीतोभवतु ॥ येचेहपितरोयेचनेहयाꣳश्चविद्मयाꣳउचनप्रविद्म ॥

अग्नेतान्वेत्थयतितेजातवेदस्तयाप्रत्तꣳस्वधयामदंतुस्वधानयः । पितृभ्यःयथासांकल्पितमन्नंप्रीयतां । सव्यं ॥ ब्रह्मार्पणंब्रह्महविर्ब्रह्माग्नौब्रह्मणाहु
तं ॥ ब्रह्मैवतेनगंतव्यंब्रह्मकर्मसमाधिना ॥ हरिर्दाताहरिर्भोक्ताहरिरन्नंप्रजापतिः ॥ हरिर्विप्रशरीरस्थोभुंक्तेभोजयतेहरिः ।। चतुर्भिश्चच
तुर्भिश्चद्वाभ्यांपंचभिरेवच ॥ हुयतेचपुनर्द्वाभ्यांसमेविष्णुःप्रसीदतु ॥ तत्सत्ब्रह्मार्पणमस्तु ॥ देशकालपात्रमंत्रतंत्रकर्तृभोक्तृद्रव्यैःसर्वंन्यूनातिरि
क्तान्यछिद्रमस्त्वितिभवंतोब्रुवंतु ॥ सर्वंन्यूनातिरिक्तान्यछिद्रमस्तु ॥ अद्य०पुण्यतिथौ ॥ प्राचीनावीती ॥ पितृपितामहप्रपितामहान्गोत्रा
न्शर्मणःवसुरुद्रादित्यस्वरूपानतानउद्दिश्यमयाक्रियमाणेनप्रातिसांवत्सारिकश्राद्धान्नप्रदानेनपितृपितामहप्रपितामाहानांगोत्राणांशर्मणांवसुरुद्रा०
णांएतेषांसर्वेसकलंभूत्वापुनरावृत्तिरहितशाश्वतब्रह्मलोकावाप्तिरास्त्वितिभवंतोब्रुवंतु ॥-पुनरावृत्तिरहितशाश्वतब्रह्मलोकावाप्तिरस्तु ॥ सव्यं
मधुवाताऋता०भवंतुनः ॥ मधुमधुमधु ॥ सर्वंमध्वस्तु ॥ ईशानविष्णुकमलासनकार्तिकेयवन्हित्रयार्करजनीशगणेश्वराणां ॥ क्रौंचाम
रेंद्रकलशोद्भवकश्यपानांसभ्यावसथ्यदधिकण्वमतंगवानां ॥ संध्यात्रयाक्षवटफल्गुगदाधराणांपादांनमामिसततंपितृमुक्तिहेतोः ॥ गयायैनमः ।
गदाधरायनमः ॥ पुंडरीकाक्षाय० । काशीविश्वेश्वराय० ॥ गयेयंगयेयं ॥ देवतानैवेद्यं ॥ अपसव्यं ॥ एकोविष्णुर्महद्भूतंपृथक्भू
तान्यनेकशः ॥ त्रीनलोकान्व्याप्यभूतात्माभुंक्तेविष्वभुगव्ययः ॥ अनेनममापितुःप्रतिसांवत्सरिकश्राद्धीयब्राह्मणभोजनेनपितृ०स्वरूपीश्रीमज्ज
नार्दनवासुदेवःप्रीयतां० ॥ सव्यं ॥ देवेभ्यःतत्सत्अमृतमस्तु ॥ अपसव्यं ॥ स्वधापितृभ्यःतत्सत्अमृतमस्तु ॥ श्रद्धायांप्राणेनिविष्टो
मृतंजुहोमि ॥ श्रद्धायामपानेनि० । श्रद्धायांव्यानेनि० ॥ श्रद्धायामुदानेनि० । श्रद्धायांꣳसमानेनिविष्टोमृतंजुहोमि ॥ ब्रह्मणिमआ
त्मामृतत्वाय ॥ इतिजपन् । अप०पितृपूर्वकंपूर्वापोशनार्थंउदकंदत्वा ॥ सव्यंदेवानां ॥ अमृतोपस्तरणमसि ॥ श्रद्धायांप्राणेनिविष्टोमृतंजुहोमि ॥

शिवोमाविशाप्रदाहाय ॥ प्राणायस्वाहा ॥ श्रद्धायामपानेनिवि० ॥ अपानायस्वाहा ॥ श्रद्धायांव्यानेनिवि० । व्यानायस्वाहा ॥
श्रद्धायामुदानेनिवि० ॥ उदानायस्वाहा ॥ श्रद्धायांसमानेनिवि०हाय ॥ समानायस्वाहा ॥ ब्रह्मणिमआत्मामृतत्वाय ॥ नेत्रस्प
र्शार्थंउदकंदत्वा ॥ दशगायत्रींजपेत् ॥ अपेक्षितंयाचितव्यंत्याज्यंचैवानुपेक्षितं ॥ उपविश्यसुखेनैवभोक्तव्यंस्वस्थमानसैः ॥ विद्यमानशाक
पाकादिपदार्थेषुयद्रोचतेतद्ग्राह्यंयन्नरोचतेतत्त्याज्यंयथासुखंजुषध्वं ॥–जुषामहे ॥ अभिश्रवणसूक्तानिपठेत् ॥ राक्षोघ्नान्पितृलिंगकान्सूक्तान्श्राव
यिष्ये–(आश्रावया) ॥ देवताभ्यःपितृभ्यश्चमहायोगिभ्यएवच ॥ नमःस्वाहायैस्वधायैनित्यमेवनमोनमोनित्यमेवनमोनमः ॥ ईशानःपितृरूपे
णमहादेवोमहेश्वरः ॥ प्रीयतांभगवानीशःपरमात्मासदाशिवः ॥ सप्तव्याधादशारण्येमृगाःकालंजनेगिरौ ॥ चक्रवाकाःशरद्वीपेहंसाःसरसि
मानसे ॥ तेपिजाताकुरुक्षेत्रेब्राह्मणावेदपारगाः ॥ प्रस्थितादीर्घमध्वानंयूयंकिमवसीदथ ॥ अमूर्तानांचमूर्तानांपितृणांदीप्ततेजसां । नमस्यामि
सदातेषांध्यायीनांयोगचक्षुषा ॥ चतुर्भिश्च०प्रसीदतु ॥ भोजनांतेविकिरंदद्यात् ॥ अप०असंस्कृतप्रमीतानांत्यागिनां कुलभागिनां ॥ उच्छिष्टभागधे
यानांविकिरेषुदर्भासनं ॥–इतिमंत्रेणदेवपितृपात्रयोर्मध्येदर्भानास्तीर्य ॥ सव्यं ॥ मधुवाताऋता०तुनः ॥ अप० ॥ अक्षन्नमी०हरी ॥ सव्यं ॥
मधुमधुश्राद्धंसंपन्नं–(सुसंपन्नं) ॥ विश्वेदेवाःतृप्तास्थः ।–(तृप्ताःस्मः) ॥ अप० । पितृ०महाःमधु०संपन्नं–सु० ॥ पितृ०तृप्तास्थः– तृप्ताःस्मः ॥
असंस्कृतप्रमीतायैत्यागिन्योयाःकुलस्त्रियः ॥ दास्यामितेभ्योविकिरमन्नंताभ्यश्चपैतृकं ॥ तदुपरितिलोदकंदत्तंनमम ॥ सव्यं ॥ असो
मपाश्चयेदेवायज्ञभागविवर्जिताः । तेषामन्नंप्रदास्यामिविकिरंवैश्वदेविकं । यवोदकंदत्तंनमम । विकिरंदद्यात् ॥ येअग्निदग्धायेनाग्निदग्धायेवांजाताः
कुलेमम ॥ भूमौदत्तेनपिंडेनतृप्तायांतुपरांगतिं ॥ येअग्निदग्धेभ्यःयेअनग्निदग्धेभ्यःअस्मत्कुलप्रसूतेभ्योजीवेभ्यःअयंउच्छिष्टपिंडंस्वधानमः ॥

अग्निदग्धाअनाग्निदग्धाश्चमार्जयंतां ॥ हस्तौपादौप्रक्षाल्याचम्यपवित्रत्यागः ॥ आचम्यःपवित्रेधृत्वा ॥ पवित्रवंतःप० रभं ॥ शेषमुच्छिष्टभाग्भ्यो
र्भंदीयतां ॥ यजमानकुलेजातादासादास्योनकांक्षिणः ॥ तेसर्वेतृप्तिमायांतुमयादत्तेनभूतले ॥ अप० ॥ पूर्ववत्उत्तरापोशनार्थमुदकंदत्वा
अमृतापिधानमसि ॥ श्रद्धायांप्राणेनिविश्यामृतं हुतं ॥ प्राणमन्येनाप्यायस्वा ॥ श्रद्धायांमपानेनिविश्यामृत हुतं ॥ अपानमन्नेनाप्यायस्व ॥
श्रद्धायांव्यानेनिविश्यामृतं हुतं ॥ व्यानमन्नेनाप्यायस्व ॥ श्रद्धायांमुदानेनिविश्यामृतं हुतं ॥ उदानमन्नेनाप्यायस्व ॥ श्रद्धायां स
मानेनिविश्यामृतं हुतं ॥ समानमन्नेनाप्यायस्व ॥ अंगुष्ठमात्रःपुरुषोंगुष्ठंचसमाश्रितः ॥ इशःसर्वस्यजगतःप्रभुप्रीणातिविश्वभुक् ॥ रौरवे
पूयनिलयेपद्मार्बुदनिवासिनां ॥ अर्थिनामुदकंदत्तमक्षय्यमुपातिष्ठतु ॥ अद्यपूर्वो०पुण्यतिथौ ॥ प्राचीनावीती ॥ पितुःप्रतिसांवत्सरिक
श्राद्धीयतिलोदकपिंडप्रदानंकरिष्ये–कुरु० ॥ अपांमेध्यंयज्ञियं सदेवं शिवमस्तुमे ॥ आछिन्नावोमारिषंजीवांतिशरदःशतं ॥ आछिनत्ति ॥
अपहतासुरारक्षांसिपिशाचावेदिषतः ॥ इत्यद्भिरवोक्ष्य ॥ आयंतुपितरोमनोजवसः ॥ इत्याभिमंत्र्य ॥ सकृदाछिन्नैर्दर्भैरवस्तीर्य ॥
सकृदाछिन्नंबर्हिरूर्णीमृदुस्योनंपितृभ्यस्त्वाभराम्यहं ॥ अस्मिन्त्सीदंतुमेपितरःसोम्याःपितामहाःप्रपितामहाश्चानुगैःसह ॥ इत्यास्तृणाति ॥
मार्जयंतांपितरोमार्जयंतांपितामहोमार्जयंतांप्रपितामहोमार्जयंतां ॥ एतत्तेअस्मत्पिताअमुकगोत्रअमुकशर्मन्वसुरूपयेचत्वामनु ॥ पित्रेगोत्रायश
र्मणेवसुरूपाययेचतमनुगच्छंतितेभ्यश्चअयंपिंडतस्मैतस्वधानमः गयायांविष्णुपदेदत्तमस्तु ॥ तदुपरितिलोदकदत्तंनमम ॥ एवंसर्वत्र ॥ यन्मे
माताप्रममादयच्चचारानन्नुव्रतं ॥ तन्मेरेतःपितावृंक्तामासुरन्योपपद्यतां ॥ पितृभ्यःस्वधाविभ्यःस्वधानमः ॥ पितामहेभ्यःस्वधा०नमः ॥
प्रपितामहेभ्यःस्वधा०नमः ॥ अत्रपितरोयथाभागमंदध्वं ॥ (अक्षन्नापितरःअमीमदंतपितरःअतीतपंतपितरःपितरःशुधध्वं) ॥ अमी

मदंतपितरःसोम्याः ॥ येसमानाःसमनसःपितरोयमराज्ये ॥ तेषांलोकस्वधानमोयज्ञोदेवेषुकल्पतां ॥ येसजाताःसमनसोजीवाजीवेषु
मामकाः ॥ तेषांश्रीर्मयिकल्पतामस्मिन्लोकेशतंसमाः ॥ वीरंधत्तपितरः ॥ शेषमन्नंअवघ्राय ॥ पवित्रत्यागः ॥ हस्तौपादौप्रक्षाल्या
च्यम्य ॥ पवित्रेधृत्वा ॥ मार्जयंतांपितरोमार्जयंतांपितामहोमार्जयंतांप्रपितामहोमार्जयंतां ॥ पितःअभ्यंक्ष्वपितामहअभ्यंक्ष्वप्रपितामह
अभ्यंक्ष्व ॥ अंक्षंक्ष्वेतिकज्जलं ॥ एतानिवःपितरोवासांस्यतोनोन्यत्पितरोमायोष्ठपितामहमायोष्ठप्रपितामहमाये ष्ठवाससोदशांछित्वापिंडेषु
निदधाति ॥ नमस्कारायेतेमंत्राः ॥ नमोवःपितरोरसायनमोवःपितरःशुष्मायनमोवःपितरोजीवायनमोवःपितरःस्वधायनमोवःपितरोमन्यवेन
मोवःपितरोघोरायपितरोनमोवोयएतस्मिंल्लोकेस्थयुष्मांस्तेनुयेस्मिंल्लोकेमांतेनुयएतस्मिन्लोकेस्थयूयंतेषांवासिष्ठाभूयास्तयेस्मिन्लोकेहंतेषांवसिष्ठोभू
यासं ॥ गृहान्नःपितरोदत्तसदोवःपितरोदेष्म ॥ ऊर्जंवहंतीरमृतंघृतंपयःकीलालंपरिस्रुतं ॥ स्वधास्थतर्पयतमेपितृन्तृप्यततृप्यत ॥ परेतपि
तरःसोम्यागंभीरैःपथिभिःपूर्व्यैः ॥ अथापितृन्सुविदत्रांअपीतयमेनयेसधमादंमदंति ॥ मनोन्वाहुवामहेनाराशंसेनस्तोमेनपितृणांचमन्मभिः ।
आनएतुमनःपुनःक्रत्वेदक्षायजीवसे ॥ ज्योक्चसूर्यंदृशे ॥ पुनर्नःपितरोमनोददातुदैव्योजनः ॥ जीवंव्रातंसचेमहि ॥ यदंतरिक्षंपृथिवी
मुतद्यांयन्मातरंपितरंवाजिहिंसिम ॥ अग्निर्मातस्मादेनसःप्रमुंचतुदुरितायानिचकृमकरोतुमामनेनसं ॥ सव्यं ॥ कुलाभिवृद्ध्यर्थसव्येनपिंडपूजांक
रिष्ये ॥ पिंडस्थपितरःपाद्यंस्वधा ॥ अर्घ्यं०आचमनीयं०स्नानीयं०स्वधा ॥ गंधं०तिलाक्षतान्यवाक्षतान्०पुष्पाणि०तुलसी०भृंगराजप
त्राणि०धूपं०दीपं०नैवेद्यं०तांबूलं०दक्षिणां०उत्तरनीराजनदीपं०कर्पूरदीपं०मंत्रपुष्पंस्वधा ॥ अद्य०वर्तमानव्यवहारिकचांद्रमान०पुण्यतिथौ।
प्राचीनावीती ॥ पितृपि०महान्गोत्रान्शर्मणःवसुरु०पान्तान्उद्दिश्यमयाक्रियमाणेनपितुःप्रतिसांव०श्राद्धीयतिलोदकपिंडप्रदानेनपितृपि०नां

गोत्राणांशर्मणांवसुरु॰पाणांएतेषांसर्वेसकलंभूत्वागयापिंडेनैवाक्षय्यातृप्तिर्भूत्वामयादत्ताःपिंडाःगयापिंडतुल्यफलसदृशमस्त्विति भवंतोब्रुवंतु ॥
–गयापिंडतुल्यफलसदृशमस्तु ॥ आन्मालंकारः ॥ पिंडान्नमस्कृत्य ॥ पिंडानुद्वासयिष्ये ॥ उद्वासय ॥ अयोध्यामथुरामायाकाशीकां
ची अवंतिका ॥ पुरीद्वारवतीचैवसप्तैतामोक्षदायकाः ॥ शमीपत्रप्रमाणेनपिंडदद्याद्गयाशिरे ॥ उद्धरेत्सप्तगोत्राणिकुलमेकोत्तरंशतं ॥ तद्वि
ष्णोःपरमंपद ँसदापश्यंतिसूरयः ॥ दिवीवचक्षुराततं ॥ तद्विप्रासोविपन्यवोजागृवा ँसःसमिंधते ॥ विष्णोर्यत्परमंपदं ॥ पिंडस्थानेशां
तिरस्तु ॥ पुष्टिरस्तु ॥ तुष्टिरस्तु ॥ स्वस्थानेवासः ॥ अन्यस्थानेनवासः ॥ देवाःसुप्रोक्षितमस्तु ॥ अस्तुसुप्रोक्षितं ॥
शिवाआपःसंतु–संतुशिवाआपः ॥ यवाःपांतुः ॥ पांतुयवाः ॥ दीर्घमायुःश्रेयःशांतिःपुष्टिःतुष्टिःश्चास्तु ॥ अप॰ ॥ पितरःसुप्रो
क्षितम॰–अस्तुसुप्रोक्षितं॰ ॥ तिलाःपांतु–पांतुतिलाः ॥ देवाःपितरःपितरोदेवाः ॥ देवतापितृप्रसादेनगोत्रंवर्धतांस्वस्तिवर्धतां ॥ वि
श्वेदेवप्रसादोस्तु ॥ पितृप्रसादोस्तु ॥ देवाःस्वस्तीतिब्रूतास्वस्ति ॥ अप॰ । पितरश्चस्वस्तीतिब्रूतास्वस्ति ॥ भोजनपात्राण्युच्चालयिष्ये–उच्चा
लय । सव्यं । देवाःयद्दत्तंश्राद्धमुदकमन्नमस्त्वितिब्रूतास्त्वक्षय्योदकं । अ॰ ॥ पितरःयद्दत्तंश्राद्धमु॰ब्रूतास्त्वक्षय्योदकं ॥ स॰ ॥ उपविष्टेभ्यो
ब्राह्मणेभ्यःश्राद्धभोजनसाद्गुण्यार्थंतांबूलपूर्वकदक्षिणाःपांतु–पांतुदक्षिणाः ॥ स्वधांवाचयिष्ये–वाच्यतां ॥ कूर्चविसर्जनं ॥ ऋचेत्वारुचे
त्वासमित्स्रवंतिसरितोनधेनाः ॥ अंतर्हृदामनसापूयमानाः ॥ घृतस्यधाराअभिचाकशीमि ॥ हिरण्ययोवेतसोमध्यआसां ॥ तस्मिन्त्सु
पर्णोमधुकृत्कुलायीभजन्नास्तेमधुदेवताभ्यः ॥ तस्यासतेहरयःसप्ततीरेस्वधांदुहानाअमृतस्यधारां ॥ अप॰ ॥ वाजेवाजेवतवाजिनोनोधनेषु
विप्राअमृताऋतज्ञाः ॥ अस्यमध्वःपिबतमादयध्वंतृप्तायातपथिभिर्देवयानैः ॥ उत्तिष्ठंतुपितरः ॥ सव्येनविश्वेदेवैःसह ॥ आमावाजस्य

प्रसवोजंगम्यादाद्यावापृथिवीविश्वशंभूः ॥ आमांगंतांपितरांमातरा़चम़ासोमोअमृतत्वायंगम्याः ॥ दातारोनोभिवर्धतांवेदाःसंततिरेवनः ॥ श्रद्धाचनोमाव्यगमद्बहुदेयंचनोस्तु ॥ अन्नंचनोबहुभवेत् । अतिथीꣳश्चलभेमहि ॥ याचितारश्चनःसंतुमाचयाचिष्मकंचन ॥ दातारोवोभिवर्धतांवेदाःसंततिरेववः ॥ श्रद्धाचवोमाव्यगमद्बहुदेयंचवोस्तु ॥ अन्नंचवोबहुभवेत् । अतिथींश्चलभध्वं ॥ याचितारःश्चवःसंतुमाचयाचिढ्वंकंचन ॥ शेषमन्नंकिंक्रियतां–इष्टैःसहभुज्यतां ॥ स्वादुषꣳसदःपितरोवयोधाःकृच्छ्रेश्रितःशक्तींवंतोगभीराः ॥ चित्रसेनाइषुंबलाअमृध्राःसतोवीराउरवोव्रातसाहाः ॥ ब्राह्मणासःपितरःसोम्यासःशिवेनोद्यावापृथिवीअनेहसा ॥ पूषानःपातुदुरितादृतावृधोरक्षामाकिर्नोअघशꣳसईशत ॥ इहैवस्तंमाव्यौष्टंविश्वमायुर्व्यश्नुतं ॥ क्रीडंतौपुत्रैर्नप्तृभिर्मोदमानौस्वेगृहे ॥ आयुःप्रजांधनंविद्यांपुत्रंपौत्रंसुखानिच ॥ प्रयच्छंतुतथाराज्यंपितरःश्राद्धतर्पिताः ॥ सत्याःएताःआशिषःसंतु ॥ गोत्रंगोत्राभिवृद्धिरस्तु । वंशाभिवृद्धिरस्तु ॥ पितृणांब्रह्मलोकावाप्तिरस्तु ॥ अद्यमेसफलंजन्मभवत्पादाब्जवंदनात् ॥ अद्यमेवंशजाःसर्वेयातावोनुग्रहादिकं ॥ पत्रशाकादिदानेनक्लेशितायूयमीदृशाः ॥ तत्क्लेशजातंचित्तस्थंविस्मृत्यक्षंतुमर्हथ–विस्मृत्यक्षमामहे ॥ अद्यतिथिसूर्यपर्वाणि ॥ आसनभोजनशाकपाकद्रव्यदक्षिणासर्वब्राह्मणवचनात्परिपूर्णतास्तु ॥ मंत्रहीनंक्रियाहीनंभक्तिहीनंद्विजोत्तमः ॥ श्राद्धंभवतुसंपूर्णप्रसादाद्भवतांमम ॥ आसीमांतमनुव्रजेत्–अनुव्रजामः ॥ कयानश्चित्रआभुवदूतीसदावृधःसखा ॥ कयाशचिष्ठयावृता ॥ वामदेवायनमोज्येष्ठाय०नमः ॥ अष्टावष्टावन्येषुधिष्ण्येषूपदधात्यष्टाशफाःपशवःपशूनेवावरुंधेषण्मांजालीयेषड्वाऋतवऋतवःखलुवैदेवाःपितरऋतूनेवदेवान्पितॄन्प्रीणाति ॥ यस्यस्मृ०च्युतंअनेनममपितुःप्रतिसांवत्सरिकश्राद्धअग्नौकरणब्राह्मणभोजनपिंडप्रदानकर्मत्रयात्मकेनभगवान्पितरःस्वरूपीजनार्दनवासुदेवहरिहरःप्रीयतांनमम ॥ विष्णवेनमो ३ ॥ वषट्तेविष्णवासआकृणो

॥ ९२ ।

शितन्मेंजुषस्वाशिपिविष्टहव्यं ॥ वद्धंतुत्वासुष्टुतयोगिरोमियूयंपातस्वस्तिभिःसदानः ॥ आशीर्वचनं ॥ अपंहंतींद्रायत्रात्रिपुरोडाशमेकादशकपालंनिर्वपेद्धद्धोवापरियंतोवेंद्रमेवत्रातारंस्वेनभागधेयेनोपधावतिसएवैनंत्रायतइंद्रायार्काश्वमेधवंतेपुरोडाशमेकादशकपालंनिर्वपेद्यन्मंहायज्ञोनोपनमेदेतेवैमहायज्ञस्यांत्येतनूयदर्काश्वमेधाविंद्रमेवार्काश्वमेधवंतंस्वेनभागधेयेनोपधावतिसएवास्मांअंततोमहायज्ञंचावयत्युपैनंमहायज्ञोनमति ॥ एषपितृयज्ञः ॥ यजमानस्यपितॄणांब्रह्मलोकावाप्तिरस्तु ॥ ॐबृहत्सामक्षत्रभृद्वृद्धवृष्णियंत्रिष्टुभौजःशुभितमुग्रवीरं ॥ इंद्रस्तोमेनपंचदशेनमध्यमिदंवातेनसगरेणरक्ष ॥ इतिमंत्रेणभस्मधारणं ॥ ॐयातेअग्नेयज्ञियातनूस्तयेह्यारोहात्मात्मानमच्छावसूनिकृण्वन्नस्मेनर्यापुरूणि ॥ यज्ञोभूत्वायज्ञमासीदस्वांयोनिंजातवेदोभुवआजायमानःसक्षयएहि ॥ इतिमंत्रेणआत्मसमारोपणंकार्यं ॥ येभूताःप्र० श्वचांडाल० ॥ आचम्य ॥ शांतापृ० ॥ अद्य०पुण्यतिथौममपितुःप्रतिसांवत्सरिकश्राद्धांगपरिहाणि(अपकर्ष)सद्यस्तिलतर्पणंकरिष्ये ॥ अप०पिता०प्र०तर्पणंकुर्यात ॥ अनेनतिलतर्पणाख्येनकर्मणाभग०प्री० ॥ इतितैत्तिरीयशाखांतर्गतआपस्तंबशाखोक्तश्राद्धसंकल्पप्रयोगः ॥

॥ अथविधुरएवपृष्टोदिविविधानंकार्यं । आचम्यप्राणाना० । ममपितुःप्रतिसां०विधुरकल्पोक्तअग्नौकरणार्थंपृष्टोदिविविधानेनअग्निसिद्धिंक० ॥ यत्राग्निस्थाप्यतेतत्स्थंडिलंकृत्वा ॥ ॐअन्वग्निरुषसामग्रमख्यदन्वहानिप्रथमोजातवेदाः ॥ अनुसूर्यस्यपुरुत्राचरश्मीननुद्यावापृथिवीआततान ॥ ॐपृष्टोदिविपृष्टोअग्निःपृथिव्यांपृष्टोविश्वाओषधीराविवेश ॥ वैश्वानरःसहसापृष्टोअग्निःसनोदिवासरिषःपातुनक्तं ॥ इतिमंत्रेणाग्निंप्रतिष्ठाप्य प्रज्ज्वाल्य ॥ ॐभूर्भुवस्सुवःइतिपरिषिच्य ॥ अलंकृत्य ॥ अदितेनुमन्यस्वेतिवरदोभव ॥ चतस्रःसमिधमादायाभिघार्य ॥ गायत्रीमंत्रेणैकसमिधंहुत्वा । सावित्रेदं । ॐतांसवितुर्वरेण्यस्यचित्रामाहंवृणेसुमतिंविश्वजन्यां । यामस्यकण्वोअदुहत्प्रपीनांसहस्रधारांपयसां

महींगृस्वाहा ॥ सवित्रेइदं० ॥ ॐ अद्यानोदेवसावितःप्रजावत्सावीःसौभगं ॥ परादुःष्वप्नियंसुवस्वाहा ॥ सवित्रे० ॥ विश्वानिदेवसावितर्दु
रितानिपरासुव ॥ यद्भद्रंतन्मआसुवस्वाहा ॥ सवि० ॥ अदितेन्वमं०इतिपरिषिच्य ॥ अग्निंसंपूज्य ॥ अग्नेत्वन्नो० ॥ अनेनपृष्ठोदिविविधा
नेनभगवान्परमेश्वरःप्रीयतांनमम ॥ इतितैत्तिरीयशाखोक्तपृष्ठोदिविविधानंवैशेषिकप्रयोगः ॥ अथसंक्षिप्तदर्शश्राद्धप्रयोगः ॥ वैश्वदेवं
कु० ॥ आचम्यपवित्रपाणिःप्राणानायम्य ॥ विष्णुर्वि० ॥ प्राचीनावीती । पितृपितामहप्रपितामहानांअमुकगोत्राणांअमुकशर्माणांसपत्नीकानां
वसुरुद्रादित्यस्वरूपाणांमातामहमातुःपितामहमातुःप्रपितामहानांअ०गो०अ०श०सपत्नीकानांव० ॥ दर्शश्राद्धब्रह्मार्पणनेविधिनाकरिष्ये ॥ वर्तु
लमंडलंकृत्वा ॥ अयंगंधाःअयंतिलंकुशाः ॥ पितरादिमातामहांताःपितरःआगतंसुस्वागतं ॥ ब्राम्हणस्यपादयोःअत्रंनमसगंधंनममतिलाक्षतपुष्पं
हस्तेतुलसीदलानि ॥ पितृपितामहप्रपितामहभूर्भुवःस्वधाइदंवःपाद्यं ३ मातामह०इदंवःपाद्यं ३ सुपाद्यं ॥ शन्नोदेवीरभिष्टयआपोभवंतुपीतये ॥ शंयोर
भिस्रवंतुनः ॥ शुक्रमसिज्योतिरसितेजोसिदेवोवःसविता तपुनात्वछिद्रेणपवित्रेणवसोःसूर्यस्यरश्मिभिः ॥ सव्यं ॥ चरणंप०रेम ॥ नमोब्रम्ह०नमः ॥
हस्तौपादौप्रक्षाल्य ॥ आचम्यब्राम्हणैसह ॥ प्राणायामः । दर्शश्राद्धांगब्राम्हणपूजनंकरिष्ये । अर्घ्यस्थानेसंकल्पः । अस्तुसंकल्पसिद्धिः ॥ अप०
।' गंधाः-सुगंधाःइमानिपुष्पाणितुलसीदलसहितानिसुपुष्पाणि ॥ धूपत्वेधूपः—सुधूपः ॥ एषतेदीपः—सुदीपः । अनुलेपनार्थेगोपीचंदनं—सुचंदनं
॥ धारणार्थयज्ञोपवीतं—सूपवीतं ॥ फलार्थंपूगफलं—सुफलं ॥ आछादनार्थेकिंचिद्धिरण्यं—आस्त्वाछादनं ॥ पवित्रार्थेइमेकुशाः—अस्तुपवित्रं ॥
सर्वाभावेतिलाः ॥ इदंपितृभ्योनमोअस्त्वद्ययेपूर्वासोयउपरासईयुः ॥ येपार्थिवेरजस्यानिषत्तायेवानूनंसुवृजनासुविक्षु ॥ एतानिअत्र

१ मातृपितामहिप्र.अ.गो.अ.श.व० ॥ २ मातामहीमातुःपि.अ.गो.अ.श०व० । दर्शपार्वणं । अयंप्रचारः । विश्वप्रकाशादिग्रंथेसपत्नीकानां । इत्युक्त

गंधपुष्पधूपदीपआच्छादनांताःपंचोपचाराःसर्वेसंपूर्णाभवंतु ॥ अर्चनविधेष्वर्चितमस्तु ॥ सव्यंविष्णोस्मरणपूर्वकंमंडलादिपात्रासादनंक०
–कुरुष्व ॥ ( देवस्थानेचतुरस्रमंडलंकृत्वा ) ॥ पितृस्थानेवर्तुलमंडलंकृत्वा ॥ अभिघार्य ॥ मूर्धानंदिवोअरतिंपृथिव्यावैश्वानरमृतायं
जातमग्निं ॥ कविꣳसंम्राजमतिथिंजनानामासन्नापात्रंजनयंतदेवाः ॥ आमासुपक्कमैरयआसूर्यꣳरोहयोदिवि ॥ घर्मंनसामंतपतासुवृक्ति
भिर्जुष्टंगिर्वणसेगिरः ॥ सोमोधेनुꣳसोमोअर्वंतमाशुꣳसोमोवीरंकर्मण्यंददातु ॥ सादन्यंविदथ्यंसभेयंपितुश्रावणंयोददाशदस्मै ॥ गायत्री
मंत्रेणपात्रस्थमन्नंप्रोक्ष्य ॥ अपसव्यं ॥ सत्यंत्वर्तेनपरिषिंचामि ॥ पृथ्वीतेपात्रंद्यौरपिधानंब्राह्मणस्त्वामुखेअमृतेअमृतंजुहोमिस्वधाब्राह्मणा
नांत्वाविद्यावतांप्राणापानयोर्जुहोम्यक्षितमसिमैषांक्षेष्ठाअमुत्रामुष्मिंलोके ॥ इदंविष्णुर्वि०सुरे ॥ स्वधाश्री.विष्णोःकव्यंरक्षस्व ॥ अस्मत्पि
तरोदेवताःएतद्वःकव्यंसपरिकरंदत्तंचदास्यमानंचआतृप्तेःस्तृप्तिपर्यंतंगयइयंभूमिःगयागदाधरोभोक्ताभोक्ताचब्रह्माब्रह्मरूपमन्नंकल्पितरजतपात्रस्थि
तमन्नंअक्षय्यवटच्छायेयं ॥ पितृ०मातामह०महेभ्यःगोत्रेभ्यःशर्मभ्यःइदमिदमन्नंअमृतरूपेणसंपद्यतांस्वधाकव्यंनमम ॥ गयायांदत्तमस्तु ॥
गयागदाधरप्रीतोभवतु ॥ येचेहपितरोयेचनेहयाꣳश्चविद्मयाꣳउंचनप्रविद्म ॥ अग्नेतान्वेत्थयदितेजातवेदस्तयाप्रत्तꣳस्वधयामदंतुस्वधानमः ॥
यथासांकल्पितमन्नंमर्पयितां ॥ सव्यं ॥ ब्रह्मार्पणंब्रह्महविः०समेविष्णुःप्रसीदतु ॥ उपवीती ॥ ईशानविष्णुःकमलासनकार्तिकेयोवन्हित्रय,
र्करजनीशगणेश्वराणां ॥ क्रौंच.मरेंद्रकलशोद्भवकश्यपानांसभ्यावसथ्यदधिकण्वमतंगवानां ॥ संध्यात्रयाम्रवटफल्गुगदाधराणांपादांनमामि
सततंपितृमुक्तिहेतोः ॥ गयायैनमः ॥ गदाधराय० ॥ पुंडकाक्षाय० ॥ काशीविश्वेश्वराय० ॥ गयेयंगयेयं ॥ देवतानैवेद्यं ॥ अपसव्यं ॥
एकोविष्णु०भुगव्ययः ॥ अनेनममपितुःदर्शश्राद्धीयब्राह्मणभोजनेनतेनश्रीपितरःस्वरूपीश्रीमज्जनार्दनवासुदेवःप्रीयतां ॥ दशगायत्रींन्जपेत ॥

अपेक्षितंयाचितव्यंत्याज्यंचैवानुपेक्षितं ॥ उपविश्यसुखेनैवभोक्तव्यंस्वस्थमानसैः ॥ विद्यमानशाकपाकादिपदार्थेषुयद्रोचेततद्ग्राह्यंयन्नरोचतेत
त्याज्यंयथासुखंजुषध्वं—जुषामहे ॥ दक्षिणांदत्वा ॥ यस्यस्मृत्या॰ अनेनदर्शश्राद्धांगपार्वणब्राह्मणभोजनाख्येनकर्मणाभगवान्परमेश्वरः
प्रीयतांनमम ॥ विष्णवेनमः ॥ इतिदर्शश्राद्धपार्वणविधिः ॥ अक्षय्यतृतीया ॥ अद्य॰पुण्यतिथौयुगादिश्राद्धंपार्वणविधिनाकरिष्ये ॥
दर्शश्राद्धवत्कुर्यात् ॥ उदकुंभदानं ॥ अद्य॰ममपितृणांअक्षय्यतृप्त्यर्थंब्राह्मणायउदकुंभदानंक॰ ॥ उदकुंभपूजांकुयात्पंचोपचारैःसंपूज्य ॥
ब्राह्मणपूजांकृत्वा ॥ एषधर्मघटोदत्तोब्रह्माविष्णुशिवात्मकः ॥ अस्यप्रदानातृप्यंतुपितरोपिपितामहाः ॥ इदंउदकुंभदानंअमुकशर्मणे
ब्राह्मणायतुभ्यमहंसंप्रददे ॥ इतिअक्षय्यतृतीयायुगादिश्राद्धस॰ ॥ ॥ संक्रांति ॥ अद्य॰पुण्यतिथौअयनश्राद्धपार्वणेनविधिनाकरिष्ये ॥
दर्शश्राद्धवत् ॥ तिलगुडदानं ॥ ममपितन्नदिश्यब्राह्मणायातिलगुडदानंक॰ ॥ तिलस्नाईतिलोद्वर्तीतिलेहोमीतिलोदकी ॥ तिलभुक्ति
लदाताचाषट्तिलाःपापनाशन ॥ इदंतिलगुडदानंसदक्षिणाकंअमुकश॰ब्राह्म॰संप्रददे ॥ इतिसंक्रांतप्रयुक्तश्राद्धविधिः ॥

---

प्रायश्चित्तःश्राद्धभोजने—दशकृत्वःपिबेदापोगायत्र्याश्राद्धभुग्द्विजः ॥ ततःसंध्यामुपासीतजपेच्चजुहुयादपी ॥ उच्चार—आवाहनार्घ्यसंकल्पपिंडे
दानान्नदानयोः ॥ पिंडाभ्यंजनकालेतुतथैवांजनकर्मणि ॥ अक्षय्यासनपाद्येषुगोत्रंनामप्रकाशयेत् ॥ ॥ सपिंडीकरणादूर्ध्वंयावदब्दत्रयंभवेत् ॥
तावदेवनभोक्तव्यंतदीनेश्राद्धमात्रके ॥ प्रथमाद्वैस्थ्यादिभोजीद्वितीयेमांसभक्षकः ॥ तृतीयेरक्तभोजीस्याच्छुद्धंश्राद्धंचतुर्थके ॥—धर्मसिंधु ॥ ॥

## ॥ अथमहालयश्राद्धं ॥

॥ श्री ॥ आचम्यप्राणानायम्य ॥ अग्निसिद्धिपूर्वकंवैश्वदेवंपूर्ववत्कृत्वा ॥ आचम्यपवित्रपाणिःप्राणानायम्य ॥ पवित्रंवंतःप० ॥ पवित्रेधृत्वा ॥ समस्तपितृदेवताभ्योनमः ॥ विष्णोर्विष्णोःश्रीमद्भ०पुण्यतिथौ ॥ धूरिलोचनसंज्ञकानांविश्वेषांदेवानां ॥ अपसव्यं ॥ अस्मत्पितृपितामहप्रपितामहानांअमुकगोत्राणांअ०शर्मणांवसुरुद्रादित्यस्वरूपाणां । मातृपितामहीप्रपितामहीनांअमुकगोत्राणांअ०शर्मणांवसुरु० । सापत्नमातुःअमुकगोत्रायाःअमुकदायावसुरूपायाः ॥ मातामहमातुःपितामहमातुःप्रपितामहानांअमुकगोत्राणांअमुकशर्मणांवसुरु० ॥ मातामहीमातुःपितामहीमातुःप्रपितामहीनांअ०गो०अ०श०व० ॥ पत्न्या.अ०गो०अ०दायाःव० ॥ पुत्रस्यअ०गो०अ०श०सपत्नीकस्यससूतस्यवसुरूपस्य ॥ दुहितुःअ०गो०अ०दायाःसभर्तृकायाःससुतायाःव० ॥ पितृव्यस्यअ०गो०अ०श०सपत्नीकस्यससूतस्यवसुरूपस्य ॥ मातुलस्यअ०गो०अ०श०सप०ससू०वसु० ॥ भ्रातुःअ०गो०अ०श०सप०ससू०वसु० ॥ पितृभगिन्याःअ०गो०अ०दायाःसभर्तृकायाः ससू०व० ॥ मातृभगिन्याःअ०गो०अ०दायाःसभ ससू०वसु० ॥ आत्मभगिन्याःअ०गो०अ०दायाःसभ०ससू०वसु० ॥ श्वशुरस्यअ०गो० अ.श.सप.ससू.वसु. ॥ गुरोःअ०गो०अ०श०स०स०वसु० ॥ मोक्षगुरोः०अ०गो०अ०श०स०स०व० ॥ शिष्यस्यअ०गो०अ०श०स० स०व० ॥ आप्तस्यअ०गो०अ०श०स०ससूतस्यवसु० ॥ एतेषांयतासांश्रेयार्थंमोक्षार्थंतृप्त्यर्थंतदादौदेहेंद्रियआत्मद्रव्यस्थलगृहभांडभाजन शुध्यर्थंप्रायश्चित्तसूक्तजाप्यमंत्रपठणमहंकरिष्ये–कुरुष्व ॥ सव्यंयवोदकतिलोदकादिप्रतिसांवत्सारिकश्राद्धवत्कुर्यात् ॥ संकल्पासनयोःषष्ठीद्विती

यावाहनेतथा ॥ अन्नदानेचतुर्थीस्याच्छेषाःसंबोधनंस्मृतं ॥ द्वितीयाँआवाहने–पितृपितामहप्रपितामहानगोत्रान्शर्मणःवसु०पान् । मातृपितामहीप्र
पितामहीःगोत्राःअमुकदाःवसु०पाः ॥ सापत्नमातरंअ०गोत्रांअ०दांव० ॥ एवंसर्वत्र । चतुर्थीअन्नदाने । पितृपितामहप्रपितामहेभ्यःअ०गोत्रेभ्यः
अ०शर्मभ्यःव०पेभ्यः ॥ मातृपितामहीप्रपितामहीभ्यःअ०गोत्रेभ्यःअ०दाभ्यःव०पाभ्यः ॥ सापत्नमात्रेअ०गोत्रायैअ०दायैवसु०पायै ॥
मातामह०भ्यः ॥ पत्न्यैअ०गोत्रायैअ०दायैवसु०पायै ॥ एवं ॥ संबोधनं–पितृपितामहप्रपितामहाःअ०गोत्राःअ०शर्मणःव०रूपाः ॥
मातृपितामहिप्रपितामह्यःअ०गोत्राःअ०दाःव०रूपाः ॥ मातामह० ॥ पत्निअ०गोत्रअ०दे०वसुरूप ॥ एवंसर्वत्र ॥ पिंडदानोत्तरंधर्म
पिंडान्दद्यात् ॥ आब्रह्मणोयेपितृवंशजातामातुस्तथावंशभवामदीयाः ॥ वंशद्वयेस्मिन्ममदासभूताभृत्यास्तथैवाश्रितसेवकाश्च ॥ मित्राणि
सख्यःपशवश्चवृक्षादृष्टाश्चस्पृष्टाश्चकृतोपकाराः ॥ जन्मांतरेयेममसंगताश्चतेभ्यःस्वधापिंडमहंददामि ॥ १ ॥ पितृवंशेमृतायेचमातृवंशस्तथैवच ॥
गुरुश्वशुरबंधूनांयेचान्येबांधवाःस्मृताः ॥ येमेकुलेलुप्तपिंडाःपुत्रदारविवर्जिताः ॥ क्रियालोपगताश्चैवजात्यंधाःपंगवस्तथा ॥ विरूपाआ
मगर्भाश्चज्ञाताज्ञाताःकुलेमम ॥ धर्मपिंडोमयादत्तोह्यक्षय्यमुपतिष्ठतु ॥ २ ॥ असीपत्रवनेघोरेकुंभीपाकेचयेगताः ॥ तेषामुद्धरणार्थाय
इमंपिंडंददाम्यहं ॥ ३ ॥ उच्छिन्नकुलवंशानांयेषांदाताकुलेनहि ॥ धर्मपिंडोमयादत्तोह्यक्षय्यमुपतिष्ठतु ॥ ४ ॥ शमीपत्रप्रमाणेन
पिंडदद्याद्गयाशिरे ॥ उद्धरेसप्तगोत्राणिकुलमेकोत्तरंशतं ॥ शेषंसांवत्सरिकश्राद्धवत्कुर्यात् ॥ यस्य०सकृन्महालयश्राद्धाख्येनकर्मणाभगवा
न्परमेश्वरःप्रीयतांनमम ॥ इतिमहालयविचारः ॥ (माहालयकालः)यावत्वृश्चिकदर्शनंपर्यंतकुर्यात् ॥ ॥ ॥ ॥

# ॥ अभिश्रवणसूक्तानि ॥

॥ श्रीः ॥ ॐकृणुष्वपाजः०सूक्तं ॥ युंजतेमनउतयुंजतेधियोविप्राविप्रस्यबृहतोविपश्चितः ॥ विहोत्रादधेवयुनाविदेकइन्महीदेवस्यसवितुः
परिष्टुतिः ॥ सुवाग्देवदुर्याऽआवददेवश्रुतौदेवेष्वाघोषेथामानोवीरोजायतांकर्मण्योयꣳसर्वेनुजीवामयोबहूनामसद्वशी ॥ इदंविष्णुर्विचक्रमेत्रे
धानिदधेपदं ॥ समूढमस्यपाꣳसुरेराइवत्तीधेनुमतीहिभूतꣳसूयवसिनीमनवेयशस्ये ॥ व्यस्कभ्नाद्रोदसीविष्णुरेतेदाधारपृथिवीमभितोमयू
खैः ॥ प्राचीप्रेतमध्वरंकल्पयंतीऊर्ध्वंयज्ञंनयतंमाजिह्वरतमत्ररमेथांवर्ष्मन्पृथिव्यादिवोवाविष्णवुत३।पृथिव्यामहोवाविष्णवुतवांतरिक्षाद्धस्तौ
पृणस्वबहुभिर्वसव्यैराप्रयच्छदक्षिणादोतसव्यात् ॥ विष्णोर्नुकंवीर्याणिप्रवोचंयःपार्थिवानिविममेरजाꣳसियोअस्कभायदुत्तरꣳसधस्थंविचक्र
माणस्त्रेधोरुगायोविष्णोरराटमसिविष्णोःपृष्ठमसिविष्णोःश्नप्त्रेस्थोविष्णोःस्युरसिविष्णोर्ध्रुवमसिवैष्णवमसिविष्णवेत्वा ॥ १ ॥ रक्षोहणोवल
गहनोवैष्णवान्खनामीदमहंतंवलगमुद्वपामियन्नःसमानोयमसमानोनिचखानेदमेनमधरंकरोमियोनःसमानोयोसमानोरातीयतिगायत्रेणछंदसावबा
ढोवलगःकिमत्रभद्रंतन्नौसहविराडसिसपत्नहासम्राडसिभ्रातृव्यहास्वराडस्यभिमातिहाविश्वाराडसिविश्वासांराष्ट्राणाꣳहंतारक्षोहणोवलगहनःप्रो
क्षामिवैष्णवान्रक्षोहणोवलगहनोवनयामिवैष्णवान्यवोसियवयास्मद्द्वेषोयवयारातीरक्षोहणोवलगहनोवस्तृणामिवैष्णवान्रक्षोहणोवलगहनोभिजुहो
मिवैष्णवान्रक्षोहनौवलगहनावुपदधामिवैष्णवीरक्षोहणौवलगहनौपर्यूहामिवैष्णवीरक्षोहणौवलगहनौपरिस्तृणामिवैष्णवीरक्षोहणौवलगहनौवैष्ण
वीबृहन्नसिबृहद्ग्रावाबृहतीमिंद्रायवाचंवद ॥ २ ॥ सोमायपितृमतेपुरोडाशꣳषट्कपालंनिर्वपतिपितृभ्योबर्हिषद्भ्योधानाःपितृभ्योग्निष्वात्तेभ्यो

भिरान्यांयैदुग्धेप्रथमेतत्तेंततदेचत्वामन्वेतत्तेपितामहप्रपितामहयेचत्वामन्वत्रापितरोयथाभागंमंदध्वꣳसुसंदृशंत्वावयंमघवन्मंदिषीमहि ॥ प्रनूनंपूर्णवं धुरस्तुतोयासिवशाꣳअनु ॥ योजान्विंद्रतेहरी ॥ अक्षन्नमीमदंतह्यवप्रियाअधूषत ॥ अस्तोषतस्वभानवोविप्रानविष्ठयामती ॥ योजा न्विंद्रतेहरी ॥ अक्षन्पितरोमीमदंतपितरोतीतृपंतपितरोमीमृजंतपितरः ॥ परेतापितरःसोम्यागंभीरैःपथिभिःपूर्व्यैः ॥ अथापितृन्त्सुविदत्रा ꣳअपीतयमेनयेसंधमादंमदंति ॥ मनोन्वाहुवमहेनाराशꣳसेनस्तोमेनापितृणांचमन्मभिः ॥ आनएतुमनःपुनःक्रत्वेदक्षायजीवसे ॥ ज्यो क्चसूर्यंदृशे ॥ पुनर्नःपितरोमनोददातुदैव्योजनः ॥ जीवंव्रातꣳसचेमहि ॥ यदंतरिक्षंपृथिवीमुतद्यांयन्मातरंपितरंवाजिहिꣳसिम ॥ अग्निर्मातस्मादेनसोगार्हपत्यःप्रमुंचतुदुरितायानिचकृममकरोतुमामनेनसं ॥ ३ ॥ उशंतस्त्वाहवामहउशंतःसमिधीमहि ॥ उशन्नुशतआवहपितृ न्हविषेअत्तवे ॥ त्वꣳसोमप्रचिकितोमनीषात्वꣳरजिष्ठमनुनेषिपंथां ॥ तवप्रणीतीपितरोनइंदोदेवेषुरत्नमभजंतधीराः ॥ त्वयाहिनःपितरः सोमपूर्वेकर्माणिचक्रुःपवमानधीराः ॥ वन्वन्नवातःपरिधीꣳरपोर्णुवीरेभिरश्वैर्मघवाभवानः ॥ त्वꣳसोमपितृभिःसंविदानोनुद्यावापृथिवीआतं तंथ ॥ तस्मैतइंदोहविषाविधेमवयꣳस्यामपतयोरयीणां ॥ अग्निष्वात्ताःपितरएहगच्छतसदःसदःसदतसुप्रणीतयः ॥ अत्ताहवीꣳषिप्रय तानिबर्हिष्यथारयिꣳसर्ववीरंदधातन ॥ बर्हिषदःपितरऊत्यर्वागिमावोहव्याचकृमाजुषध्वं ॥ तआगतावसाशंतमेनाथास्मभ्यꣳशंयोररपोदधा त ॥ आहंपितृन्त्सुविदत्राꣳआवित्सिनपातंचाविक्रमणंचविष्णोः ॥ बर्हिषदोयेस्वधयासुतस्यभजंतपित्वस्तइहागमिष्ठाः ॥ उपहूताःपितरःसोम्यासोब र्हिष्येषुनिधिषुप्रियेषु ॥ तआगमंतुतइहश्रुवंत्वधिब्रुवंतुतेअवंत्वस्मान ॥ उदीरतामवरउत्परासउन्मध्यमाःपितरःसोम्यासः ॥ असुंयईयुरवृकाऋत ज्ञास्तेनोवंतुपितरोहवेषु ॥ इदंपितृभ्योनमोअस्त्वद्ययेपूर्वासोयउपरासईयुः ॥ येपार्थिवेरजस्यानिषत्तायेवानूनꣳसुवृजनासुविक्षु ॥ अथाय

थांनः पितरः परांसः प्रत्नासो अग्न ऋतमाशुषाणाः ॥ शुचीदयंदीधितिमुक्थशासः क्षामाभिंदंतो अरुणीरपव्रन् ॥ यदंग्रेकव्यवाहनपितृन्यक्ष्यंऋ
तावृधः ॥ प्रचंहव्यानिवक्ष्यसिदेवेभ्यंश्चपितृभ्यऽआ ॥ त्वमंग्नईडितोजातवेदोवाड्व्यानिसुरभीणीकृत्वी ॥ प्रादाः पितृभ्यंस्वधयातेअंक्ष
न्नद्धित्वंदेवप्रयंताहवींषि ॥ मातलीकव्यैर्यमोअंगिरोभिर्बृहस्पतिर्ऋक्वभिर्वावृधानः ॥ याँश्चंदेवावावृधुर्येचंदेवान्त्स्वाहान्येस्वधयान्येमदंति ॥
इमंयमप्रस्तरमाहिसीदांगिरोभिःपितृभिःसंविदानः ॥ आत्वामंत्राःकविशस्तावहन्त्वेनाराजन्हविषामादयस्व ॥ अंगिरोभिरागहियज्ञियेभिर्यमवैरूपै
रिहमादयस्व ॥ विवस्वंतंहुवेयःपितातेस्मिन्यज्ञेबर्हिष्यानिषद्य ॥ अंगिरसोनःपितरोनवंग्वाअथर्वाणोभृगवःसोम्यासः ॥ तेषांवयंसुम
तौयज्ञियांनामपिभद्रेसौमनसेस्याम ॥ ४ ॥ किंस्विदासीत्पूर्वचित्तिःकिंस्विदासीद्बृहद्वयः ॥ किंस्विदासीत्पिशंगिलाकिंस्विदासीत्पि
लिप्पिला ॥ द्यौरासीत्पूर्वचित्तिरश्वआसीद्बृहद्वयः ॥ रात्रिरासीत्पिशंगिलाविरासीत्पिलिप्पिला ॥ कःस्विदेकाकीचरतिकउंस्विज्जायते
पुनः ॥ किंस्विद्धिमस्यभेषजंकिंस्विदावपनंमहत् ॥ सूर्यएकाकीचरतिचंद्रमाजायतेपुनः ॥ अग्निर्हिमस्यभेषजंभूमिरावपनंमहत् ॥
पृच्छामित्वापरमंतंपृथिव्याःपृच्छामित्वाभुवनस्यनाभिः ॥ पृच्छामित्वावृष्णोअश्वस्यरेतःपृच्छामिवाचःपरमंव्योम ॥ वेदिमाहुःपरमंतंपृथि
व्यायमाहुर्भुवनस्यनाभिं ॥ सोमंमाहुर्वृष्णोअश्वस्यरेतोब्रह्मैववाचःपरमंव्योम ॥ आब्रह्मंन० ॥ ५ ॥ इतिअभिश्रवणसूक्तानि ॥ ॥

॥ इतितैत्तिरीयकर्ममालायांआन्हिकप्रकरणंसमाप्तं ॥

# अथ तैत्तिरीयकर्ममालायांद्वितीयोभागः ॥

आपस्तंबीयब्रह्मकर्म विषयाः १०८ ॥

# अथ संस्कारप्रकरणविषयानुक्रमणिका ॥

# ॥ संस्कारप्रकरणम् ॥

## ॥ १ ॥ अथसंस्काराः ॥

श्रीगणेशायनमः ॥ ॥ यजमानःकृताभ्यंगादिस्वलंकृतःरंगवल्लियुक्तेभूतलेप्राङ्मुखोवस्त्राच्छादितेपीठेउपविश्यस्वदक्षिणतः पत्नींतद्दक्षिणतःसंस्कार्यंचोपवेश्य ॥ आचम्यप्राणानायम्यभद्रंकर्णेतिमांगल्यमंत्रघोषपुरःसरंकुलदेवतादीनांतांबूलसमर्पणं कृत्वाब्राह्मणान्नमस्कृत्यस्वासनेउपविश्य ॥ ॥ ॥ ॥

## ॥ २ ॥ अथ पुण्याहवाचनं ॥

श्रीः ॥ आचम्यप्राणानायम्य ॥ श्रीमन्महागणाधिपतयेनमः ॥ सुमुखश्चैकदंतश्चेत्यादि० शुभतिथौ ॥ अमुकफलसिद्ध्यर्थं ( अमुकसंस्कारंवा ) श्वोद्यवामुककर्मकरिष्ये ॥ तत्रादौनिर्विघ्नतासिद्ध्यर्थंगणपतिपूजनंस्वस्तिपुण्याहवाचनंमातृकापूजनंनां दीश्राद्धं ( मंडपदेवतास्थापनं कुलदेवतास्थापनं पूजनं इडाहवाचनं ) चकरिष्ये ॥ ॥

१ षोडशसंस्काराः१गर्भाधान, २ पुंसवन, ३ सीमंतोन्नयन, ४ जातकर्म, ५ नामकर्म, ६ अन्नप्राशन, ७ चौल, ८ उपनयन, ( वेदव्रतचतुष्टयं, ) ९ प्राजापत्यव्रत, १० सौम्यव्रत, ११ आग्नेयव्रत, १२ वैश्वदेवव्रत, १३ गोदान, १४ समावर्तन, १५ विवाह, १६ पितृकर्म,

॥ ३ ॥ गणपतिपूजनं ॥ ॐ गणानांत्वागणपतिꣳहवामहेकविंकवीनामुपमश्रवस्तमं ॥ ज्येष्ठराजंब्रह्मणांब्रह्मणस्पत
आनःशृण्वन्नूतिभिःसीदसादनं ॥ ॐ भूर्भुवःसुवःऋद्धिबुद्धिसहितंमहागणपतिंसांगंसपरिवारंसायुधंसशक्तिकमावाहयामि ॥
ॐ भूर्भुवःसुवःमहागणपतयेनमः इतिमंत्रेण । आवाहनं । आसनं । पाद्यं । अर्घ्यं । आचमनीयं । पंचामृतस्नानं । शुद्धो
दकं । वस्त्रं । गंधं । अक्षतान् । हरिद्रां । कुंकुमं । पुष्पं । दूर्वांकुरान् । सिंदूरं । धूपं । दीपं । नैवेद्यं । मध्येपानीयं ।
उत्तरापोशनं । हस्तप्रक्षालनं । मुखप्रक्षालनं । करोद्वर्तनार्थेचंदनं० । पूगीफलतांबूलं । दक्षिणां । उत्तरदीपं । कर्पूरदीपं
चसमर्पयामि ॥ ॐ सइज्जनेनसविशासजन्मनासपुत्रैर्वाजंभरतेधनानृभिः ॥ देवानांयःपितरमाविवासतिश्रद्धामनाहविषा
ब्रह्मणस्पतिं ॥ ॐ भूर्भुवःसुवःऋद्धिबुद्धिसहितायमहागणपतयेनमःदूर्वांकुरान्मंत्रपुष्पंस० ॥ नमस्करोमि ॥ विघ्नान्नाशयमे
सर्वान्नाशायोपस्थितान्प्रभो ॥ त्वत्प्रसादेनकार्याणिसर्वाणीहकरोम्यहं ॥ शत्रूणांबुद्धिनाशोस्तुमित्राणामुदयंकुरु ॥ इतिवि
ज्ञाप्यदेवेशंप्रणिपत्यपुनःपुनः ॥ इतिसंप्रार्थ्य ॥ अनेनगणपतिपूजनेनविघ्नहर्तामहागणपतिःप्रीयतां ॥ इतिगणपतिपूजनं ॥

॥ ४ ॥ अथस्वस्तिवाचनं ॥ ॐ महीद्यौःपृथिवीचनइमंयज्ञंमिमिक्षतां ॥ पिपृतांनोभरीमभिः ॥ ॐ ओषधयःसंवदंते
सोमेनसहराज्ञा ॥ यस्मैकुरोतिब्राह्मणस्तꣳराजन्पारयामसि ॥ ॐ आजिघ्रकलशंमह्युरुधारापयस्वत्यात्वाविशंत्विंदवःसमुद्र
मिवसिंधवःसामासहस्रआभंजप्रजयापशुभिःसहपुनर्माविशताद्रयिः ॥ ॐ इमंमेगंगेयमुनेसरस्वतिशुतुद्रिस्तोमꣳसचतापरु
ष्णिया ॥ असिक्नियामरुद्वृधेवितस्तयार्जीकीयेशृणुह्यासुषोमया ॥ ॐ आपोवाइदꣳसर्वंविश्वाभूतान्यापःप्राणावाआपःपशव



---

१ भूमिंस्पृष्ट्वा । २ धान्यराशौकृत्वा । ३ कलशद्वयंनिधाय । ४ उदकमापूर्य ।

आपोन्नमापोमृतमापः सम्राडापोविराडापःस्वराडापश्छंदाꣳस्यापोज्योतीꣳष्यापोयजूꣳष्यापः सत्यमापःसर्वादेवताआपोभूर्भु
वःसुवरापओम् ॥ ॐ[१] गंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीं ॥ ईश्वरीꣳसर्वभूतानांतामिहोपह्वयेश्रियं ॥ ॐ[२] कांडात्कांडात्प्र
रोहंतीपरुषःपरुषःपरि ॥ एवानोदूर्वेप्रतनुसहस्रेणशतेनच ॥ ॐ[३] अश्वत्थेवोनिषदनंपर्णेवोवसतिःकृता ॥ गोभाजइत्किलास
थयत्सनवथपूरुषं ॥ ॐ[४] याःफलिनीर्याअफलाअपुष्पायाश्चपुष्पिणीः ॥ बृहस्पतिप्रसूतास्तानोमुंचंत्वꣳहसः ॥ ॐ[५] अग्नेरेतः
श्चन्द्रꣳहिरण्यं ॥ अद्भ्यःसंभूतममृतंप्रजासु ॥ तत्संभरन्नुत्तरतोनिधाय ॥ अतिप्रयछन्दुरितिंतरेयं ॥ बृहस्पतेजुषस्वनोहव्या
निविश्वदेव्या ॥ रास्वरत्नानिदाशुषे ॥ ॐ[६] युवासुवासाःपरिवीतआगात्सउश्रेयान्भवतिजायमानः ॥ तंधीरासःकवयउन्नयंति
स्वाधियोमनसादेवयंतः ॥ ॐ पूर्णादर्विपरापतसुपूर्णापुनरापत ॥ वस्नेवविक्रीणावहाइषमूर्जꣳशतक्रतो ॥ ॐ तत्त्वायामिब्र
ह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोध्युरुशꣳसमानआयुःप्रमोषीः ॥ अस्मिन्कलशेवरुणंसांगं
सपरिवारंसायुधंसशक्तिकंआवाहयामि ॥ ॐ भूर्भुवःस्वःवरुणायनमःचंदनादिपंचोपचारैःसंपूज्य ॥ ॐ तत्त्वायामि० मंत्र
पुष्पंस० ॥ अनेनकृतपूजनेनवरुणःप्रीयतां ॥ कलशस्यमुखेविष्णुःकंठेरुद्रःसमाश्रितः ॥ मूलेतत्रस्थितोब्रह्मामध्येमातृगणाः
स्मृताः ॥ कुक्षौतुसागराःसर्वेसप्तद्वीपावसुंधरा ॥ ऋग्वेदोथयजुर्वेदःसामवेदोह्यथर्वणः ॥ अंगैश्चसहिताःसर्वेकलशंतुस
माश्रिताः ॥ अत्रगायत्रीसावित्रीशांतिःपुष्टिकरीतथा ॥ आयांतुममशांत्यर्थंदुरितक्षयकारिकाः ॥ सर्वेसमुद्राःसरितस्तीर्था
निजलदानदाः ॥ आयांतुममशांत्यर्थंदुरितक्षयकारकाः ॥ उत्तरकलशेअक्षतान्क्षिपेत् ॥ मातृदेवोभव । पितृदेवोभव ।

---

१ गंधं । २ दूर्वा । ३ पंचपल्लवान् । ४ फलं । ५ हिरण्यं । ६ वस्त्रं ।

आचार्यदेवोभव । अतिथिदेवोभव ॥ सर्वेभ्योब्राह्मणेभ्योनमोनमः ॥ प्रारब्धकार्येनिर्विघ्नमस्तु ॥ अवनिकृतजानुमंडलः कमलमुकुलसदृशमंजलिंशिरस्याधाय ॥ दक्षिणेनपाणिनासुवर्णपूर्णकलशंधारयित्वा ॥ आशिषःप्रार्थयंते ॥ प्रार्थनामाह ॥ एताःसत्याआशिषःसंतु ॥ दीर्घानागानद्योगिरयस्त्रीणिविष्णुपदानिचतेनायुःप्रमाणेनपुण्याहंदीर्घमायुरस्तु ॥ शिवाऽआपः संत्वितिभवंतोब्रुवंतु ॥ एवं ( संतुशिवाआपः ) सौमनस्यमस्तु० ॥ ( अस्तुसौमनीयं ) अक्षतंचारिष्टंचास्तु० ( अस्त्वक्षतमरिष्टंच ) गंधाःपांतुसौमंगल्यंचास्त्वितिभवंतोब्रुवंतु ॥ ( गंधाःपांतुसौमंगल्यंचास्तु ) ॥ अक्षताःपांतुआयुष्यमस्तु० ॥ पुष्पाणिपांतुसौश्रेयमस्तु ॥ तांबूलानिपांतुऐश्वर्यमस्तु ॥ दक्षिणाःपांतुबहुदेयंचास्तु ॥ दीर्घमायुःश्रेयःशांतिःपुष्टिस्तुष्टिश्चास्तु ॥ श्रीर्यशोविद्याविनयोवित्तंबहुपुत्रंचायुष्यंचास्तु ॥ यंकृत्वासर्ववेदयज्ञक्रियाकरणकर्मारंभाःशुभाःशोभनाःप्रवर्तंते ॥ तमहमोंकारमादिंकृत्वाऋग्यजुःसामाशीर्वचनंबहृषिमतंसंविज्ञातंभवद्भिरनुज्ञातःपुण्यंपुण्याहंवाचयिष्ये ॥ विप्राः । वाच्यतां ॥ यजमानः ॐ भद्रंकर्णेभिःश्रृणुयामदेवाः ॥ भद्रंपश्येमाक्षभिर्यजत्राः ॥ स्थिरैरंगैस्तुष्टुवाꣳसस्तनूभिः ॥ व्यशेमदेवहितंयदायुः ॥ ॐ द्रविणोदाद्रविणसस्तुरस्यद्रविणोदाःसनरस्यप्रयꣳसत् ॥ द्रविणोदावीरवतीमिषंनोद्रविणोदारासतेदीर्घमायुः ॥ ॐ सवितापश्चातात्सवितापुरस्तात्सवितोत्तरात्तात्सविताधरात्तात् ॥ सवितानःसुवतुसर्वतातिंसवितानोरासतांदीर्घमायुः ॥ ॐ नवोनवोभवतिजायमानोन्हांकेतुरुषसामेत्यग्रे ॥ भागंदेवेभ्योविदधात्यायंप्रचंद्रमास्तिरतिदीर्घमायुः ॥ ॐ उच्चादिविदक्षिणावंतोअस्थुर्येअश्वदाःसहतेसूर्येण ॥ हिरण्यदाअमृतत्वंभजंतेवासोदाःसोमप्रतिरंतआयुः ॥ ॐ आपउंदंतुजीवसेदीर्घायुत्वायवर्चसे ॥ यस्त्वाहृदाकीरिणामन्यमानोमर्त्यंमर्त्योजोहवीमि ॥ जातवेदोयशोअस्मासुधेहिप्रजाभिरग्नेअमृतत्वमं

श्यां ॥ यस्मैत्वꣳसुकृतेजातवेदउलोकमग्नेकृणवस्योनं ॥ अश्विनंसपुत्रिणंवीरवंतंगोमंतꣳरयिन्नंशतेस्वस्ति ॥ संत्वासिंचामि यजुंषाप्रजामायुर्धनंच ॥ व्रतनियमतपःस्वाध्यायक्रतुदमदानविशिष्टानांब्राह्मणानांमनःसमाधीयतां ॥ विप्राः ( समाहितमनसस्मः ) यजमानःप्रसीदंतुभवंतः ॥ विप्राःप्रसन्नास्मः ॥ यजमानः । शांतिरस्तु । पुष्टिरस्तु । तुष्टिरस्तु । वृद्धिरस्तु । अविघ्नमस्तु । आयुष्यमस्तु । आरोग्यमस्तु । शिवंकर्मास्तु । कर्मसमृद्धिरस्तु । धर्मसमृद्धिस्तु । वेदसमृद्धिरस्तु । शास्त्रसमृद्धिरस्तु । पुत्रसमृद्धिरस्तु । धनधान्यसमृद्धिरस्तु । इष्टसंपदस्तु । बहिर्देशे अरिष्टनिरसनमस्तु । यत्पापंतत्प्रतिहतमस्तु । यच्छ्रेयस्तदस्तु । उत्तरेकर्मण्यविघ्नमस्तु ॥ उत्तरोत्तरमहरहरभिवृद्धिरस्तु ॥ उत्तरोत्तराःक्रियाःशुभाःशोभनाःसंपद्यंतां ॥ तिथिकरणमुहूर्तनक्षत्रसंपदस्तु । तिथिकरणमुहूर्तनक्षत्रग्रहलग्नाधिदेवताःप्रीयंतां । तिथिकरणेमुहूर्तनक्षत्रेसग्रहेसदैवतेप्रीयेतां । दुर्गापांचाल्यौप्रीयेतां । अग्निपुरोगाविश्वेदेवाःप्रीयंतां । इंद्रपुरोगामरुद्गणाःप्रीयंतां । ब्रह्मपुरोगाःसर्वेवेदाःप्रीयंतां ॥ विष्णुपुरोगाःसर्वेदेवाःप्रीयंतां । माहेश्वरीपुरोगाउमामातरःप्रीयंतां । वसिष्ठपुरोगाऋषिगणाःप्रीयंतां । अरुंधतीपुरोगाएकपत्न्यःप्रीयंतां । ऋषयश्छंदांस्याचार्यावेदादेवायज्ञाश्चप्रीयंतां । ब्रह्मचब्राह्मणाश्चप्रीयंतां । श्रीसरस्वत्यौप्रीयेतां । श्रद्धामेधेप्रीयेतां । भगवतीकात्यायनीप्रीयतां । भगवतीमाहेश्वरीप्रीयतां । भगवतीपुष्टिकरीप्रीयतां । भगवतीतुष्टिकरीप्रीयताम् । भगवतीऋद्धिकरीप्रीयतां । भगवतीवृद्धिकरीप्रीयतां । भगवंतौविघ्नविनायकौप्रीयेतां । भगवान्स्वामीमहासेनःसपत्नीकःससुतःसपार्षदःसर्वस्थानगतःप्रीयतां । हरिहरहिरण्यगर्भाःप्रीयंतां । सर्वाग्रामदेवताःप्रीयंतां । सर्वाःकुलदेवताःप्रीयंतां । सर्वावास्तुदेवताःप्रीयंतां । बहिरपः । हताब्रह्मद्विषः । हताःपरिपंथिनः । हताअस्यकर्मणोविघ्नकर्तारः । शत्रवःपरा

भवंयांतु । शाम्यंतुघोराणि । शाम्यंतुपापानि । शाम्यंत्वीतयः । शुभानिवर्धंतां । शिवाआपःसंतु । शिवाऋतवःसंतु । शिवाअग्नयःसंतु । शिवाआहुतयःसंतु । शिवाओषधयःसंतु । शिवावनस्पतयःसंतु । शिवाअतिथयःसंतु । अहोरात्रेशिवे स्याताम् । निकामेनिकामेनःपर्जन्योवर्षतुफलिन्योनओषधयःपच्यंतांयोगक्षेमोनःकल्पतां । शुक्रांगारकबुधबृहस्पतिशनैश्च रराहुकेतुसोमसहिताआदित्यपुरोगाःसर्वेग्रहाःप्रीयंतां । भगवान्नारायणःप्रीयतां । भगवान्पर्जन्यःप्रीयतां । भगवान्स्वामी महासेनःप्रीयतां । पुण्याहकालान्वाचयिष्ये ॥ वाच्यतां ॥ ॐ उद्गातेवशकुनेसामगायसिब्रह्मपुत्रइवसवनेषुशंससि । वृषेव वाजीशिशुमतीरपीत्यासर्वतोनःशकुनेभद्रमावदविश्वतोनःशकुनेपुण्यमावद ॥ याज्ययायजतिप्रत्तिर्वैयाज्यापुण्यैवलक्ष्मीःपु ण्यामेवतल्लक्ष्मींसंभावयतिपुण्यांलक्ष्मींसंस्कुरुते ॥ यत्पुण्यंनक्षत्रं । तद्बट्कुर्वीतोपव्युषं ॥ यदावैसूर्यउदेति ॥ अथनक्षत्रं नैति ॥ यावतितत्रसूर्योगच्छेत् ॥ यत्रजघन्यंपश्येत् ॥ तावतिकुर्वीतयत्कारीस्यात् ॥ पुण्याहएवकुरुते ॥ तानिवाएतानि यमनक्षत्राणि ॥ यान्येवदेवनक्षत्राणि ॥ तेषुकुर्वीतयत्कारीस्यात् ॥ पुण्याहएवकुरुते । मह्यंसहकुटुंबिनेमहाजनान्नमस्कुर्वा णायआशीर्वचनमपेक्षमाणायअद्यकरिष्यमाणअमुककर्मणःपुण्याहंभवंतोब्रुवंतुइतित्रिर्वदेत् ॥ विप्राः ॐ पुण्याहंइतित्रिः ॥ ॐ स्वस्तयेवायुमुपब्रवामहैसोमंस्वस्तिभुवनस्ययस्पतिः ॥ बृहस्पतिंसर्वगणंस्वस्तयेस्वस्तयआदित्यासोभवंतुनः ॥ आदित्य उदयनीयःपथ्ययैवेतःस्वस्त्याप्रयंतिपथ्यांस्वस्तिमभ्युद्यंतिस्वस्त्येवेतःप्रयंतिस्वस्त्युद्यंतिस्वस्त्युद्यंति ॥ ॐ स्वस्तिनइंद्रोवृद्ध श्रवाः ॥ स्वस्तिनःपूषाविश्ववेदाः ॥ स्वस्तिनस्तार्क्ष्योअरिष्टनेमिः ॥ स्वस्तिनोबृहस्पतिर्दधातु ॥ अष्टौदेवावसवःसोम्यासः ॥ चतस्रोदेवीरजराःश्रविष्ठाः ॥ तेयज्ञंपांतुरजःपरस्तात् ॥ संवत्सरीणममृतंस्वस्ति ॥ मह्यंसहकु० अमुककर्मणेस्वस्तिभवंतो

ब्रुवंतु ॥ आयुष्मतेस्वस्तीतितिस्त्रिः ॥ ॐ ऋद्ध्यामस्तोमंसनुयामवाजमानोमंत्रंसरथेहोपयातं ॥ यशोनपक्वंमधुगोष्वंतराभूतांशो
अश्विनोःकाममप्राः ॥ सर्वामृद्धिमृध्नुयामितितंवैतेजसैवपुरस्तात्पर्यभवच्छंदोभिर्मध्यतोक्षरैरुपरिष्टाद्गायत्र्यासर्वतोद्वादशाहं
परिभूयसर्वामृद्धिमार्ध्नोत्सर्वामृद्धिमृध्नोतियएवंवेद ॥ ॐ ऋद्ध्यास्महव्यैर्नमसोपसद्य ॥ मित्रंदेवंमित्रधेयंनोअस्तु ॥ अनूराधा
न्हविषावर्धयंतः ॥ शतंजीवेमशरदःसवीराः ॥ त्रीणित्रीणिवैदेवानामृद्धानि ॥ त्रीणिछंदांसित्रीणिसवनानि ॥ त्रयइमे
लोकाः ॥ ऋध्यामेवतद्वीर्यएषुलोकेषुप्रतितिष्ठति ॥ मह्यंसह० अमुककर्मणःऋद्धिंभवंतोब्रुवंतु ॥ कर्मऋध्यतांइतित्रिः ॥
ऋद्धिःसमृद्धिः ॥ ॐ श्रियेजातःश्रियआनिरियायश्रियंवयोजरितृभ्योदधाति ॥ श्रियंवसानाअमृतत्वमायन्भवंतिसत्यासमि
थामितद्रौ ॥ श्रियएवैनंतच्छ्रियामादधातिसंततमृचावषट्कृत्यंसंतत्यैसंधीयतेप्रजयापशुभिर्यएवंवेद ॥ यस्मिन्ब्रह्माभ्यजय
त्सर्वमेतत् ॥ अमुंचलोकमिदमूचसर्वं ॥ तन्नोनक्षत्रमभिजिद्विजित्य ॥ श्रियंदधात्वहृणीयमानं ॥ अहेर्बुध्नियमंत्रंमेगोपाय ॥
यमृषयस्त्रयिविदाविदुः ॥ ऋचःसामानियजूंषि ॥ साहिश्रीरमृतासतां ॥ (सुवासिनीहस्तेननीराजनंकार्यं) ॥ मह्यं सह०
अमुककर्मणःश्रीरस्त्विवतिभवंतोब्रुवंतु ॥ अस्तुश्रीःत्रिः ॥ वर्षशतंपूर्णमस्तु ॥ शिवंकर्मास्तु ॥ गोत्राभिवृद्धिरस्तु ॥ मंगला
निभवंतु ॥ कर्मांगदेवताःप्रीयंतां ॥ ॐ शुक्रेभिरंगैरजआततन्वान्क्रतुंपुनानःकविभिःपवित्रैः ॥ शोचिर्वसानःपर्यायुरपां
श्रियोमिमीतेबृहतीरनूनाः ॥ तदप्येषःश्लोकोभिगीतोमरुतःपरिवेष्टारोमरुत्तस्यावसन्गृहे ॥ आविक्षितस्यकामप्रेर्विश्वेदेवाःस
भासदइति ॥ ततःउत्तरकलशंदक्षिणहस्तेदक्षिणकलशंवामहस्तेगृहीत्वाताभ्यांधाराद्वयंसंततंपात्रेनिषिंचेदेभिर्मंत्रैः ॥ ॐ वा
स्तोष्पतेप्रतिजानीह्यस्मान्त्स्वावेशोअनमीवोभवानः ॥ यत्त्वेमहेप्रतितन्नोजुषस्वशन्नोभवद्विपदेशंचतुष्पदे ॥ वास्तोष्पतेप्रतरं

णोनएधिगयस्फानोगोभिरश्वेभिरिंदो ॥ अजरासस्तेसख्येस्यामपितेवपुत्रान्प्रतिनोजुषस्व ॥ वास्तोष्पतेशग्मयासंसदातेसक्षी
महिरण्वयागातुमत्या ॥ पाहिक्षेमउतयोगेवरन्नोयूयंपातःस्वस्तिभिःसदानः ॥ अमीवहावास्तोष्पतेविश्वारूपाण्याविशन् ॥
सखासुशेवएधिनः॥ शिवंशिवंशिवं॥ अभिषेकेपत्नीवामतः॥ पात्रपातितजलेनदूर्वाभिःउदङ्मुखास्तिष्ठंतोविप्राःअभिषिंचेयुः॥
तत्रमंत्राः ॥ समुद्रज्येष्ठाःसलिलस्यमध्यात्पुनानायंत्यनिविशमानाः ॥ इंद्रोयावज्रीवृषभोरराद्ताआपोदेवीरिहमामवंतु ॥
याआपोदिव्याउतवास्रवंतिखनित्रिमाउतवायाःस्वयंजाः ॥ समुद्रार्थायाःशुचयःपावकास्ताआपोदेवीरिहमामवंतु ॥
यासांराजावरुणोयातिमध्येसत्यानृतेअवपश्यंजनानां ॥ मधुश्चुतःशुचयोयाःपावकास्ताआपोदेवीरिहमामवंतु ॥ यासुराजा
वरुणोयासुसोमोविश्वेदेवायासूर्जंमदंति ॥ वैश्वानरोयास्वग्निःप्रविष्टस्ताआपोदेवीरिहमामवंतु ॥ त्रायंतामिहदेवास्त्रायतां
मरुतांगणः ॥ त्रायंतांविश्वाभूतानियथायमरपाअसत् ॥ आपइद्वाउभेषजीरापोअमीवचातनीः ॥ आपःसर्वस्यभेषजीस्तास्ते
कृण्वंतुभेषजं ॥ हस्ताभ्यांदशशाखाभ्यांजिह्वावाचःपुरोगवी ॥ अनामयित्नुभ्यांत्वाताभ्यांत्वोपस्पृशामसि ॥ इमाआपः
शिवतमाइमाःसर्वस्यभेषजीः ॥ इमाराष्ट्रस्यवर्धनीरिमाराष्ट्रभृतोमृताः ॥ याभिरिंद्रमभ्यषिंचत्प्रजापतिःसोमंराजानंवरुणं
यमंमनुं ॥ ताभिरद्भिरभिषिंचामित्वामहंराज्ञांत्वमधिराजोभवेह ॥ महांतंत्वामहीनांसम्राजंचर्षणीनां ॥ देवीजनित्र्यजीज
नद्भद्राजनित्र्यजीजनत् ॥ ॐ देवस्यत्वासवितुःप्रसवे ॥ अश्विनोर्बाहुभ्यां ॥ पूष्णोहस्ताभ्यां ॥ अश्विनोर्भैषज्येन ॥
तेजसेब्रह्मवर्चसायाभिषिंचामि ॥ देवस्यत्वासवितुःप्रसवे ॥ अश्विनोर्बाहुभ्यां ॥ पूष्णोहस्ताभ्यां ॥ सरस्वत्यैभैषज्येन ॥
वीर्यायान्नाद्यायाभिषिंचामि ॥ देवस्यत्वा० हस्ताभ्यां ॥ इंद्रस्येंद्रियेण ॥ श्रियैयशसेबलायाभिषिंचामि ॥ देवस्यत्वा०
पूष्णोहस्ताभ्याꣳसरस्वत्यैवाचोयंतुर्यंत्रेणाग्नेस्त्वासाम्राज्येनाभिषिंचामींद्रस्यबृहस्पतेस्त्वासाम्राज्येनाभिषिंचामि ॥ अथपुरा

णोक्तमंत्रैः ॥ सुरास्त्वामभिषिंचंतुब्रह्मविष्णुमहेश्वराः ॥ वासुदेवोजगन्नाथस्तथासंकर्षणोविभुः ॥ प्रद्युम्नश्चानिरुद्धश्चभवंतु विजयायते ॥ आखंडलोग्निर्भगवान्यमोवैनिर्ऋतिस्तथा ॥ वरुणःपवनश्चैवधनाध्यक्षस्तथाशिवः ॥ ब्रह्मणासहिताःसर्वेदिक्पालाःपांतुतेसदा ॥ कीर्तिर्लक्ष्मीर्धृतिर्मेधापुष्टिःश्रद्धाक्रियामतिः ॥ बुद्धिर्लज्जावपुःशांतिःकांतिस्तुष्टिश्चमातरः ॥ एतास्त्वामभिषिंचंतुदेवपत्न्यःसमागताः ॥ आदित्यश्चंद्रमाभौमोबुधजीवसितार्कजाः ॥ ग्रहास्त्वामभिषिंचंतुराहुःकेतुश्चपूजिताः ॥ देवदानवगंधर्वायक्षराक्षसपन्नगाः ॥ ऋषयोमुनयोगावोदेवमातरएवच ॥ देवपत्न्योद्रुमानागादैत्याश्चाप्सरसांगणाः ॥ अस्त्राणिसर्वशस्त्राणिराजानोवाहनानिच ॥ औषधानिचरत्नानिकालस्यावयवाश्चये ॥ सरितःसागराःशैलास्तीर्थानिजलदानदाः ॥ एतेत्वामभिषिंचंतुसर्वकामार्थसिद्धये ॥ ॐ भूर्भुवःसुवः ॥ अमृताभिषेकोस्तु ॥ शांतिःपुष्टिस्तुष्टिश्चास्तु ॥ ततःकर्ताआचामेत् ॥ पुण्याहवाचनफलसमृद्धिरस्त्वितिभवंतोब्रुवंतु ॥ पुण्याहवाचनफलसमृद्धिरस्तु इतिविप्राः ॥ ॥ इतिपुण्याहवाचनं ॥

## ॥ ५ ॥ अथमातृकापूजनं ॥

अस्मिन्पूगीफले ॐ भूर्भुवःसुवःगौर्यैनमःगौरीमावाहयामि ॥ एवंसर्वत्र ॥ पद्मायै० । शच्यै० । मेधायै० । सावित्र्यै० । विजया० । जया० । देवसेना० । स्वधायै० । स्वाहायै० ॥ मातृभ्यो० । लोकमातृभ्यो० । धृत्यै० । पुष्ट्यै० । तुष्ट्यै० । कुलदेवतायै० । ब्राह्म्यै० । माहेश्वर्यै० । कौमार्यै० । वैष्णव्यै० । वाराह्यै० । इंद्राण्यै० । चामुंडायै० । गणपतये० । दुर्गा० । वास्तोष्पतये० । क्षेत्रपालाय० ॥ २७ ॥ नयंप्रजांमेगोपाय ॥ अमृतत्वायजीवसे ॥ जातांजनिष्यमाणांच ॥ अमृते

सत्येप्रतिष्ठितां ॥ सुप्रतिष्ठितमस्तु ॥ ॐ भूर्भुवसुवःगौर्याद्यावाहितदेवताभ्योनमःषोडशोपचारैःसंपूज्य ॥ ॐ गौरीर्मिमा यसलिलानितक्षत्येकपदीद्विपदीसाचतुष्पदी ॥ अष्टापदीनवपदीबभूवुषीसहस्राक्षरापरमेव्योमन् ॥ इतिमंत्रेणमंत्रपुष्पंसमर्प यामि ॥ आयांतुमातरःसर्वाःपूजांगृण्हंतुकामदाः ॥ कुलधर्मार्चितानित्यंप्रसन्नाःकुलवृद्धये ॥ प्रार्थ्य ॥ अनेनकृतपूजने नगौर्याद्यावाहितदेवताःप्रीयंतां ॥ ॥ ॥ ॥

## ॥ ६ ॥ अथनांदीश्राद्धं ॥

सद्दूर्वांकुरानक्षतानादायजलंच ॥ सत्यवसुसंज्ञकाविश्वेदेवानांदीमुखाःभूर्भुवःसुवःइदंवःपाद्यंस्वाहानमइयंचवृद्धिः ॥ वृद्ध प्रपितामहीवृद्धपितामहीवृद्धमातरःनांदीमुखाःभूर्भुवःसुवःइदंवःपाद्यंस्वाहानमइयंचवृद्धिः ॥ वृद्धप्रपितामहवृद्धपितामहवृ द्धपितरःनांदीमुखाःभूर्भुवःसुवःइदंवःपाद्यंस्वाहानमइयंचवृद्धिः ॥ वृद्धमातुःप्रपितामहवृद्धमातुःपितामहवृद्धमातामहाःप त्नीसहिताःनांदीमु० ॥ सत्यवसु० इदंवःआसनगंधाद्युपचारकल्पनंस्वाहानमइयंचवृद्धिः ॥ वृद्धप्रपितामहीवृद्धपितामही वृद्धमातरःनांदीमुख्यःभूर्भुवःसुवःइदंवःआसनगं० ॥ वृद्धप्रपितामहवृद्धपितामहवृद्धपितरःनांदीमुखाःभू० आसनगंधा० ॥ वृद्धमातुःप्रपितामहवृद्धमातुःपितामहवृद्धमातामहाःपत्नीसहिताःनांदीमुखाःभूर्भु० आसनगं० ॥ गौर्यादिषोडशमातरःब्रा

१ बप्पनभट्टीग्रंथेवृद्धशब्दपूर्वकं—अयंप्रयोगः ॥ विश्वप्रकाशादिग्रंथेवृद्धशब्दरहितं—प्रपितामहीपितामहीमातरः । प्रपितामहपितामह- पितरः । मातुःप्रपितामहमातुःपितामहमातामहाःइत्यादि ॥

ह्यादिसप्तमातरःगणपत्यादिसहिताःवःयुग्मब्राह्मणभोजनपर्याप्तान्नस्थानेकिंचिद्धिरण्यंस्वाहानमइयंचवृद्धिः ॥ वृद्धप्रपिता
महीवृद्धपितामहीवृद्धमातरःनांदीमुख्यःवःयुग्मब्राह्मणभोजन० ॥ वृद्धप्रपितामहवृद्धपितामहवृद्धपितरःनांदीमुखाःवःयु
ग्मब्राह्मणभोजन० ॥ वृद्धमातुःप्रपितामहवृद्धमातुःपितामहवृद्धमातामहाःपत्नीसहिताःनांदीमुखाःवःयुग्मब्राह्मणभोजनप
र्याप्तान्ननिष्क्रयीभूतंद्रव्यंस्वाहानमइयंचवृद्धिः ॥ उपास्मैगायतानरःपवमानायेंदवे ॥ अभिदेवांइयक्षते ॥ अभितेमधुना
पयोथर्वाणोअशिश्रयुः ॥ देवंदेवायदेवयु ॥ सनःपवस्वशंगवेशंजनायशमर्वते ॥ शंराजन्नोषधीभ्यः ॥ बभ्रवेनुस्वतवसेरु
णायदिविस्पृशे ॥ सोमायगाथमर्चत ॥ हस्तच्युतेभिरद्रिभिःसुतंसोमंपुनीतन ॥ मधावाधावतामधु ॥ अक्षन्नमीमदंतह्यव
प्रियाअधूषता ॥ अस्तोषतस्वभानवोविप्रानविष्ठयामती ॥ योजान्विंद्रतेहरी ॥ कृतस्यनांदीश्राद्धस्यप्रतिष्ठाफलसिध्यर्थंद्रा
क्षामलकनिष्क्रयीभूतंयथाशक्तिहिरण्यंस्वाहानमइयंचवृद्धिः ॥ प्रजापतेनत्वदेतान्यन्योविश्वाजातानिपरिताबभूव ॥ यत्का
मास्तेजुहुमस्तन्नोअस्तुवयंस्यामपतयोरयीणां ॥ इडामग्नेपुरुदंसंसनिंगोःशश्वत्तमंहवमानायसाध ॥ स्यान्नःसूनुस्तनयो
विजावाग्नेसातेसुमतिर्भूत्वस्मे ॥ नाणकमादायपात्रेवादयेत् ॥ अनेननांदीश्राद्धेननांदीमुखदेवताःप्रीयंतांवृद्धिः ॥ मातापि
तामहीचैवतथैवप्रपितामही ॥ पितापितामहश्चैवतथैवप्रपितामहः ॥ मातामहस्तत्पिताचप्रमातामहकादयः ॥ एतेभवंतुसु
प्रीताःप्रयच्छंतुचमंगलं ॥ इतिप्रार्थ्य ॥ इतिनांदीश्राद्धं ॥ ॥ ॥ ॥

## ॥ ७ ॥ अथमंडपदेवताप्रतिष्ठा ॥

उपनयनविवाहयोः—आम्रपत्रसूत्रवेष्टितषट्ठदेवताःतत्रैकत्रमुसलमेकत्रच्छुरिकादिशस्त्रंमध्येप्रक्षिप्यवेष्टयेत् ॥ तानिषट्वंशपा

त्रेनिधायतन्मध्येउदक्संस्थेषुक्रमेणावाहयेत् ॥ नंदिन्यैनमः । नंदिनीमावाहयामि ॥ नलिन्यैनमः । नलिनीमा० ॥ मैत्रायैनमः । मैत्रामा० ॥ उमायै० उमामा० ॥ पशुवर्धिन्यै० पशुवर्धिनीमा० ॥ शस्त्रगर्भाभगवत्यै० । शस्त्रगर्भाभगवतीमा० ॥ इत्यावाह्य ॥ तंडुलपूर्णेहरिद्राखंडपूगीफलयुतेन्युब्जशरावपिहितेसूत्रवेष्टितेहरिद्रादिरंजितेमृत्तिकाकलशद्वयेकुलदेवतायैनमः । कुलदेवतामा० ॥ अविघ्नसंज्ञकगणपतयेनमः । अविघ्नसंज्ञकगणपतिमा० ॥ पाद्यादिआचमनांतंकृत्वा ॥ तैलोद्वर्तनोष्णोदकैरभ्यंगस्नानंषण्णांवेष्टितानांकारयित्वा ॥ गंधादिसंपूज्य ॥ समुद्रज्येष्ठाआपोहिष्ठेतिमंत्राभ्यांनंदिनींप्रोक्ष्य । गंधद्वारेतिगंधं ॥ दधिक्राव्णइतिदधि । कांडात्कांडादितिदूर्वाःसमर्पयेत् ॥ वस्त्राच्छादितेवंशपात्रेनंदिन्यैनमः । नंदिनींस्थापयामि ॥ १ ॥ याआपोदिव्येतिनलिन्याः । गंधदधिदूर्वादिपूर्ववत् ॥ यासांराजेतिमैत्रायाः ॥ यासुराजेतिउमायाः ॥ समुद्रज्येष्ठाइत्यादिचत्वारोपिपशुवर्धिन्याः ॥ तूष्णींशस्त्रगर्भाभगवतीं गंधादिभिःपूर्ववत्संपूज्य ॥ ततःगौर्यादिमातृकासहवंशपात्रंस्वयंगृहीत्वाअविघ्नकलशंचपत्न्याग्राहयित्वासब्राह्मणःकनिक्रददितिसूक्तपठनपूर्वकमंगलवाद्यघोषेणगृहांतर्गत्वाईशानदेशेतंडुलादिपुंजत्रयोपरित्रीण्यपिस्थापयित्वा ॥ नर्यप्रजांतदस्तुमित्रागृहावैइतिप्रतिष्ठाप्य ॥ चंदनादिनासंपूज्यनमस्कृत्य ॥ मंडपेआगत्य ॥ मंगलमाहेश्वर्यौआचारात्पंचोपचारैःसंपूज्य ॥ आचारात्वस्त्रादिदानंचकृत्वा ॥ कंकणंबध्नीयात् ॥

---

अथवा १ आग्नेय । २ नैर्ऋत्य । ३ वायव्य । ४ ईशानादिमंडपस्तंभेषुबध्नीयात् ।

## ॥ ८ ॥ अथप्रतिसरविधिः ॥ कंकणबंधनं ॥

आचम्यप्राणानायम्यदेशकालौसंकीर्त्य ॥ श्रीपरमेश्वरप्रीत्यर्थंअमुककर्मांगविहितंप्रतिसरविधिपूर्वकंकंकणबंधनंकरिष्ये ॥ तदंगंगणपतिस्मरणंक० ॥ ॐ गणा० ॥ शालितंदुलसंपूर्णसतांबूलंसभूतिकं ॥ सपूगीफलहारिद्रंतंतुसोर्णंतुकांस्यके ॥ नवकृत्वस्त्रिगुणितंनिधायपुरतोबुधः ॥ आपोहिष्ठाहिरण्यवर्णाइतिसप्तभिरेवतंतुमार्जनं ॥ पवमानःसुवर्जनःइत्यनुवाकेन सूत्रंप्रोक्ष्य ॥ त्र्यंबकमितिमंत्रेणअंगुष्ठोपकनिष्ठिकाभ्यांशुद्धेनसहभस्मनात्रिरुन्मृज्य ॥ ॐ विश्वेत्तातेइतिमंत्रेणपुंसांदक्षिण करेबध्नीयात् ॥ बृहत्सामेतिमंत्रेणस्त्रीणांवामकरेबध्नीयात् ॥ ॥ इतिविश्वप्रकाशोक्तकंकणबंधनविधिः ॥ ॥

## ॥ ९ ॥ अथइडाहवाचनं ॥

आचम्य ॥ देशकालौसंकीर्त्य ॥ नांदीशोभनदेवताप्रीत्यर्थंदेवताह्वानार्थंपित्राह्वानार्थंइडाहवाचनंकरिष्ये ॥ ततःकांस्य पात्रेसंभाविततंडुलतांबूलंसुवर्णंचनिक्षिप्यकराभ्यांधृत्वा ॥ ॐ इडादेवहूर्म० मंदंतु ॥ मद्गृहेशोभनंभवतिइष्टदेवतागृहदेवताः शोभनदेवतामंडपदेवताशोभननिर्गमपर्यंतंसुस्थिरोभव ॥ इडएहि ॥ ॐ इडामग्नेपुरुदꣳसꣳ० त्वस्मे ॥ मद्गृहेशोभनं० ॥ अदितएहि ॥ ॐ इडामहैदेवाꣳईडेन्यान्नमस्यामंनमस्यान्यजामयज्ञियानित्यांहमनुष्यांवाईडेन्याःपितरोनमस्यादेवायज्ञियां देवताएवतद्यथाभागंयजति ॥ सरस्वत्येहि ॥ मद्गृहेत्यादि० ॥ इडएह्यदितएहिसरस्वत्येहि ॥ ततस्त्रयाणांमंत्राणामंतेमुख सममुद्धृत्य ॥ नयंप्रजांमेगो० प्रतिष्ठितां ॥ सुप्रतिष्ठितमस्तु ॥ ॥ इतिइडाहवाचनं ॥ ॥ ॥

---

१ अन्नप्राशनचौलोपनयनविवाहेषुकार्यं ॥ २ नांदीशोभनदेवतातत्तत्कालेकार्यं ॥

## ॥ १० ॥ अथअंकुरारोपणं ॥



श्रीः ॥ आचम्यप्राणानायम्यअद्येत्यादि० ॥ अमुककर्मांगंसकलमंगलावाप्त्यर्थंअंकुरारोपणंकरिष्ये ॥ तदंगंगणपतिपूजनं क० ॥ ॐ गणा० ॥ शुचौदेशेगोमयेनोपलिप्य ॥ अद्भिरभ्युक्ष्य ॥ अक्षतान्निक्षिप्य ॥ तत्रपंचपालिकासौवर्णरजतताम्रमृन्मयैर्वायथासंभवंनिधाय ॥ मृदस्थानेगायत्र्याप्रोक्ष्य ॥ स्योनापृथिवीतिवल्मिकमृत्तिकांप्रार्थ्य ॥ ॐ स्योनापृथिविभवानृक्षरानिवेशनी ॥ यच्छानःशर्मसप्रथाः ॥ मावोरिषदितिमृदंखनित्वा ॥ ॐ मावोरिषत्खनितायस्मैचाहंखनामिवः ॥ द्विपच्चतुष्पदस्माकꣳसर्वमस्त्वनातुरं ॥ भूमिर्भूम्नेतिमृदमभिमंत्र्य ॥ ॐ भूमिर्भूम्नाद्यौर्वरिणांतरिक्षंमहित्वा ॥ उपस्थेतेदेव्यदितेग्निमन्नादमन्नाद्यायादधे ॥ आयंगौःपृश्निरक्रमीदसनन्मातरंपुनः ॥ पितरंचप्रयन्सुवः ॥ त्रिꣳशद्धामविराजतिवाक्पतंगायशिश्रिये ॥ प्रत्यस्यवहद्युभिः ॥ अस्यप्राणादपानत्यंतश्चरतिरोचना ॥ व्यख्यन्महिषःसुवः ॥ यंत्वाक्रुद्धःपरोवपमन्युनायदवर्त्या ॥ सुकल्पमग्नेतत्तवपुनस्त्वोद्दीपयामसि ॥ यत्तेमन्युपरोत्यस्यपृथिवीमनुदध्वसे ॥ आदित्याविश्वेतद्देवावसवश्चसमाभरन् ॥ मनोज्योतिर्जुषतामाज्यंविच्छिन्नंयज्ञꣳसमिमंदधातु ॥ बृहस्पतिस्तनुतामिमंनोविश्वेदेवाइहमादयंतां ॥ सप्ततेअग्नेसमिधःसप्तजिह्वाःसप्तर्षयःसप्तधामप्रियाणि ॥ सप्तहोत्राःसप्तधात्वायजंतिसप्तयोनीरापृणस्वाघृतेन ॥ पुनरूर्जानिवर्तस्वपुनरग्नइषा



---

१ विशेषंगर्भसंस्कारंजातकर्मचनामच ॥ हित्वांकुरारोपणंस्यादन्यत्रशुभकर्मसु ॥ मध्येचतुर्मुखंविंद्यात्पूर्वेवज्रिणमेवच ॥ दक्षिणेतुयमंविंद्यात्पश्चिमेवरुणंतथा ॥ उत्तरेशशिनंविंद्यात्पालिकास्थापनंक्रमात् ॥

युषा ॥ पुनर्नःपाहिविश्वतः ॥ सहरय्यानिवर्तस्वाग्नेपिन्वस्वधारया ॥ विश्वप्स्निययाविश्वतस्परि ॥ लेकःसलेकसुलेकस्तेन आदित्याआज्यँजुषाणावियंतु ॥ केतःसकेतसुकेतस्तेनआदित्याआज्यँजुषाणावियंतु ॥ विवस्वाँ२अदितिर्देवजूतिस्तेनआदित्याआज्यँजुषाणावियंतु ॥ अनेनानुवाकेनमृदमभिमंत्र्य ॥ मृदंगायत्र्याप्रोक्ष्य ॥ भूमिर्धेनुरितिप्रक्षिपेत् ॥ ॐ भूमिर्धेनुर्धरणीलोकधारिणी ॥ उद्धृतासिवराहेणकृष्णेनशतबाहुना ॥ मृत्तिकेहनमेपापंयन्मयादुष्कृतंकृतं ॥ मृत्तिकेब्रह्मदत्तासिकाश्यपेनाभिमंत्रिता ॥ मृत्तिकेदेहिमेपुष्टिंत्वयिसर्वंप्रतिष्ठितं ॥ मृत्तिकेप्रतिष्ठितेसर्वंतन्मेनिर्णुदमृत्तिके ॥ तयाहतेनपापेनगच्छामिपरमांगतिं ॥ एतैर्मंत्रैःपालिकामृदंसंपूर्य ॥ ततो[1]व्रीहितिलमाषयवमुद्गसर्षपकुलित्थगोधूमचणकनीवारमसुरकार्पासप्रियंगुश्यामाकादिचतुर्दशऔषधीर्द्वादशऔषधीर्वायथासंभवमाहृत्यपालिकासमीपेस्थाप्य ॥ कांस्यपात्रेताओषधीर्निधाय ॥ तत्रवस्त्रेणौषधीःपालिकों[2]श्चावेष्ट्य ॥ मध्यमपालिकायां–ॐ भूःब्रह्मणेनमःब्रह्माणमावाहयामि ॥ ॐ भुवःहिरण्यगर्भायनमःहिरण्यगर्भमा० ॥ ॐ ँसुवःप्रजापतयेनमः प्रजापतिमा० ॥ ॐ भूर्भुवःसुवःचतुर्मुखायनमःचतुर्मुखमा० ॥ प्राच्यांपालिकायां–ॐ भूः वज्रिणेनमःवज्रिणमा० ॥ ॐ भुवःशचीपतयेनमःशचीपतिमा० ॥ ॐ ँसुवःशतक्रतवे० शतक्रतुमा० ॥ ॐ भूर्भुवःसुवःइंद्रायनमःइंद्रमा० ॥ दक्षिणपालिकायां–ॐ भूःयमायनमःयममा ०॥ ॐ भुवःवैवस्वतायनमःवैवस्वतमा० ॥ ॐ ँसुवःपितृपतयेनमःपितृपतिमा० ॥ ॐ भूर्भुवःसुवःधर्मराजायनमःधर्मराजमा० ॥ प्रतीच्यांपालिकायां–ॐ भूःवरुणायनमः

---

१ वल्मीकमृत्तिकांचैवकारिषंगोमयंतथा ॥ एतानिप्रक्षिपेत्तासुपालिकासुयथाक्रमं ॥ २ दूर्वामश्वत्थपर्णंचशिरीषंबिल्वपत्रकं ॥ तासांमूलेतुबध्नीयाच्छ्वेतसूत्रेणवेष्टयेत् ॥

वरुणमा० ॥ ॐ भुवःप्रचेतसेनमःप्रचेतसमा० ॥ ॐ ९ सुवःसुरूपिणेनमः सुरूपिणमा० ॥ ॐ भूर्भुवःसुवःअपांपतयेनमः अपांपतिमा० ॥ उदीच्यांपालिकायां--ॐ भूःशशिनेनमः शशिनमा० ॥ ॐ भुवःनिशाकरायनमःनिशाकरमा० ॥ ॐ९सुवः इंदवेनमःइंदुमा० ॥ ॐ भूर्भुवःसुवःसोमायनमःसोममा० ॥ पुनःअष्टदिक्षुआवाह्य ॥ इंद्र । अग्नि । यम । निर्ऋति । वरुण । वायु । सोम । ईशान ॥ आपोहिष्ठा० चनः ॥ ॐ हिरण्यवर्णा० निर्धत्त ॥ ॐ पवमानःसुवर्जनः । पवित्रेणविचर्षणिः । यःपोतासपुनातुमा । पुनंतुमादेवजनाः । पुनंतुमनवोधिया । पुनंतुविश्वआयवः । जातवेदःपवित्रवत् । पवित्रेणपुनाहिमा । शुक्रेणदेवदीद्यत् ॥ अग्नेक्रत्वाक्रतू९रनु । यत्तेपवित्रमर्चिषि । अग्नेविततमंतरा । ब्रह्मतेनपुनीमहे । उभाभ्यांदेवसवितः । पवित्रेणसवेनच । इदंब्रह्मपुनीमहे । वैश्वदेवीपुनतीदेव्यागात् । यस्यैबह्वीस्तनुवोवीतपृष्ठाः । तयामदंतःसधमाद्येषु । वय९स्यामपतयोरयीणां । वैश्वानरोरश्मिभिर्मापुनातु । वातःप्राणेनेषिरोमयोभूः । द्यावापृथिवीपयसापयोभिः । ऋतावरीयज्ञियेमापुनीतां । बृहद्भिःसवितस्तृभिः । वर्षिष्ठैर्देवमन्मभिः । अग्नेदक्षैःपुनाहिमा । येनदेवाअपुनत । येनापोदिव्यं कशः । तेनदिव्येनब्रह्मणा । इदंब्रह्मपुनीमहे । यःपावमानीरध्येति । ऋषिभिःसंभृत९रसं । सर्व९सपूतमश्नाति । स्वदितंमातरिश्वना ॥ पावमानीर्योअध्येति ॥ ऋषिभिःसंभृत९रसं ॥ तस्मैसरस्वतीदुहे ॥ क्षीर९सपिर्मधूदकं ॥ पावमानीःस्वस्त्ययनीः ॥ सुदुघाहिपयस्वतीः ॥ ऋषिभिःसंभृतोरसः ॥ ब्राह्मणेष्वमृत९हितं ॥ पावमानीर्दिशंतुनः ॥ इमंलोकमथोअमुं ॥ कामान्त्समर्धयंतुनः ॥ देवीर्देवैःसमाभृताः ॥ पावमानीःस्वस्त्ययनीः ॥ सुदुघाहिघृतश्चुतः ॥ ऋषिभिःसंभृतोरसः ॥ ब्राह्मणेष्वमृत९हितं ॥ येनदेवाःपवित्रेण ॥ आत्मानंपुनतेसदा ॥ तेनसहस्रधारेण ॥ पावमान्यःपुनंतुमा ॥ प्राजापत्यंप

वित्रं ॥ शतोद्यामंश्हिरण्मयं ॥ तेनंब्रह्मविदोवयं ॥ पूतंब्रह्मंपुनीमहे ॥ इंद्रःसुनीतीसहमापुनातु ॥ सोमःस्वस्त्यावरुणःस
मीच्या ॥ यमोराजाप्रमृणाभिःपुनातुमा ॥ जातवेदामोर्जयंत्यापुनातु ॥ इतिसंप्रोक्ष्य ॥ पालिकाःसुगंधादिभिरभ्यर्च्य ॥
नैवेद्यानिदत्वा ॥ अमुष्मैनमोमुष्मैनमः ॥ दिशांपतीन्नमस्यामिसर्वकामफलप्रदान् ॥ कुर्वंतुसफलंकर्मकुर्वंतुसततंशुभं ॥
इतिसंप्रार्थ्य ॥ ताओषधीर्याजाताओषधीरित्येतेनानुवाकेनमिश्रीकृत्य ॥ ॐ याजाताओषधयोदेवेभ्यस्त्रियुगंपुरा ॥ मंदामि
बभ्रूणामहंश्शतंधामानिसप्तच ॥ शतंवोअंबधामानिसहस्रमुतवोरुहः ॥ अथाशतक्रत्वोयूयमिमंमेअगदंकृत ॥ पुष्पावतीः
प्रसूवतीःफलिनीरफलाउत ॥ अश्वाइवसजित्वरीर्वीरुधःपारयिष्णवः ॥ ओषधीरितिमातरस्तद्वोदेवीरुपब्रुवे ॥ रपांश्सिवि
घ्नतीरितरपश्चातयमानाः ॥ अश्वत्थेवोनिषदनंपर्णेवोवसतिःकृता ॥ गोभाजइत्किलासथयत्सनवथपूरुषं ॥ यदहंवाजयंनि
माओषधीर्हस्तआदधे ॥ आत्मायक्ष्मस्यनश्यतिपुराजीवगृभोयथा ॥ यदोषधयःसंगच्छंतेराजानःसमिताविव॥ विप्रःसउच्यते
भिषग्रक्षोहामीवचातनः ॥ निष्कृतिर्नामवोमाताथायूयंश्स्थसंकृतीः ॥ सराःपतत्रिणीस्थनयदामयतिनिष्कृत ॥ अन्यावो
अन्यामवत्वन्यान्यस्याउपावत ॥ ताःसर्वाओषधयःसंविदानाइदंमेप्रावतावचः ॥ उच्छुष्माओषधीनांगावोगोष्ठादिवेरते ॥
धनंश्सनिष्यंतीनामात्मानंतवपूरुष ॥ अतिविश्वाःपरिष्ठास्तेनइवव्रजमक्रमुः ॥ ओषधयःप्राचुच्यवुर्यत्किंचतनुवांश्रपः ॥
यास्तआतस्थुरात्मानंयाआविविशुःपरुःपरुः ॥ तास्तेयक्ष्मंविबाधंतामुग्रोमध्यमशीरिव ॥ साकंयक्ष्मप्रपतश्येनेनकिकिदी
विना ॥ साकंवातस्यध्राज्यासाकंनस्यनिहाकया ॥ अश्वावतिंश्सोमवतीमूर्जयंतीमुदोजसं ॥ आवित्सिसर्वाओषधीरस्माअ
रिष्टतातये ॥ याःफलिनीर्याअफलाअपुष्पायाश्चपुष्पिणीः ॥ बृहस्पतिप्रसूतास्तानोमुंचंत्वंश्हसः ॥ इतिमंत्रेणक्षीरेणप्रक्षा

ल्यवापयेत् ॥ ब्रह्मजज्ञानंपिताविराजाइतिमध्यमपालिकायांप्रक्षिप्य ॥ ॐ ब्रह्मजज्ञानं० विवः ॥ ॐ पिताविराजामृषभो रयीणामंतरिक्षंविश्वरूपआविवेश ॥ तमर्कैरभ्यर्चंतिवत्संब्रह्मसंतंब्रह्मणावर्द्धयंतः ॥ यतइंद्रभयामहेस्वस्तिदाविशस्पतिरि तिप्राच्यां ॥ ॐ यतइंद्रभयामहेततोनोअभयंकृधि ॥ मघवंच्छग्धितवतन्नऊतयेविद्विषोविमृधोजहि ॥ ॐ स्वस्तिदाविशस्प तिर्वृत्रहाविमृधोवशी ॥ वृषेंद्रःपुरएतुनःस्वस्तिदाअभयंकरः ॥ इमंयमयमायेतिदक्षिणायां ॥ ॐ इमंयमप्रस्तरमाहिसीदां गिरोभिःपितृभिःसंविदानः ॥ आत्वामंत्राःकविशस्तावयंत्वेनाराजन्हविषामादयस्व ॥ ॐ यमायसोमंसुनुतयमायजुहुता हविः ॥ यमंहयज्ञोगच्छत्यग्निदूतोअरंकृतः ॥ इमंमेवरुणतत्वायामीतिप्रतीच्यां ॥ ॐ इमंमेवरुणश्रुधीहवमद्याचमृडय ॥ त्वामवस्युराचके ॥ ॐ तत्त्वायामि० प्रमोषीः ॥ सोमोधेनुंआप्यायस्वेतिउदीच्यां ॥ ॐ सोमोधेनुंसोमोअर्वंतमाशुंसोमो वीरंकर्मण्यंददातु ॥ सादन्यंविदथ्यंसभेयंपितुःश्रवणंयोददाशदस्मै ॥ ॐ आप्यायस्वसमेतुतेविश्वतःसोमवृष्णियं ॥ भवा वाजस्यसंगथे ॥ शुद्धाभिःसिकताभिःप्रच्छादयेत् ॥ गायत्र्यापंचगव्येनप्रोक्ष्य ॥ प्रणवेनसापिधानंकृत्वा ॥ यावत्कर्मांतंसुर क्षितंस्थापयेत् ॥ तत्तच्छुभकालेसांकुराःपालिकाःकुर्यात् ॥ वेदिकायाश्चतुष्कोणेसंस्थाप्य ॥ एकांगृहदेवताभ्योरक्षणायदत्वा ॥ नैवेद्यतांबूलादीनिदद्यात् ॥ ब्राह्मणान्भोजयित्वा ॥ ॥ इत्यंकुरारोपणंस० ॥ ॥ ॥

## ॥ ११ ॥ अथाग्निमुखं ॥

श्रीः ॥ आचम्यप्राणानायम्यदेशकालौसंकीर्त्य० ॥ अमुककर्मांगंहवनंकर्तुंस्थंडिलोल्लेखनादिसकलंकर्मकरिष्ये ॥ यत्राग्निः

१ आसप्तरात्रात्प्रजाकामःआपंचरात्रात्पशुकामः । त्रिरात्रादन्नाद्यकामःसद्यस्कालःआयुष्कामःकुर्यात् ॥

स्थाप्यतेतत्रप्रादेशमात्रंश्वेततंडुलचूर्णेनचतुरस्रंस्थंडिलंकल्पयित्वा ॥ प्राचीरुदक्संस्थाः ॥ उदीचीप्राक्संस्थाः ॥ तिस्रः तिस्रोरेखालिखित्वा ॥ अद्भिरवोक्ष्य ॥ ॐ भूर्भुवःसुवरोमित्यग्निंप्रतिष्ठाप्य ॥ प्रोक्षितेंधनानिनिक्षिप्य ॥ अग्न्यानीतपात्रेअ क्षतोदकंनिनीय ॥ शेषमुत्सृज्य ॥ उत्तरेणपूर्वेणवान्यत्तोयमुपदध्यात् ॥ एतद्धार्येणविद्यते ॥ अग्निमिध्वा ॥ ॐ भूर्भुवः सुवः । तत्सवितुर्वरेण्यं । भर्गोदेवस्यधीमहि । धियोयोनःप्रचोदयात् ॥ अग्निमलंकृत्य ॥ अग्नयेनमः । हुतवहायनमः । हुताशिनेनमः । कृष्णवर्त्मनेनमः । देवमुखाय० । सप्तजिह्वाय० । वैश्वानराय० । जातवेदसेन० । अदितेनुमन्यस्व । अनुमतेनुमन्यस्व । सरस्वतेनुमन्यस्व । देवसवितःप्रसुव ॥ इतिपरिषिच्य ॥ ॐ चत्वारिशृंगात्रयोअस्यपादाद्वेशीर्षेसप्त हस्तासोअस्य ॥ त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्यांआविवेश ॥ सप्तहस्तश्चतुःशृंगःसप्तजिह्वोद्विषीर्शकः ॥ त्रिपात्प्र सन्नवदनःसुखासीनःशुचिस्मितः॥ स्वाहांतुदक्षिणेपार्श्वेदेवींवामेस्वधांतथा ॥ बिभ्रद्दक्षिणहस्तैस्तुशक्तिमन्नंस्रुचंस्रुवं ॥ तोमरं व्यजनंवामैर्घृतपात्रंचधारयन् ॥ आत्माभिमुखमासीनएवंरूपोहुताशनः ॥ अग्नेवैश्वानरशांडिल्यगोत्रमेषध्वजप्राङ्मुखमम संमुखोवरदोभव ॥ दक्षिणोत्तरैरुत्तराधरैःप्रागुदगग्रैर्दर्भैरग्निंपरिस्तृणाति ॥ दक्षिणाप्रागग्रैःपित्र्येषु ॥ उत्तरेणाग्निंप्रागग्रान्द र्भान्संस्तीर्य ॥ तेषुद्वंद्वंन्यंचिपात्राणिप्रयुनक्ति दर्व्याज्यस्थाल्यौप्रोक्षणपूर्णपात्रेइध्मस्रुवावितिति ॥ समौसाग्रौद्वौदर्भौप्रादे शमात्रौपवित्रेकृत्वा ॥ अद्भिरनुमृज्य ॥ प्रोक्षणपात्रेनिधाय ॥ अपरेणाग्निंपवित्रांतर्हितेपात्रेऽपआनीय ॥ हस्तयोरंगुष्ठोपक निष्ठिकाभ्यामुदगग्रेगृहीत्वा ॥ प्राचीस्त्रिरुत्पूय ॥ पात्राण्युत्तानानिकृत्वा ॥ इध्मंचविस्रस्य ॥ सर्वाणिपात्राणित्रिःप्रोक्षति ॥

१ होमानुसारेणहस्तादिप्रमाणं ॥ २ पूर्वादिपरिषेचनंकार्यं ॥ ३ दक्षिणादिपरिषिच्य ॥ ४ द्विःप्रादेशइध्मा । त्रिप्रादेशाःपरिधयः ॥

प्रोक्षणीपात्रंदक्षिणतोनिधाय ॥ सपवित्रंपूर्णपात्रमादाय ॥ पूर्ववत्कृत्वा ॥ मुखसममुद्धृत्य ॥ उत्तरेणाग्निंदर्भेषुसादयित्वा ॥
दर्भैःप्रच्छाद्य ॥ ब्राह्मणंदक्षिणतोदर्भेषूपवेश्य ॥ अस्मिन्अमुककर्मणित्वंब्रह्माभव ॥ ब्रह्मणेनमःइदमासनं ॥ अष्टार्घ्यैःसं
पूर्णार्चनमस्तु ॥ आज्यंविलाप्य ॥ अपरेणाग्निंपवित्रांतर्हितायामाज्यस्थाल्यामाज्यंनिरूप्य ॥ उदीचोंगारानिरूह्य ॥ तेष्वं
गारेष्वाज्यमधिश्रित्य ॥ ज्वलतादर्भेणावद्युत्य ॥ द्वेदर्भाग्रेप्रच्छिद्यप्रक्षाल्यप्रत्यस्य ॥ पुनर्ज्वलतातैस्त्रिःपर्यग्निकृत्वा ॥
उदगुद्वास्यांगारान्प्रत्यूह्य ॥ उदगग्राभ्यांपवित्राभ्यांपुनराज्यंत्रिरुत्पूय ॥ पवित्रग्रंथिंविस्रस्य ॥ अद्भिरनुमृज्य ॥ प्रागग्र
मग्नौपवित्रेअनुप्रहरति ॥ ( अग्नेःपश्चाद्दर्भेष्वाज्यस्थालींप्रतिष्ठाप्य इतिप्रतापनारसिंहः ) स्रुक्स्रुवावग्नौप्रतिताप्य ॥ दर्भाग्रैः
संमार्ष्टि ॥ स्रुवमग्रैरंतरतोभ्याकारꣳसर्वतोबिलमभिसमाहारंमूलैर्दंडं ॥ पुनःप्रतिताप्यप्रोक्ष्याज्यपात्रस्योत्तरतोस्रुवंनिधाय ॥
जुहूमग्रैरंतरतोभ्याकारꣳप्राचींदर्भमध्यैर्बाह्यतःप्रतीचींमूलैर्दंडं ॥ पुनःप्रतिताप्यप्रोक्ष्यस्रुवमुत्तरतोनिधाय ॥ दर्भानद्भिःसꣳ
स्पृश्याग्नौप्रहरति ॥ परिधीन्परिदधाति ॥ स्थविष्टंपश्चाद्दक्षिणतोणीयाꣳसंदीर्घमनिष्ठꣳह्रस्वमुत्तरतः ॥ उदगग्रंमध्यमंप्राग
ग्रावितरौमध्यमंपरिधिमुपस्पृश्य ॥ पुरस्तादूर्ध्वेद्वेआघारसमिधावादधाति ॥ अग्निंपरिषिच्य ॥ अदितेनुमन्यस्वेति० ॥
समिधमेकामवशिष्य ॥ पंचदशेध्मानादधाति ॥ इध्ममलंकृत्य ॥ स्वयमलंकृत्य ॥ ब्रह्माणमलंकृत्य ॥ इध्ममूलमध्याग्रेषु
स्रुवेणत्रिरभिघार्य ॥ अस्मिनमुकहोमेब्रह्मन्इध्मानाधास्ये ॥ आधत्स्व ॥ आसनात्किंचिदुत्थायोपविश्य ॥ स्रुवेणाज्यमा
दाय ॥ उत्तरपरिधिसंधिमन्ववहृत्यप्रजापतिंमनसाध्यायन्दक्षिणाप्रांचमृजूꣳसंततमाघारयति ॥ ॐ प्रजापतयेस्वाहा । प्रजा० ॥
स्रुचाद्वितीयमैंद्रंदक्षिणपरिधिसंधिमन्ववहृत्यइंद्रंमनसाध्यायन्ईशानकोणपर्यंतसंततमाघारयति ॥ इंद्रायस्वाहा । इंद्राये० ॥

अग्नयेस्वाहेत्युत्तरपूर्वदेशे ॥ अ॒ग्नये॒स्वाहा॑ । अग्नय० ॥ सोमायस्वाहेतिदक्षिणपूर्वदेशे ॥ सोमा॑यु॒स्वाहा॑ । सोमाये० ॥ समंपूर्वेणयथोपदेशं ॥ प्रधानाहुतीर्हुत्वा ॥ शेषेणस्विष्टकृतंहुत्वा ॥ ॐ ह॒व्य॒वाह॑मभिमातिषाहं॑ ॥ र॒क्षोह॒णंपृत॑नासुजि॒ष्णुं ॥ ज्योति॑ष्मंतं॒दीद्य॑तं॒पुरं॑धिं ॥ अ॒ग्निंस्वि॑ष्टकृत॒माहु॑वेम ॥ स्विष्टमग्ने॒अ॒भितत्पृ॑णाहि ॥ विश्वा॑देव॒पृत॑ना॒अ॒भिष्य ॥ उ॒रुन्नः॒पंथां॑ प्रदि॒शन्विभा॑हि ॥ ज्योति॑ष्मध्येह्य॒जरं॑न्न॒आयुः॒स्वाहा॑ ॥ अग्नयेस्विष्टकृतइदं० ॥ अ॒ग्नये॒स्वाहा॑ । अग्नयइदं० ॥ इध्मबंधन रज्जुंजुहोति ॥ रुद्रायतंतिचरा॑यस्वा॒हा ॥ रुद्रायतंतिचरायेदं० ॥ अपउपस्पृश्य ॥ ( दं॑र्व्यापरिधीननक्ति ॥ पात्रप्रयुक्तदर्भा ग्राणिदर्व्यामभ्यज्य ॥ स्रुवेमध्यमूलेअनक्ति ॥ मूलांजनेनपाणिमधःकुर्यात् ॥ एवंत्रिः ॥ एकंतृणमुपादाय ॥ पाणिभ्यांद र्व्यांप्रतिष्ठाप्य ॥ इष्टदेवतामुद्दिश्य ॥ अग्नयइदंसोमायेदंअग्नयइदं० ॥ पुनःअग्नयइदंअग्नयेस्विष्टकृतइदं० ॥ तृणंप्रहरति ॥ त्रिरंगुल्यानिर्दिश्य । अग्निमभिमंत्र्य ॥ पुरतोभूमिमुपस्पृशेत् ॥ मध्यमंपरिधिंप्रहरति ॥ इतरौयुगपत्प्रहरन् ॥ उत्तरार्धस्या ग्रमंगारेष्वपोहति ॥ परिधीनभिमंत्र्य ॥ आघारसमिधौप्रहरति ॥ स्रुचाꣳस्रुवंनिधाय ॥ विश्वान्देवान्नुद्दिश्य ॥ सꣳस्रावेणा भिजुहोति ॥ वसुभ्योरुद्रेभ्यआदित्येभ्यःसꣳस्रावभागेभ्यःस्वाहा ॥ वसुभ्योरुद्रेभ्यआदित्येभ्यःसꣳस्रावभागेभ्यइदं० ॥ )

॥ १२ ॥ जयादयः ॥ जयाभ्यातान्राष्ट्रभृताःप्राजापत्यंव्याहृतीर्विहृतासौविष्टकृतीमित्युपजुहोति ॥ अस्यकर्मणःप्रति ष्ठासिद्ध्यर्थंवृद्धिकामःजयादिहोमंराष्ट्रभृद्धोमंचकरिष्ये ॥ ॐ चि॒त्तंच॒स्वाहा॑ । चित्तायेदं० ॥ १ ॥ ॐ चित्ति॑श्च॒स्वाहा॑ । चित्यायेदं० ॥ २ ॥ ॐ आकू॑तंच॒स्वाहा॑ । आकूतायेदं ॥ ३ ॥ ॐ आकू॑तिश्च॒स्वाहा॑ । आकूत्याइदं० ॥ ४ ॥ ॐ वि॒ज्ञातं॑

१ यत्रचरुश्रपणंक्रियतेतत्रेदंकर्तव्यंनतुसिद्धचरौ ॥

चस्वाहा । विज्ञातायेदं० ॥५॥ ॐ विज्ञानंचस्वाहा । विज्ञानायेदं० ॥६॥ ॐ मनश्चस्वाहा ॥ मनसइदं० ॥ ७ ॥ ॐ शक्करी
श्चस्वाहा । शक्कर्यायेदं० ॥८॥ ॐ दर्शश्चस्वाहा । दर्शायेदं० ॥ ९ ॥ ॐ पूर्णमासश्चस्वाहा । पूर्णमासा० ॥ ॐ बृहच्चस्वाहा ।
बृहतइदं० ॥ ११ ॥ ॐ रथंतरंचस्वाहा । राथंतरायेदं० ॥ १२ ॥ ॐ प्रजापतिर्जयानिंद्रायवृष्णेप्रायच्छदुग्रःपृतनाज्येषुत
स्मैविशःसमनमंतसर्वाःसउग्रःसहिहव्योबभूवस्वाहा ॥ प्रजापतयइदं० ॥ १ ॥ ॐ अग्निर्भूतानामधिपतिःसमावत्वस्मिन्ब्रह्म
न्नस्मिन्क्षत्रेस्यामाशिष्यस्यांपुरोधायामस्मिन्कर्मन्नस्यांदेवहूत्या॑ᳪस्वाहा। अग्नयेभूतानामधिपतयइ० ॥२॥ ॐ इंद्रोज्येष्ठानामधि
पतिःसमावत्वस्मिन्ब्रह्मन्न० ॥ इंद्रायज्येष्ठानामधिपतयइदं० ॥ ॐ यमःपृथिव्याधिपतिःसमा० । यमायपृथिव्याधिपतयइदं० ॥
ॐ वायुरंतरिक्षस्याधिपतिःस० । वायवेंतरिक्षस्याधिपतयइदं० ॥ ॐ सूर्योदिवोधिपतिःसमाव० । सूर्यायदिवोधिपतयइ०॥
ॐ चंद्रमानक्षत्राणामधिपतिःसमा० ॥ चंद्रमसेनक्षत्राणामधिपतयइ० ॥ ॐ बृहस्पतिर्ब्रह्मणोधिपतिःस० ॥ बृहस्पतेब्रह्म
णोधिपतयइदं० ॥ ॐ मित्रःसत्यानामधिपतिःस० ॥ मित्रायसत्यानामधिपतयइदं० ॥ ॐ वरुणोपामधिपतिःसमाव० ॥
वरुणायापामधिपतयइ० ॥ ॐ समुद्रःस्रोत्यानामधिपतिःसमाव० ॥ समुद्रायस्रोत्यानामधिप० ॥ ॐ अन्नᳪसाम्राज्याना
मधिपतितन्मावत्व० ॥ अन्नायसाम्राज्यानामधिप० ॥ ॐ सोमओषधीनामधिपतिःसमावत्वस्मि० ॥ सोमायौषधीनामधि
पतयइ० ॥ ॐ सविताप्रसवानामधिपतिःसमाव० ॥ सवित्रेप्रसवानामधिपतयइ० ॥ ॐ रुद्रःपशूनामधिपतिःसमावत्व
स्मिन्० ॥ रुद्रायपशूनामधिपतयइदं० ॥ अपउपस्पृ० ॥ १५ ॥ ॐ त्वष्टारूपाणामधिपतिःसमावत्वस्मि० ॥ त्वष्ट्रेरूपाणा
मधिपतयइ० ॥ ॐ विष्णुःपर्वतानामधिपतिःसमा० ॥ विष्णवेपर्वतानामधिपत० ॥ ॐ मरुतोगणानामधिपतयस्तेमावंत्व

स्मिन्ब्रह्मं० ॥ मरुद्भ्योगणानामधिपतिभ्यइदं० ॥ ॐ पितरःपितामहाःपरेवरेततास्ततामहाइहमावत ॥ अस्मिन्ब्रह्मं० ॥ पितृभ्यःपितामहेभ्यःपरेभ्योवरेभ्यस्ततामहेभ्यइदं० ॥ अपउप० ॥ जीवत्पितृकस्यएतद्धोमलोपः ॥ ॐ पितामहाअवरेतता स्ततामहाइहमावता ॥ अस्मिन्ब्रह्मन्न० ॥ पितामहेभ्यःपरेभ्योवरेभ्यस्ततेभ्यस्ततामहेभ्यइदं ॥ अपउप० ॥ इतिजया० ॥छ॥

॥ १३ ॥ समस्तराष्ट्रभृद्धोमः ॥ ॐ ऋताषाडृतधामाग्निर्गंधर्वस्तस्यौषधयोप्सरसऊर्जोनामसइदंब्रह्मक्षत्रंपातुताइदंब्रह्म क्षत्रंपातुतस्मैस्वाहा ॥ ऋतासहेऋतधाम्नेअग्नयेगंधर्वायेदं० ॥ ताभ्यःस्वाहा ॥ ओषधीभ्योप्सरोभ्यऊर्ग्भ्यइ० ॥ ॐ सꣳहितो विश्वसामासूर्योगंधर्वस्तस्यमरीचयोप्सरसआयुवोनामसइदंब्रह्मक्षत्रंपा० ॥ सꣳहितायविश्वसाम्नेसूर्यायगंधर्वायेदं० ॥ ताभ्यः स्वाहा ॥ मरीचिभ्योप्सरोभ्यआयुभ्यइदं० ॥ ॐ सुषुम्नःसूर्यरश्मिश्चंद्रमागंधर्वस्तस्यनक्षत्राण्यप्सरसोबेकुरयोनामसइदंब्रह्म क्षत्रं० ॥ सुषुम्नायसूर्यरश्मयेचंद्रमसेगंधर्वायेदं० ॥ ताभ्यःस्वाहा ॥ नक्षत्रेभ्योप्सरोभ्योबेकुरुभ्यइदं० ॥ ॐ भुज्युःसुपर्णो यज्ञोगंधर्वस्तस्यदक्षिणाअप्सरसस्तवानामसइदंब्रह्म० ॥ भुज्यवेसुपर्णाययज्ञायगंधर्वायेदं० ॥ ताभ्यःस्वाहा ॥ दक्षिणाभ्यो प्सरोभ्यस्तवाभ्यइ० ॥ ॐ प्रजापतिर्विश्वकर्मामनोगंधर्वस्तस्यक्सामान्यप्सरसोवन्हयोनामसइदंब्रह्म० ॥ प्रजापतयेविश्व कर्मणेमनसेगंधर्वायेदं० ॥ ताभ्यःस्वाहा ॥ ऋक्सामेभ्योप्सरोभ्योवह्निभ्यइदं० ॥ ॐ इषिरोविश्वव्यचावातोगंधर्वस्तस्या पोप्सरसोमुदानामसइदंब्रह्म० ॥ इषिरायविश्वव्यचसेवातायगंधर्वायेदं० ॥ ताभ्यःस्वाहा ॥ अद्भ्योप्सरोभ्योमुदाभ्यइदं० ॥ ॐ भुवनस्यपतेयस्यतउपरिगृहाइहच ॥ सनोरास्वाज्यानिꣳरायस्पोषꣳसुवीर्यꣳसंवत्सरीणाꣳस्वस्तिꣳस्वाहा ॥ भुवनस्यपत्य इदं० ॥ ॐ परमेष्ठ्यधिपतिर्मृत्युर्गंधर्वस्तस्यविश्वमप्सरसोभुवोनामसइदंब्रह्म० ॥ परमेष्ठ्यधिपतयेमृत्यवेगंधर्वायेदं० ॥ ताभ्यः

स्वाहा ॥ विश्वाभ्योप्सरोभ्योभूभ्यइदं० ॥ ॐ सुक्षितिःसुभूतिर्भद्रकृत्सुवर्वान्पर्जन्योगंधर्वस्तस्यविश्वमप्सरसोरुचोनामस
इदंब्रह्म० ॥ सुक्षितयेसुभूतयेभद्रकृतेसुवर्वतेपर्जन्यायगंधर्वायेदं० ॥ ताभ्यःस्वाहा ॥ विद्युद्भ्योप्सरोभ्योभूम्यइदं० ॥
ॐ दूरेहेतिरमृडयोमृत्युर्गंधर्वस्तस्यप्रजाअप्सरसोभीरुवोनामसइदंब्र० ॥ दूरेहेतवेअमृडयायमृत्यवेगंधर्वायेदं० ॥ ताभ्यः
स्वाहा ॥ प्रजाभ्योप्सरोभ्योभीरुभ्यइ० ॥ ॐ चारुःकृपणकाशीकामोगंधर्वस्तस्याधयोप्सरसःशोचयंतीर्नामसइदंब्र० ॥
चारवेकृपणकाशिनेकामायगंधर्वायेदं० ॥ ताभ्यःस्वाहा ॥ आधिभ्योप्सरोभ्यःशोचयंतीभ्यइ० ॥ ॐ सनोभुवनस्यपतेयस्यंत
उपरिगृहाइहचं ॥ उरुब्रह्मणेस्मैक्षत्रायमहिशर्मयच्छस्वाहा ॥ ब्रह्मणइदं० ॥ ॐ प्रजापतेनत्व० रयीणाꣳस्वाहा ॥ प्रजापतय
इदं० ॥ ॐ भूःस्वाहा । अग्नयइ० ॥ ॐ भुवःस्वाहा । वायवइदं० ॥ ॐꣳसुवस्वाहा । सूर्यायेदं० ॥ ॐ भूर्भुवःसुवःस्वाहा ।
प्रजापतयइदं० ॥ ॐ यदस्यकर्मणोत्यरीरिचंयद्वान्यूनमिहाकरं ॥ अग्निष्टत्स्विष्टकृद्विद्वान्त्सर्वꣳस्विष्टꣳसुहुतंकरोतुस्वाहा ॥
अग्नयेस्विष्टकृतइदं० ॥ परिधीनुद्वास्य ॥ आघारसमिधौप्रहृत्य ॥ तनुभ्यइ० ॥ ॥ इतिराष्ट्रभृद्धोमः ॥ ॥ ७ ॥

॥ १४ ॥ प्रायश्चित्तहोमः ॥ अस्मिन्प्रकृतेकर्मणिज्ञाताज्ञातकृतदोषनिबर्हणार्थंअनाज्ञातत्रयंकर्मांतरितकर्मलोपप्रायश्चि
त्तार्थंत्वन्नोअग्नेसत्वन्नोअग्नइतिस्वराक्षरपदवृत्तवर्णलोपप्रायश्चित्तार्थं ॥ आभिर्गीर्भिरितिवाङ्नियमलोपप्रायश्चित्तार्थंइदंविष्णु
स्त्र्यंबकइतिऋत्विङ्मौढ्यप्रायश्चित्तार्थं यद्विद्वाꣳस इतिसर्वोपघातप्रायश्चित्तार्थंपुनस्त्वादित्याइतिसर्वप्रायश्चित्तार्थंभूर्भुवःसुव
रोमित्येतैर्मंत्रैराज्याहुतीर्होष्ये ॥ ॐ अनाज्ञातंयदाज्ञातंयज्ञस्यक्रियतेमिथु ॥ अग्नेतदस्यकल्पयत्वꣳहिवेत्थययथातथꣳस्वाहा ॥
अग्नयइ० ॥ ॐ पुरुषसंमितोयज्ञोयज्ञःपुरुषसंमितः ॥ अग्नेतदस्य० तथꣳस्वाहा ॥ अग्नयइदं० ॥ ॐ यत्पाकत्रामनसादीनद

क्षानयज्ञस्यमन्वतेमतींसः ॥ अग्निष्टद्धोताक्रतुविद्विजानन्यजिष्ठोदेवाꣳऋतुशोयजातिस्वाहा ॥ अग्नयइदं० ॥ त्वन्नोअग्नेवरुणस्यविद्वान्देवस्यहेडोर्वयासिसीष्ठाः ॥ यजिष्ठोवह्नितमः शोशुचानोविश्वाद्वेषाꣳसिप्रमुमुग्ध्यस्मत्स्वाहा ॥ अग्नीवरुणाभ्यामिदं० ॥ ॐ सत्वन्नोअग्नेवमोभवोतीनेदिष्ठोअस्याउषसोव्युष्टौ ॥ अवयक्ष्वनोवरुणꣳरराणोवीहिमृडीकꣳसुहवोनएधिस्वाहा ॥ अग्नीवरुणाभ्यामिदं० ॥ ॐ आभिर्गीर्भिर्यदतोनऊनमाप्याययहरिवोवर्धमानः ॥ यदास्तोतृभ्योमहिगोत्रारुजासिभूयिष्ठभाजोअधतेस्यामस्वाहा ॥ इंद्रायहरिवतेवर्धमानायेदं० ॥ ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदं ॥ समूढमस्यपाꣳसुरेस्वाहा ॥ विष्णवइदं० ॥ ॐ त्र्यंबकंयजामहेसुगंधिंपुष्टिवर्धनं ॥ उर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात्स्वाहा ॥ त्र्यंबकायेदं० ॥ ॐ यद्विद्वाꣳसोयदविद्वाꣳसोमुग्धाःकुर्वंत्यृत्विजः ॥ अग्निर्मातस्मादेनसःश्रद्धादेवीचमुंचताꣳस्वाहा ॥ अग्निश्रद्धादेवीभ्यामिदं० ॥ ॐ पुनस्त्वादित्यारुद्रावसवःसमिंधतांपुनर्ब्रह्माणोवसुनीथयज्ञैः ॥ घृतेनत्वंतनुवोवर्धयस्वसत्याःसंतुयजमानस्यकामाःस्वाहा ॥ अग्नयेवसुनीथायेदं० ॥ सर्वप्रायश्चित्तंकरिष्ये ॥ ॐ भूर्भुवःसुवःस्वाहा ॥ प्रजापत० ॥ प्रागादिपरिस्तरणान्युत्तरेविसृज्य ॥ अदितेन्वमꣳस्थाः । अनुमतेन्वमꣳस्थाः । सरस्वतेन्वमꣳस्थाः ॥ देवसवितःप्रासावीः ॥ प्रणीतास्वपआनीयप्रतिदिशंव्युत्सिच्य ॥ ॐ सदसिसन्मेभूयाःसर्वमसिसर्वंमेभूयाःपूर्णमसिपूर्णंमेभूयाअक्षितमसिमामेक्षेष्ठाःप्राच्यांदिशिदेवाऋत्विजोमार्जयंतांदक्षिणायांदिशिमासाःपितरोमार्जयंतांप्रतीच्यांदिशिगृहाःपशवोमार्जयंतामुदीच्यांदिश्यापओषधयोवनस्पतयोमार्जयंतामूर्ध्वायांदिशियज्ञःसंवत्सरोयज्ञपतिर्मार्जयंतां ॥ अंजलौपूर्णपात्रमानयति ॥ रेतएवास्यांप्रजांदधाति ॥ प्रजयाहिमनुष्यःपूर्णः ॥ मुखंविमृष्टे ॥ अवभृथस्यैवरूपंकृत्वोत्तिष्ठति ॥ समुद्रंवःप्रहिणोमिस्वांयोनिमपिगच्छत ॥ अच्छिद्रः

प्रजयाभूयासंमापरासेचिमत्पर्यः ॥ भवत्कृतब्रह्मदक्षिणांमनसोत्साहपरिमितंहिरण्यंतुभ्यमहंसंप्रददे ॥ शिरसिमार्जयित्वा ॥ ब्रह्माणंविसर्जयेत् ॥ अग्नेर्वायव्यदेशेआयतनाद्बहिःअश्वत्थादिपर्णेअग्नयेनमःइतिगंधादिनासंपूज्य ॥ ॐ अग्नेनयसुपथाराये अस्मान्विश्वानिदेववयुनानिविद्वान् ॥ युयोध्यस्मज्जुहुराणमेनोभूयिष्ठांतेनमउक्तिंविधेम ॥ नमस्कुर्यात् । उपस्थानं । ॐ अग्नेत्वंनो० यज्ञनमस्तेयज्ञ । नमोनमश्चतेयज्ञ । शिवेनमेसंतिष्ठस्व । स्योनेनमेसंतिष्ठस्व । सुभूतेनमेसंतिष्ठस्व । ब्रह्मवर्चसेनमेसंतिष्ठस्व । यज्ञस्यर्धिमनुसंतिष्ठस्व । उपतेयज्ञनमः । उपतेनमः । उपतेनमः । इतिप्रार्थ्य ॥ उपविश्य ॥ स्रुवबिलपृष्ठेनविभूतिंधृत्वा ॥ ॐ बृहत्सामक्षत्रभृद्वृद्धवृष्णियंत्रिष्टुभौजःशुभितमुग्रवीरम् ॥ इंद्रस्तोमेनपंचदशेनमध्यमिदंवातेनसगरेण रक्ष ॥ इतिमंत्रेणविभूतिंधृत्वा ॥ स्वस्तिश्रद्धांमेधांयशःप्रज्ञांविद्यांबुद्धिंश्रियंबलं ॥ आयुष्यंतेजआरोग्यंदेहिमेहव्यवाहन ॥ प्रमादात्कुर्वतांकर्मप्रच्यवेताध्वरेषुयत् ॥ स्मरणादेवतद्विष्णोःसंपूर्णंस्यादितिश्रुतिः ॥ यस्यस्मृ० ॥ अनेनअमुककर्मांगहवनाख्येनकर्मणायज्ञरूपीपरमेश्वरःप्रीयतां ॥ तत्सत्ब्रह्मार्पणमस्तु ॥ ॥ इतिप्रायश्चित्तहोमः ॥ ॥ छ ॥

॥ १५ ॥ व्यस्तराष्ट्रभृताः[1] ॥ ॐ ऋताषाडृतधामाग्निर्गंधर्वःसइदंब्रह्मक्षत्रंपातुतस्मैस्वाहा ॥ ऋतासहेऋतधाम्नेग्नयेगंधर्वायेदं० ॥ १ ॥ ॐ तस्यौषधयोप्सरसऊर्जोनामताइदंब्रह्मक्षत्रंपातुताभ्यःस्वाहा ॥ ओषधीभ्योप्सरोभ्यऊग्भ्र्यइदं० ॥ २ ॥ ॐ सꣳहितोविश्वसामासूर्योगंधर्वःसइदंब्रह्मक्षत्रंपातुतस्मैस्वाहा ॥ सꣳहितायविश्वसाम्नेसूर्यायगंधर्वायेदं० ॥ ३ ॥ ॐ तस्यमरीचयोप्सरसआयुवोनामताइदंब्रह्मक्षत्रंपातुताभ्यःस्वाहा ॥ मरीचिभ्योप्सरोभ्यआयुभ्यइदं० ॥ ॐ सुषुम्नःसूर्यरश्मिश्चंद्र

१ चौलोपनयनगोदानस्नानेषुचव्रतेषुच ॥ वेदव्रतेष्वथांगेषुव्यस्ताराष्ट्रभृताःस्मृताः ॥ १ ॥

मांगंधर्वःसइदंब्रह्मक्षत्रंपातुतस्मैस्वाहा ॥ सुषुम्नायसूर्यरश्मयेचंद्रमसेगंधर्वायेदं० ॥ ५ ॥ ॐ तस्यनक्षत्राण्यप्सरसोबेकुरयो नामताइदंब्रह्मक्षत्रंपातुताभ्यःस्वाहा ॥ नक्षत्रेभ्योप्सरोभ्योबेकुरुभ्यइदं० ॥६॥ ॐ भुज्युःसुपर्णोयज्ञोगंधर्वःसइदंब्रह्मक्षत्रंपातु तस्मैस्वाहा ॥ भुज्यवेसुपर्णाययज्ञायगंधर्वायेदं० ॥७॥ ॐ तस्यदक्षिणाअप्सरसस्तवानामताइदंब्रह्मक्षत्रंपातुताभ्यःस्वाहा ॥ दक्षिणाभ्योप्सरोभ्यस्तवाभ्यइदं० ॥ ८ ॥ प्रजापतिर्विश्वकर्मामनोगंधर्वःसइदंब्रह्मक्षत्रंपातुतस्मैस्वाहा ॥ प्रजापतयेविश्वक र्मणेमनसेगंधर्वायेदं० ॥ ९ ॥ ॐ तस्यर्क्सामान्यप्सरसोवह्नयोनामताइदंब्रह्मक्षत्रंपातुताभ्यःस्वाहा ॥ ऋक्सामेभ्योप्सरो भ्योवह्निभ्यइदं० ॥ १० ॥ ॐ इषिरोविश्वव्यचावातोगंधर्वःसइदंब्रह्मक्षत्रंपातुतस्मैस्वाहा ॥ इषिरायविश्वव्यचसेवातायगंध र्वायेदं० ॥ ११ ॥ ॐ तस्यापोप्सरसोमुदानामताइदंब्रह्मक्षत्रंपातुताभ्यःस्वाहा ॥ अद्भ्योप्सरोभ्योमुदाभ्यइदं० ॥ १२ ॥ ॐ भुवनस्यपतेयस्यतउपरिगृहाइहच ॥ सनोरास्वाज्यानिꣳरायस्पोषꣳसुवीर्यꣳसंवत्सरीणाꣳस्वस्तिꣳस्वाहा ॥ भुवनस्यप त्यइदं० ॥ १३ ॥ ॐ परमेष्ठ्यधिपतिर्मृत्युर्गंधर्वःसइदंब्रह्मक्षत्रंपातुतस्मैस्वाहा ॥ परमेष्ठिनेधिपतयेमृत्यवेगंधर्वायेदं० ॥१४॥ ॐ तस्यविश्वमप्सरसोभुवोनामताइदंब्रह्मक्षत्रंपातुताभ्यःस्वाहा ॥ विश्वाभ्योप्सरोभ्योभूभ्यइदं० ॥ १५ ॥ ॐ सुक्षितिः सुभूतिर्भद्रकृत्सुवर्वान्पर्जन्योगंधर्वःसइदंब्रह्मक्षत्रंपातुतस्मैस्वाहा ॥ सुक्षितयेसुभूतयेभद्रकृतेसुवर्वतेपर्जन्यायगंधर्वायेदं० ॥ ॥ १६ ॥ ॐ तस्यविद्युतोप्सरसोरुचोनामताइदंब्रह्मक्षत्रंपातुताभ्यःस्वाहा ॥ विद्युद्भ्योप्सरोभ्योरुग्भ्यइदं० ॥ १७॥ ॐ दूरेहे तिरमृडयोमृत्युर्गंधर्वःसइदंब्रह्मक्षत्रंपातुतस्मैस्वाहा ॥ दूरेहेतयेमृडयायमृत्यवेगंधर्वायेदं० ॥१८॥ ॐ तस्यप्रजाअप्सरसोभीरु वोनामताइदंब्रह्मक्षत्रंपातुताभ्यःस्वाहा ॥ प्रजाभ्योप्सरोभ्योभीरुभ्यइदं ॥१९॥ ॐ चारुःकृपणकाशीकामोगंधर्वःसइदंब्रह्मक्षत्रं

पातुतस्मैस्वाहा ॥ चारवेकृपणकाशिनेकामायगंधर्वायेदं० ॥ २० ॥ ॐ तस्याधयोप्सरसंःशोचयंतीर्नामताइदंब्रह्मक्षत्रंपातु ताभ्यःस्वाहा ॥ आधिभ्योप्सरोभ्यःशोचयंतीभ्यइदं० ॥ २१ ॥ ॐ सनोभुवनस्यपतेयस्यंतउपरिगृहाइहच ॥ उरुब्रह्मणेस्मै क्षत्रायमहिशर्मयच्छस्वाहा ॥ भुवनस्यपत्येदं० ॥ २२ ॥ ॐ प्रजापते० स्वाहा ॥ प्रजापत० ॥ अनाज्ञातादिप्रायश्चित्तहोमांतं कर्मशेषंसमाप्यं ॥ ॥ इतिव्यस्तराष्ट्रभृद्धोमः ॥ ॥ ॥ ॥ ॥ ॥

## ॥ १६ ॥ अथाग्न्युपघातेप्रायश्चित्तानि ॥ (वैशेषिकाणि)

अस्मिन्प्रकृतेकर्मणिकेशकीटपतंगपिपीलिकाद्युपघातजनितप्रत्यवायपरिहारार्थंद्वेमिंदाहुतीहोष्यामि ॥ ॐ यन्मआत्मनोमिंदाभूदग्निस्तत्पुनराहार्जातवेदाविचर्षणिःस्वाहा ॥ मिंदवतेग्नयइदं० ॥ ॐ पुनरग्निश्चक्षुरदात्पुनरिंद्रोबृहस्पतिः ॥ पुनर्मे अश्विनायुवंचक्षुराधत्तमक्ष्योःस्वाहा ॥ मिंदवतेग्न० ॥ अस्मिन्० परिस्तरणबर्हिरादीनांदाहादिनाशजनितप्रत्यवायपरिहार्थं त्वमग्नेअयास्यइत्याज्याहुतिंहोष्ये ॥ ॐ त्वमग्नेअयास्ययासन्मनंसाहितः ॥ अयासन्हव्यमूहिषेयानोधेहिभेषजꣳस्वाहा ॥ अयसेग्नयइदं० ॥ आयतनाद्बहिरंगारपतनजनितप्रत्यवायपरिहारार्थंसर्वप्रायश्चित्तंक० ॥ ॐ भूर्भुवःसुवःस्वाहा ॥ प्रजापतयइ० ॥ अस्मिन्० स्वाहाकारप्रदानासमकालताजनितप्र० मनोज्योतिरित्येकामाज्याहुतिंहोष्ये ॥ ॐ मनोज्योतिर्जुषतामाज्यंविच्छिन्नंयज्ञꣳसमिमंदधातु ॥ याइष्टाउषसोनिम्रुचश्चताःसंदधामिहविषाघृतेनस्वाहा ॥ उषसोनिम्रुग्भ्यइदं० ॥ अस्मिन्प्र० देवताग्न्योर्मध्येऋत्विगग्निमध्येचपुरुषांतरगमनजनितदोषप्रत्यवा० अग्नयेपथिकृत्येकाहुतिंहोष्ये ॥ ॐ अग्नयेपथिकृते

स्वाहा ॥ अग्नयेपथिकृतइ० ॥ अस्मिन्प्रकृतेक० वेदिकाकुंडकलशप्रतिमादीनामुक्तप्रमाणाद्धीनताधिकताजनितप्रत्यवाय० अष्टाविंशतिवारंसर्वप्रायश्चित्तंक० ॥ ॐ भूर्भुवःसुवःस्वाहा ॥ प्रजापतयइदं० ॥ अस्मिन्कर्मणिप्रणीतास्कन्दनप्रायश्चित्तार्थंततं मआपइत्याज्याहुतिंहोष्यामि ॥ ॐ ततंमआपस्तदुतायतेपुनःस्वादिष्ठाधीतिरुचथायशस्यते ॥ अयꣳसमुद्रउतविश्वभेषजः स्वाहाकृतस्यसमुतृप्णुतर्भुवःस्वाहा ॥ ऋभुभ्यइ० ॥ आहुतिप्रमाणापेक्षयान्यूनातिरिक्तहविःपरिगृहीतदोषपरिहारार्थंअतिरिक्तमित्येकामाज्याहुतिंहोष्यामि ॥ ॐ अतिरिक्तंन्यूनेंजुहोमिन्यूनमतिरिक्तेजुहोमि ॥ समꣳसमेंजुहोमिस्वाहाकृताहुतिरेतुदेवान्स्वाहा ॥ देवेभ्यइदं० ॥ सांगतासिध्यर्थंसर्वप्रायश्चित्तंक० ॥ ॐ भूर्भुवःसुवःस्वाहा ॥ प्रजापतयइदं० ॥ ॥ इतिवैशेषिकअग्न्युपघातेप्रायश्चित्तं० ॥ ॥ ॥ ॥ ॥ ॥

## ॥ १७ ॥ अथग्रहयज्ञः ॥ ( मात्स्योक्तविधिना )

श्रीः ॥ आचम्यप्राणानायम्यदेशकालौसंकीर्त्य[1] ॥ अमुकगोत्रोत्पन्नस्यअमुकशर्मणःममसकुटुंबस्यसपरिवारस्यग्रहाणामानुकूल्यसिद्धिद्वारा (वाअमुककर्मांगं) श्रीपरमेश्वरप्रीत्यर्थंग्रहयज्ञाख्यंकर्मकरिष्ये ॥ तत्रादौनिर्विघ्नतासिद्ध्यर्थंगणपतिपू० स्वस्तिपुण्याहवाचनं मातृका० नां० आचार्याद्यृत्विक्वरणंचक० ॥ ॥ गणपतिपूजनादिनांदीश्राद्धांतंकुर्यात् ॥ ॥

॥ १८ ॥ आचार्यादिवरणं ॥ अमुकप्रवरान्वितअमुकगोत्रोत्पन्नःअमुकशर्मायजमानोहं । अमुकप्रवरान्वितअमुकगो

१ करिष्यमाणग्रहयज्ञकर्मणिअधिकारसिद्ध्यर्थं कृच्छ्रत्रयकच्छ्रपरिमितंवाप्रायश्चित्तंसंकल्पपूर्वकंकृत्वा ॥

त्रोत्पन्नंयजुर्वेदस्यतैत्तिरीयशाखांतर्गतआपस्तंबशाखाध्यायिनंअमुकशर्माणंब्राह्मणंअस्मिन्ग्रहयज्ञाख्येकर्मणिआचार्यंत्वांवृणे ॥ वृतोस्मीत्युक्त्वा ॥ एवंब्रह्माणंत्वांवृणे । सदस्यंत्वांवृणे । गाणपत्यंत्वांवृणे । उपद्रष्टारंत्वांवृणे ॥ अर्घ्यस्थानेसं० चास्तु ॥ प्रार्थयेत् ॥ आचार्यस्तुयथास्वर्गेशक्रादीनांबृहस्पतिः ॥ तथात्वंममयज्ञेस्मिन्नाचार्योभवसुव्रत ॥ १ ॥ आचार्यः यथाज्ञानतःकर्मकरिष्यामि ॥ यथाचतुर्मुखोब्रह्मास्वर्गेलोकेपितामहः ॥ तथात्वंममयज्ञेस्मिन्ब्रह्माभवद्विजोत्तम ॥ २ ॥ त्वंनो गुरुःपितामातात्वंप्रभुस्त्वंपरायणं ॥ आपद्विमोक्षणार्थायसदस्यंत्वामहंवृणे ॥३॥ वांछितार्थस्यसंप्राप्त्यैपूजितोसिसुरेश्वरैः ॥ निर्विघ्नकार्यसंसिध्यैगाणपत्यमहंवृणे ॥ ४ ॥ भगवन्सर्वधर्मज्ञसर्वधर्मभृतांवर ॥ विततेममयज्ञेस्मिन्नुपद्रष्टाभवद्विज ॥ ५ ॥ अस्ययागस्यनिष्पत्तौभवंतोभ्यर्थितामया ॥ सुप्रसन्नैःप्रकर्तव्यंकर्मेदंविधिपूर्वकं ॥ अस्मिन्कर्मणियेयेतुवृतागुरुमुखामया ॥ सावधानाःप्रकुर्वंतुस्वंस्वंकर्मयथोदितं ॥ ७ ॥ ततःआचार्यःहस्तौपादौप्रक्षाल्याचम्यपवित्रपाणिःप्राणानायम्य ॥ अमुकगोत्रेणअमुकशर्मणायजमानेनवृतोहंग्रहयज्ञंकर्तुंविहितंआचार्यकर्मकरिष्ये ॥ आदौनिर्विघ्नतार्थंगणपतिस्मरणंशरीरशुद्ध्यर्थंपुरुषसूक्तपठनंपंचगव्यमेलनंमंडपप्रोक्षणंसर्षपविकिरणादिकरिष्ये ॥ गणानांत्वेतिगणपतिंस्मृत्वा ॥ पुरुषसूक्तंपठित्वा ॥ यदत्रसंस्थितंभूतंस्थानमाश्रित्यसर्वतः ॥ स्थानंत्यक्त्वातुतत्सर्वंयत्रस्थंतत्रगच्छतु ॥ अपक्रामंतुभूतानिपिशाचाःसर्वतोदिशं ॥ सर्वेषामविरोधेनयज्ञकर्मसमारभे ॥ इतिगौरसर्षपान्विकिरेत् ॥ पंचगव्यमेलनं । गायत्र्यागोमूत्रं । गंधद्वारेतिगोमयं । आप्यायस्वेतिक्षीरं । दधिक्राव्णइतिदधि । शुक्रमसीतिघृतं । देवस्यत्वेतिकुशोदकं । प्रणवेनालोड्य । प्रणवेनाभिमंत्र्य ॥ आपोहिष्ठेतिमंथयेत् ॥ ॥ ॥ ॥ ॥

॥ १९ ॥ **मंडपप्रोक्षणं** ॥ ॐ शुचींवोहव्यामरुतःशुचीनांशुचिंहिनोम्यध्वरंशुचिभ्यः ॥ ऋतेनसत्यमृतसापआयन्छुचिजन्मानःशुचयःपावकाः ॥ अग्निःशुचिव्रततमःशुचिर्विप्रःशुचिःकविः ॥ शुचीरोचतआहुतः ॥ उदग्नेशुचयस्तवशुक्राभ्राजंतईरते ॥ तवज्योतींष्यर्चयः ॥ इतिमंत्रेणपंचगव्येनप्रोक्ष्य ॥ आपोहिष्ठेतिशुद्धोदकेन ॥ ॐ आपोहि० चनः ॥ भद्रंकर्णेतिलाजान्विकिरेत् ॥ ॐ भद्रंकर्णेभिःशृणुयामदेवाः । भद्रंपश्येमाक्षभिर्यजत्राः । स्थिरैरंगैस्तुष्टुवांसस्तनूभिः । व्यशेमदेवहितंयदायुः । देवाआयांतु ॥ यातुधानाअपयांतु । विष्णोदेवयजनंरक्षस्व । भूमौप्रादेशंकुर्यात् ॥ ॥ ॥

॥ २० ॥ **ग्रहाणांस्थापनंपूजनंच** ॥ अद्यपूर्वोच्चारित० श्रीसूर्यादिदेवतास्थापनंपूजनंचकरिष्ये ॥ ग्रहपीठे–मध्येवर्तुलमंडलमादित्याय ॥ आग्नेय्यांचतुरस्रंसोमाय ॥ दक्षिणेत्रिकोणमंगारकाय ॥ ईशान्यांबाणाकारंबुधाय ॥ उत्तरेदीर्घचतुरस्रंबृहस्पतये ॥ पूर्वेपंचकोणंशुक्राय ॥ पश्चिमेधनुराकारंशनैश्चराय ॥ नैर्ऋत्यांशूर्पाकारंराहवे ॥ वायव्यांध्वजाकारंकेतवे ॥ इतिमंडलानिकुर्यात् ॥ ॐ आसत्येनरजसावर्तमानोनिवेशयन्नमृतंमर्त्यंच ॥ हिरण्ययेनसवितारथेनादेवोयातिभुवनानिपश्यन् ॥ कलिंगदेशोद्भवकाश्यपसगोत्रसूर्येहागच्छेहतिष्ठअस्मिन्पूगीफले ॐ भूर्भुवःस्वःसूर्यायनमःसूर्यमावाहयामि ॥ प्राङ्मुखंसूर्यंरक्तपुष्पाक्षतैःपूजयेत् ॥ १ ॥ ॐ आप्यायस्वसमेतुतेविश्वतःसोमवृष्णियं ॥ भवावाजस्यसंगथे ॥ यमुनातीरोद्भवआत्रेयसगोत्रसोमेहागच्छेहतिष्ठअस्मि० सोमायनमःसोममावाह० ॥ प्रत्यङ्मुखंसोमंश्वेतपुष्पाक्षतैःपूजयेत् ॥ २ ॥

---

१ शुक्रार्कौप्राङ्मुखौज्ञेयौगुरुसौम्यावुदङ्मुखौ ॥ प्रत्यङ्मुखःशनिःसोमःशेषादक्षिणतोमुखाः ॥ अथवा—आदित्याभिमुखाःसर्वेसाधिप्रत्यधिदेवताः ॥ स्थापनीयामुनिश्रेष्ठनांतरेणपराङ्मुखाः ॥

ॐ अग्निर्मूर्धादिवःककुत्पतिःपृथिव्याअयं ॥ अपाꣳरेताꣳसिजिन्वति ॥ अवंतिदेशोद्भवभारद्वाजसगोत्रभौमेहागच्छेहतिष्ठ
अस्मि० भौमायनमःभौममावाहयामि ॥ दक्षिणाभिमुखंभौमंरक्तपुष्पाक्षतैः ॥ ३ ॥ ॐ उद्बुध्यस्वाग्नेप्रतिजागृह्येनमिष्टा
पूर्तेसꣳसृजेथामयंच ॥ पुनःकृण्वꣳस्त्वापितरंयुवानमन्वाताꣳसीत्त्वयितंतुमेतं ॥ मगधदेशोद्भवआत्रेयसगोत्रबुधेहागच्छेह
तिष्ठअस्मिन्० बुधायनमःबुधमा० ॥ उदङ्मुखंबुधंहरितपुष्पाक्षतैःपूजयेत् ॥ ४ ॥ ॐ बृहस्पतेअतियदर्योअर्हाद्द्युमद्विभा
तिक्रतुमज्जनेषु ॥ यद्दीदयच्छवसर्तप्रजाततदस्मासुद्रविणंधेहिचित्रं ॥ सिंधुदेशोद्भवआंगिरससगोत्रबृहस्पतेइहागच्छेहतिष्ठ
अस्मिन्पू० बृहस्पतयेनमःबृहस्पतिमा० ॥ उदङ्मुखंगुरुंपीतपुष्पाक्षतैःपूजयेत् ॥ ५ ॥ ॐ शुक्रंतेअन्यद्यजतंतेअन्यद्विषुरूपे
अहनीद्योरिवासि ॥ विश्वाहिमायाअवसिस्वधावोभद्रातेपूषन्निहरातिरस्तु ॥ भोजकटदेशोद्भवभार्गवसगोत्रशुक्रेहागच्छेह
तिष्ठअस्मिन्पू० शुक्रायनमःशुक्रमा० ॥ प्राङ्मुखंशुक्रंश्वेतपुष्पाक्षतैःपूजयेत् ॥ ६ ॥ ॐ शमग्निरग्निभिःकरच्छन्नस्तपतुसूर्यः ॥
शंवातोवात्वरपाअपस्त्रिधः ॥ सौराष्ट्रदेशोद्भवकाश्यपसगोत्रशनैश्चरेहागच्छेहतिष्ठअस्मि० शनैश्चरायनमःशनैश्चरमा० ॥
प्रत्यङ्मुखंशनिंकृष्णपुष्पाक्षतैःपूजयेत् ॥ ७ ॥ ॐ कयानश्चित्रआभुवदूतीसदावृधःसखा ॥ कयाशचिष्ठयावृता ॥ राठिना
पुरोद्भवपैठीनसिसगोत्रराहोइहागच्छेहतिष्ठअस्मिन्पू० राहवेनमःराहुमावाहयामि ॥ दक्षिणाभिमुखंराहुंकृष्णपुष्पाक्षतैःपू
जयेत् ॥ ८ ॥ ॐ केतुंकृण्वन्नकेतवेपेशोमर्याअपेशसे ॥ समुषद्भिरजायथाः ॥ अंतर्वेदिसमुद्भवजैमिनिसगोत्रकेतोइहागच्छे
हतिष्ठअस्मि० केतवेनमःकेतुमावाहयामि ॥ दक्षिणाभिमुखंकेतुंधूम्रपुष्पाक्षतैःपूजयेत् ॥ ९ ॥ अधिदेवताः— ॐ त्र्यंबकं
यजामहेसुगंधिंपुष्टिवर्धनं ॥ उर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात् ॥ अस्मिन्० ईश्वरायनमःईश्वरमा० ॥ ॐ गौरीर्मिमा

यसलिलानितक्षत्येकंपदीद्विपदीसाचतुष्पदी ॥ अष्टापदीनवपदीबभूवुषीसहस्राक्षरापरमेव्योमन् ॥ अस्मि० उमायै० उमामा० ॥ ॐ यदक्रंदः प्रथमंजायमानउद्यन्त्समुद्रादुतवापुरीषात् ॥ श्येनस्यपक्षाहरिणस्यबाहूउपस्तुत्यंमहिजातंतेअर्वन् ॥ अ० स्कंदायन० स्कंदमा० ॥ ॐ सहस्रशीर्षापुरुषः सहस्राक्षः सहस्रपात् ॥ सभूमिंविश्वतोवृत्वात्यतिष्ठद्दशांगुलं ॥ अ० नारायणाय० नारायण० ॥ ॐ ब्रह्मादेवानांपदवीः कवीनामृषिर्विप्राणांमहिषोमृगाणां ॥ श्येनोगृध्राणाःस्वधितिर्वनानाः सोमः पवित्रमत्येतिरेभन् ॥ अ० ब्रह्मणेनमः ब्रह्मा० ॥ ॐ सजोषाइंद्रसगणोमरुद्भिः सोमंपिबवृत्रहन्छूरविद्वान् ॥ जहिशत्रूः रपमृधोनुदस्वाथाभयंकृणोहिविश्वतोनः ॥ अ० इंद्राय० इंद्रमा० ॥ ॐ इमंयमप्रस्तरमाहिसीदांगिरोभिः पितृभिः संविदानः ॥ आत्वामंत्राः कविशस्तावहंत्वेनाराजन्हविषामादयस्व ॥ अ० यमाय० यममा० ॥ ॐ कार्षिरस्यपापांमृध्रं ॥ अ० कालाय० कालमा० ॥ ॐ चित्रावसोःस्वस्तितेपारमशीय ॥ अस्मि० चित्रगुप्ताय० चित्रगुप्तमा० ॥ अथप्रत्यधिदेवताः ॥ ॐ अग्निंदूतंवृणीमहेहोतारंविश्ववेदसं ॥ अस्ययज्ञस्यसुक्रतुं ॥ अस्मि० अग्नये० अग्निमा० ॥ ॐ अप्सुमेसोमोअब्रवीदंतर्विश्वानिभेषजा ॥ अग्निंचविश्वशंभुवमापश्चविश्वभेषजीः ॥ अ० अद्भ्योन० अपःआ० ॥ ॐ स्योनापृथिविभवानृक्षरानिवेशनी ॥ यच्छानःशर्मसप्रथाः ॥ अ० भूम्यैनमः भूमिमा० ॥ ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदं ॥ समूढमस्यपांसुरे ॥ अ० विष्णवे० विष्णुमा० ॥ ॐ इंद्रंवोविश्वतस्परिहवामहेजनेभ्यः ॥ अस्माकमस्तुकेवलः ॥ अ० इंद्राय० इंद्रमा० ॥ ॐ इंद्राणीमासुनारिषुसुपत्नीमहमश्रवं ॥ नह्यस्याअपरंचनजरसामरतेपतिः ॥ अ० इंद्राण्यै० इंद्राणीमा० ॥ ॐ प्रजापते नत्वदेतां० रयीणां ॥ अ० प्रजापतये० प्रजापतिमा० ॥ ॐ नमोअस्तुसर्पेभ्योयेकेचपृथिवीमनु ॥ येअंतरिक्षेयेदिवितेभ्यः

सर्पेभ्योनमः ॥ अ० सर्पेभ्यो० सर्पाना० ॥ ॐ ब्रह्मजज्ञानंप्रथमंपुरस्ताद्विसीमतःसुरुचोवेनआवः ॥ सबुध्नियाउपमाअस्य विष्ठाःसतश्चयोनिमसतश्चविवः ॥ अ० ब्रह्मणेन० ब्रह्माणमा० ॥ क्रतुसंरक्षकदेवताः ॥ ॐ गणानांत्वाग० सादनं ॥ अ० गणपतये० गणपतिमा० ॥ ॐ जातवेदसेसुनवामसोममरातीयतोनिदहातिवेदः ॥ सनःपर्षदतिदुर्गाणिविश्वानावेवसिंधुं दुरितात्यग्निः ॥ अस्मि० दुर्गायै० दुर्गामा० ॥ ॐ वायोशतꣳहरीणांयुवस्वपोष्याणां ॥ उतवातेसहस्रिणोरथआयातुपा जसा ॥ अ० वायवे० वायु० ॥ ॐ घृतंघृतपावानःपिबतवसांवसापावानःपिबतांतरिक्षस्यहविरसिस्वाहात्वांतरिक्षाय ॥ अ० आकाशाय० आकाशमा० ॥ ॐ यावांकशामधुमत्यश्विनासूनृतावती ॥ तयायज्ञंमिमिक्षतं ॥ अ० अश्विभ्यां० अश्विनौ० ॥ ॐ वास्तोष्पतेप्रतिजानीह्यस्मान्त्स्वावेशोअनमीवोभवानः ॥ यत्त्वेमहेप्रतितन्नोजुषस्वशन्नएधिद्विपदेशंचतुष्पदे॥ अस्मि० वास्तोष्पतये० वास्तोष्प० ॥ ॐ क्षेत्रस्यपतिनावयꣳहितेनेवजयामसि ॥ गामश्वंपोषयित्न्वासनोमृडातीदृशे ॥ अ० क्षेत्रपालाय० क्षेत्रपालमा० ॥ लोकपालदेवताः ॥ ॐ त्रातारमिंद्रमवितारमिंद्रꣳहवेहवेसुहवꣳशूरमिंद्रं ॥ हुवेनुशक्रंपु रुहूतमिंद्रꣳस्वस्तिनोमघवाधात्विंद्रः ॥ अ० इंद्राय० इंद्रमा० ॥ ॐ त्वन्नोअग्नेवरुणस्यविद्वान्देवस्यहेडोवयासिसीष्ठाः ॥ यजिष्ठोवह्नितमःशोशुचानोविश्वाद्वेषाꣳसिप्रमुमुग्ध्यस्मत् ॥ अ० अग्नये० अग्नि० ॥ ॐ सुगंनःपंथामभयंकृणोतुयस्मिन्नक्षत्रे यमएतिराजा ॥ यस्मिन्नेनमभ्यषिंचंतदेवास्तदस्यचित्रꣳहविर्यजाम ॥ अ० यमाय० यम० ॥ ॐ असुन्वंतमयजमानमि च्छस्तेनस्येत्यांतस्करस्यान्वेषि ॥ अन्यमस्मदिच्छसातइत्यानमोदेविनिर्ऋतेतुभ्यमस्तु ॥ अस्मि० निर्ऋतये० निर्ऋतिमा० ॥ ॐ तत्त्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोध्युरुशꣳसमानआयुःप्रमोषीः ॥ अस्मि०

वरुणाय० वरुणमा० ॥ ॐ आनोनियुद्भिःशतिनीभिरध्वरꣳसहस्रिणीभिरुपयाहियज्ञं० ॥ वायोअस्मिन्हविषिमादयस्वयूयं पातस्वस्तिभिःसदानः ॥ अस्मि० वायवे० वायु० ॥ ॐ वयꣳसोमव्रतेतवमनस्तनूषुबिभ्रतः ॥ प्रजावंतोअशीमहि ॥ अस्मि० सोमाय० सोममा० ॥ ॐ अभित्वादेवसवितरीशानंवार्याणां ॥ सदावन्भागमीमहे ॥ अस्मि० ईशानायन० ईशानमा० ॥ ॐ नयेप्रजांमेगोपाय ॥ अमृतत्वायजीवसे ॥ जातांजनिष्यमाणांच ॥ अमृतेसत्येप्रतिष्ठितां ॥ सुप्रतिष्ठितमस्तु ॥ ईशान्ये महीद्यौरित्यादिविधिनाकलशंसंस्थाप्य ॥ तदुपरितत्त्वायामीतिमंत्रेणसुवर्णप्रतिमायामग्न्युत्तारणपूर्वकवरुणंसंस्थाप्य ॥ आदित्याद्यावाहितदेवताभ्योनमःइतिआवाहनादिषोडशोपचारैःसंपूज्य ॥ कलशंप्रार्थयेत् ॥ कलशस्य० आयांतुममशांत्यर्थंदुरितक्षयकारकाः ॥ देवदानवसंवादेमथ्यमानेमहोदधौ ॥ उत्पन्नोसितदाकुंभविष्णुनाविधृतःस्वयं ॥ त्वत्तोयेसर्वतीर्थानिदेवाः सर्वेत्वयिस्थिताः ॥ त्वयितिष्ठंतिभूतानित्वयिप्राणाःप्रतिष्ठिताः ॥ शिवःस्वयंत्वमेवासिविष्णुस्त्वंचप्रजापतिः ॥ आदित्यावसवोरुद्राविश्वेदेवाःसपैतृकाः ॥ त्वयितिष्ठंतिसर्वेपियतःकामफलप्रदाः ॥ त्वत्प्रसादादिमंयज्ञंकर्तुमीहेजलोद्भव ॥ सांनिध्यंकुरु देवेशप्रसन्नोभवसर्वदा ॥ अनेनकृतपूजनेनआदित्याद्यावाहितदेवताःप्रीयंतां ॥ आचार्यःएवंगुणेत्यादि ॥ ग्रहयज्ञांगहवनं कर्तुंस्थंडिलादिसकलंकर्मक० ॥ यत्राग्निःस्थाप्यतेतत्रस्थंडिलंकल्पयित्वेतिसमंपूर्वेणयथोपदेशांतंकुर्यात् ॥ अन्वाधानं—आदित्यं । सोमं । अंगारकं । बुधं । बृहस्पतिं । शुक्रं । शनैश्चरं । राहुं । केतुं ॥ एताःआदित्यादिदेवताःसमिच्चरुतिलचर्वाज्यद्रव्यैःअष्टाष्टसंख्याकाहुतिपर्याप्तं ॥ आदित्यादिदेवताभ्योनमम ॥ ईश्वरं । उमां । स्कंदं । नारायणं । ब्रह्माणं । इंद्रं ।

---

१ अर्कपलाशखदिरअपामार्गपिप्पलःऔदुंबरशमीदूर्वादर्भइत्यादिक्रमेण ॥ २ अष्टसहस्रअष्टशतअष्टाविंशतिवा ॥

यमं । कालं । चित्रगुप्तं ॥ अग्निं । अपः । भूमिं । विष्णुं । इंद्रं । इंद्राणीं । प्रजापतिं । सर्पान् । ब्रह्माणं ॥ एताःअधिदेवताःप्रत्यधिदेवताश्चतैरेवद्रव्यैःचतुश्चतुःसंख्याकाहुतिपर्याप्तं । ईश्वरादिदेवताभ्योनमम ॥ गणपतिं । दुर्गां । वायुं । आकाशं । अश्विनौ । वास्तोष्पतिं । क्षेत्रपालंच ॥ एताःक्रतुसंरक्षकदेवताःद्विद्व्याहुतिपर्याप्तं । गणपत्यादिदेवताभ्योनमम ॥ इंद्रं । अग्निं । यमं । निर्ऋतिं । वरुणं । वायुं । सोमं । ईशानं । एताःलोकपालदेवताःद्विद्व्याहुतिपर्याप्तं । इंद्रादिदेवताभ्योनमम ॥ इत्यन्वाधानं ॥ आन्वाधानोक्तहोमंकुर्यात् ॥ ॐ अग्नयेस्वाहा । अग्नयइदं । रुद्रायतंतिचरायस्वाहा । रुद्रायतंतिचरायेदं० ॥ अस्यहोमप्रतिष्ठासिद्ध्यर्थंजयादिसमस्तराष्ट्रभृद्धोमंचकरिष्ये ॥ जयादिप्रायश्चित्तहोमांतंकृत्वा ॥

॥ २१ ॥ बलिदानं ॥ अद्यपूर्वोच्चारि० शुभतिथौमयाकृतस्यग्रहयज्ञस्यसांगतायैतत्संपूर्णफलावाप्त्यर्थंसर्वारिष्टशांत्यर्थं इंद्राद्यष्टौलोकपालेभ्यःसूर्यादिनवग्रहसाधिप्रत्यधिदेवताभ्य० गणपत्यादिक्रतुसंरक्षकदेवताभ्यश्चबलिप्रदानंकरिष्ये॥ ॐ त्रातारमिंद्रम० त्विंद्रः ॥ इंद्रायसांगायसपरिवारायसायुधायसशक्तिकायइमंसदीपंमाषभक्तबलिंसमर्पयामि ॥ भोइंद्रअमुंबलिंगृहाणस्वांदिशंरक्षबलिंभक्षममसकुटुंबस्यसपरिवारस्यआयुःकर्ताक्षेमकर्ताशांतिकर्तापुष्टिकर्तातुष्टिकर्तानिर्विघ्नकर्ताआरोग्यकर्तावरदोभव ॥ अनेनबलिदानेनइंद्रःप्रीयतां ॥ ॐ अग्निंदूतंवृणी० क्रतुं ॥ अग्नयेसांगायस० यामि ॥ भोअग्नेस्वांदिशंरक्ष

१ अष्टशतअष्टाविंशतिअष्टाष्टवा ॥ २ अष्टाविंशतिअष्टाष्टचतुश्चतुः ॥ ३ अष्टाष्टचतुश्चतुः ॥ शक्त्यनुसारेणकार्यः ॥ ४ अनुयाजसमिधं ॥ ५ इध्मबंधनरज्जुंजुहोति ॥

बलिंभक्षममसकुटुंबस्य० वरदोभव ॥ अनेनबलिदानेनअग्निःप्रीयतां ॥ ॐ यमायसोमᳪंसु० यमायसांगाय० यमःप्रीयतां ॥ ॐ असुंन्वंतम० निर्ऋतयेसांगाय० निर्ऋतिःप्रीयतां ॥ ॐ तत्त्वांयामिब्र० वरुणायसांगाय० वरुणःप्रीयतां ॥ ॐ वायो शतᳪं० वायवेसां० वायुःप्रीयतां ॥ ॐ वयᳪंसोमव्रतेतव० सोमायसांगाय० सोमःप्रीयतां ॥ ॐ अभित्वांदेवस० ईशानाय० ईशानःप्रीयतां ॥ ॐ आसत्येन० सूर्यायसांगायसपरिवारायसायुधायसशक्तिकायईश्वराग्निरूपाधिदेवताप्रत्यधिदेवतासहितायइमंसदीपंमाषभक्तबलिंसमर्पयामि ॥ भोसूर्यअमुंबलिंगृहाणममसकुटुंबस्यसपरिवारस्यआयुःकर्ताक्षेमकर्ताशांतिकर्तापुष्टिकर्तातुष्टिकर्तानिर्विघ्नकर्ताआरोग्यकर्तावरदोभव ॥ अनेनबलिदानेनसूर्यःप्रीयतां ॥ ॐ आप्यांय० सोमायसांगाय० उमाऽब्रूपाधिदेवताप्रत्यधिदेवतासहितायइमं० सोमःप्रीयतां ॥ ॐ अग्निर्मूर्धादिवःकु० अंगारकायसां० स्कंदभूमिरू० अंगारकःप्रीयतां ॥ ॐ उद्बुध्यस्वाग्नेप्र० बुधायसां० नारायणविष्णुरू० बुधःप्रीयतां ॥ ॐ बृहस्पते० बृहस्पतयेसां० ब्रह्मेंद्र० बृहस्पतिःप्री० ॥ ॐ शुक्रंतेअन्य० शुक्राय० इंद्रेंद्राणीरू० शुक्रःप्रीयतां० ॥ ॐ शमग्नि० यमप्रजापतिरू० शनैश्चरःप्री० ॥ ॐ कयानश्चित्र० राहवे० कालसर्परू० राहुःप्रीयतां ॥ ॐ केतुंकृण्व० केतवेसां० चित्रगुप्तब्रह्मरू० केतुःप्रीयतां० ॥ ॐ गणानांत्वा० गणपतयेसांगा० प्रीयतां० ॥ ॐ जातवेद० दुर्गायैसांगायैसपरिवारायैसायुधायैसशक्तिकायै इमं० भोदुर्गेअमुंबलिंगृहाण ॥ ममसकुटुंबस्यआयुःकर्त्रीक्षेमकर्त्री० वरदाभव ॥ अनेनबलिदानेनदुर्गाप्रीयतां० ॥ ॐ वायो शतᳪंह० वायवेसां० वायुःप्री० ॥ ॐ घृतंघृतपावानः० आकाशायसां० आकाशःप्री० ॥ ॐ यावांकशामधु० अश्विभ्यां सांगाभ्यांस० भोअश्विनौअमुंबलिंगृह्णीतं ममसकुटुंबस्यआयुःकर्तारौक्षेमकर्तारौ० वरदौभवतं ॥ अनेनबलिदानेनअ

श्विनौप्रीयेतां ॥ ॐ वास्तोष्पते॒प्र० वास्तोष्पतये० प्री० ॥ ॐ क्षेत्रस्य॒पतिना० इतिमंत्रेणक्षेत्रपालबलयेनमः पंचोपचारैःसं पूज्य ॥ ॐ क्षेत्रस्य० दृशे ॥ क्षेत्रपालायसांगायसपरिवाराय० सशक्तिकायशाकिनीडाकिनीभूतप्रेतपिशाचब्रह्मराक्षसवेता लादिसहितायइमंसदीपंमाषभक्तबलिंसम० भोभोक्षेत्रपालअमुंबलिंगृहाणममसकुटुंबस्यसपरिवारस्यआयुःकर्ताक्षेम० क्षेत्र पालःप्री० ॥ शूद्रादिनादुर्ब्राह्मणेनवाबलिर्बहिरंगणेचतुष्पथेस्थापनीयः ॥ सकुटुंबयजमानःहस्तौपादौप्रक्षाल्याचम्यशा॒ंता पृथि॒वी०अ॒घोरेभ्यो०इत्यादिपठन्गृहंप्रविशेत् आचम्य ॥ ॥ इतिबलिदानं ॥ ॥ ॥

॥ २२ ॥ पूर्णाहुतिः ॥ आचम्यप्राणानायम्य० शुभतिथौ ॥ मयाकृतस्यग्रहयज्ञस्यसांगतायैतत्संपूर्णाधिकपुण्यफ लावाप्त्यर्थंपूर्णाहुतिंहोष्ये ॥ द्वादशवारंस्रुच्याज्यमादाय ॥ तत्रनारिकेलादिफलंनिधाय ॥ ॐ स॒प्त तेंअग्नेस॒मिधः स॒प्तजि॒ह्वाः स॒प्तर्षयः स॒प्तधाम॑प्रि॒याणि ॥ स॒प्तहोत्रा॑स॒प्तधात्वा॑यजंतिस॒प्तयोनी॒रापृ॑णस्वाघृ॒तेन॒स्वाहा॑ ॥ सप्तवतेग्नयइदं० ॥ शंचमे॒० वसोर्धा रानुवाकंपठेत् ॥ ॐ पू॒र्णा॒हु॒तिमु॒त्त॒मांजु॑होति ॥ सर्व॒वैपूर्णा॒हु॒तिः ॥ सर्व॑मे॒वाप्नोति ॥ अथो॒इ॒यंवैपूर्णा॒हु॒तिः ॥ अ॒स्यामे॒वप्रति तिष्ठति ॥ प्रणीताविमोकादिब्रह्मविसर्जनांतंकृत्वा ॥ अग्निंसंपूज्यविभूतिंधृत्वा० हव्यवाहन ॥ अनेनग्रहयज्ञाख्येनकर्मणा भगवन्तआदित्यादयःप्रीयंतां ॥ स्थापितदेवतानांउत्तरपूजांकुर्यात् ॥ कृतस्य० आचार्यायद्रव्यद्वारासांगतागोदानंकरिष्ये ॥ यज्ञसाधनभूतायाविश्वस्याघौघनाशिनी ॥ विश्वरूपधरोदेवःप्रीयतामनयागवा ॥ इदंगोनिष्क्रयीभूतंद्रव्यंअमुकशर्मणेब्रा ह्मणायतुभ्यमहंसंप्रददे ॥ इदंपीठदानंदक्षिणासहितंआचार्यायतुभ्यमहंसंप्रददे० ॥ ॥ ॥

---

१ चरकीचविदारीचपूतनापापराक्षसी ॥ भूतजृंभोविरूपाक्षोधूम्रजिह्वोमहोरगः ॥ एताःचरक्यादिदेवताःप्रतिष्ठादिसमयेसंस्थाप्यंतइत्याचारः ॥

॥ २३ ॥ श्रेयोग्रहणं—अद्येत्या० मयाकृतस्यआचार्यादिब्राह्मणद्वाराग्रहयज्ञस्यसांगतायैतत्संपूर्णफलावाप्त्यर्थंआचार्यादिभ्योब्राह्मणेभ्यःश्रेयोग्रहणंकरिष्ये ॥ तथाचआचार्यःश्रेयोदानमहंक० ॥ यजमानहस्तेशिवाआपःसंतु ॥ अक्षतंचारिष्टंचास्तु ॥ गंधाःपांतु० अक्षताःपांतुआयुष्यमस्तु ॥ मयातवनियोगेनतवसकलमनोरथसिध्यर्थंशांत्यर्थंपुष्ट्यर्थंतुष्ट्यर्थंयत्कृतंएभिर्ब्राह्मणैःसहआचार्यादिभ्योब्राह्मणेभ्यःजपकर्तृत्वंहोमकर्तृत्वंतदुत्पन्नंयच्छ्रेयस्तत्तुभ्यमहंसंप्रददेनमम ॥ प्रतिगृह्यतां । प्रतिगृह्णामि ॥ इतिश्रेयोग्रहणं ॥ देवस्यत्वेतिनवग्रहमंत्रैश्चसकुटुंबंसपरिवारंयजमानंपीठस्थकलशोदकेनअभिषिंचेत् ॥ ॐ देवस्यत्वेतियाजुषमंत्रैः ॥ ॥ ॥ ॥ ॥

॥ २४ ॥ अभिषेकपौराणमंत्राः ॥ ग्रहाणामादिरादित्योलोकरक्षणकारकः ॥ विषमस्थानसंभूतांपीडांदहतुतेरविः ॥१॥ रोहिणीशःसुधामूर्तिःसुधागात्रःसुधाशनः ॥ विषमस्थानसंभूतपीडांदहतुतेविधुः ॥ २ ॥ भूमिपुत्रोमहातेजाजगतांभयकृत्सदा ॥ वृष्टिकृद्वृष्टिहर्ताचपीडांदहतुतेकुजः ॥ ३ ॥ उत्पातरूपोजगतांचंद्रपुत्रोमहाद्युतिः ॥ सूर्यप्रियकरोविद्वान्पीडांदहतुतेबुधः ॥ ४ ॥ देवमंत्रीविशालाक्षःसदालोकहितेरतः ॥ अनेकशिष्यसंपूर्णःपीडांदहतुतेगुरुः ॥ ५ ॥ दैत्यमंत्रीगुरुस्तेषाप्राणदश्चमहामतिः ॥ प्रभुस्ताराग्रहाणांचपीडांदहतुतेभृगुः ॥ ६ ॥ सूर्यपुत्रोदीर्घदेहोविशालाक्षःशिवप्रियः ॥ मंदचारःप्रसन्नात्मापीडांदहतुतेशनिः ॥ ७ ॥ महाशिरामहावक्त्रोदीर्घदंष्ट्रोमहाभुजः ॥ अतनुश्चोर्ध्वकेशश्चपीडांदहतुतेतमः ॥ ८ ॥ अनेकवर्णरूपैश्चशतशोथसहस्रशः ॥ उत्पातरूपोजगतांपीडांदहतुतेशिखी ॥ ९ ॥ इत्येतैर्मंत्रैरभिषिंचेत् ॥ कृतस्य० ब्राह्मणभोजनं ॥ भूयसींदद्यात् ॥ यांतुदेवगच्छगच्छेतिविसर्जयेत् ॥ ॥ इतिग्रहयज्ञप्रयोगः ॥ ॥ ॥

## ॥ २५ ॥ वसोर्धारानुवाकः ॥

ॐ वसोर्धारांजुहोतिवसोर्मेधारासदितिवाएषाहूयतेघृतस्यवाएनमेषाधारामुष्मिंलोकेपिन्वमानोपतिष्ठतआज्येनजुहोतितेजो
वाआज्यंतेजोवसोर्धारातेजसैवास्मैतेजोवरुंधेथोकामावैवसोर्धाराकामानेवावरुंधेयंकामयेतप्राणानस्यान्नाद्यंविच्छिंद्यामितिवि
ग्राहंतस्यंजुहुयात्प्राणानेवास्यान्नाद्यंविच्छिनत्तियंकामयेतप्राणानस्यान्नाद्यꣳसंतनुयामितिसंततांतस्यंजुहुयात्प्राणानेवास्यान्ना
द्यꣳसंतनोतिद्वादशद्वादशानिजुहोतिद्वादशमासाःसंवत्सरःसंवत्सरेणैवास्माऽअन्नमवरुंधेन्नंचमेक्षुच्चमइत्याहैतद्वाऽअन्नस्यरूप
ꣳरूपेणैवान्नमवरुंधेग्निश्चमआपश्चमइत्याहैषावाअन्नस्ययोनिःसयोन्येवान्नमवरुंधेधैंद्राणिजुहोतिदेवताएवावरुंधेयत्सर्वेषामर्ध
मिंद्रःप्रतितस्मादिंद्रोदेवतानांभूयिष्ठभाक्तमइंद्रमुत्तरमाहेंद्रियमेवास्मिन्नुपरिष्टाद्दधातियज्ञायुधानिजुहोतियज्ञोवैयज्ञायुधानि
यज्ञमेवावरुंधेथोऽएतद्वैयज्ञस्यरूपꣳरूपेणैवयज्ञमवरुंधेवभृथश्चमेस्वगाकारश्चमइत्याहस्वगाकृत्याअग्निश्चमेघर्मश्चमइत्याहैतद्वैब्र
ह्मवर्चसस्यरूपꣳरूपेणैवब्रह्मवर्चसमवरुंधऋक्चमेसामचमइत्याहैतद्वैछंदसाꣳरूपꣳरूपेणैवछंदाꣳस्यवरुंधेगर्भाश्चमेवत्साश्चमइत्या
हैतद्वैपशूनाꣳरूपꣳरूपेणैवपशूनवरुंधेकल्पाँजुहोत्यक्लृप्तस्यक्लृप्त्यैयुग्मदयुजेजुहोतिमिथुनत्वायोत्तरावतीभवतोभिक्रांत्याएकाच
मेतिस्रश्चमइत्याहदेवच्छंदसंवाएकाचतिस्रश्चमनुष्यछंदसंचतस्रश्चाष्टौचदेवच्छंदसंचैवमनुष्यछंदसंचावरुंधऽआत्रयस्त्रिꣳशतो
तोजुहोतित्रयस्त्रिꣳशद्वैदेवतादेवताएवावरुंधऽआष्टाचत्वारिꣳशतोजुहोत्यष्टाचत्वारिꣳशदक्षराजगतीजागताःपशवोजगत्यैवा

सैपशूनवरुंधेवाजश्वप्रसवश्चेतिद्वादशंजुंहोतिद्वादशमासाः संवत्सरः संवत्सरएवप्रतितिष्ठति ॥ ॥ इतिवसोर्धारानुवाकः ॥ धारयन्धारयन्नितिशंसतिप्रस्रंसा० सोयंतियंती ॥ इत्यादिपठन् ॥ ॥ ॥

## ॥ २६ ॥ अग्न्युत्तारणं ॥

आचम्यप्राणानायम्यदेशकालौसं० ॥ अस्याः स्वर्णमय्याः मूर्तेः अग्न्याघातादिदोषपरिहारार्थं अग्न्युत्तारणंपूजाधिकारसिद्ध्यर्थं प्राणप्रतिष्ठांचक० ॥ अथैतन्मूर्ध्निहिरण्यकलशेनसंततदुग्धधारांपातयन्पठेत् ॥ ॐ अश्मन्नूर्जंपर्वतेशिश्रियाणांवातेपर्जन्येव रुणस्यशुष्मे ॥ अद्भ्यओषधीभ्योवनस्पतिभ्योधिसंभृतांतान्नइषमूर्जंधत्तमरुतः सᳪरराणाः ॥ अश्मᳪस्तेक्षुदमुंतेशुगृच्छतुयं द्विष्मः ॥ समुद्रस्यत्वावाकयाग्नेपरिव्ययामसि ॥ पावकोअस्मभ्यᳪशिवोभव ॥ हिमस्यत्वाजरायुणाग्नेपरिव्ययामसि ॥ पाव कोअस्मभ्यᳪशिवोभव ॥ उपज्मन्नुपवेतसेवत्तरंनदीष्वा ॥ अग्नेपित्तमपामसि ॥ मंडूकिताभिरागहिसेमन्नोयज्ञं ॥ पावकवं र्णᳪशिवंकृधि ॥ पावकआचितयंत्याकृपा ॥ क्षामन्रुरुचउषसोनभानुना ॥ तूर्वंनयामन्नेतशस्यनूरणआयोघृणे ॥ नततृषाणो अजरः ॥ अग्नेपावकरोचिषामंद्रयादेवजिह्वया ॥ आदेवान् वक्षियक्षिच ॥ सनः पावकदीदिवोग्नेदेवाᳪइहावह ॥ उपयज्ञᳪ हविश्चनः ॥ अपामिदंन्ययनᳪसमुद्रस्यनिवेशनं ॥ अन्यंतेअस्मत्तपंतुहेतयः पावकोअस्मभ्यᳪशिवोभव ॥ नमस्तेहरसेशोचि षेनमस्तेअस्त्वर्चिषे ॥ अन्यंतेअस्मत्तपंतुहेतयः पावकोअस्मभ्यᳪशिवोभव ॥ नृषदेवट् ॥ अप्सुषदेवड्वनसदेवड्बर्हिषदेवट्सुव र्विदेवट् ॥ येदेवादेवानांयज्ञियायज्ञियानाᳪसंवत्सरीणमुपभागमासते ॥ अहुतादोहविषोयज्ञेअस्मिन्त्स्वयंजुहुध्वंमधुनोघृ

तस्य ॥ येदेवादेवेष्वधिदेवत्वमायन्येब्रह्मणःपुरएतारोअस्य ॥ येभ्योनर्तेपवतेधामकिंचननतेदिवोनपृथिव्याअधिस्नुषु ॥ प्राणदा अपानदाव्यानदाश्चक्षुर्दावर्चोदावरिवोदाः ॥ अन्यंतेअस्मत्तपंतुहेतयःपावकोअस्मभ्यंशिवोभव ॥ अग्निस्तिग्मेनशोचिषायंसद्विश्वंन्यत्रिणं ॥ अग्निर्नोवंसतेरयिं ॥ सैनानीकेनसुविदत्रोअस्मेयष्टादेवाआयजिष्ठःस्वस्ति ॥ अदब्धोगोपाउतनःपरस्पाअग्नेद्युमदुत्तरेवदिदीहि ॥ ५ ॥ एवमयुतसहस्रशतान्यतमसंख्ययाअग्न्युतारणंकुर्यात् ॥ ॥ ॥

## ॥ २७ ॥ प्राणप्रतिष्ठा ॥

ॐ अस्यश्रीप्राणप्रतिष्ठामंत्रस्यब्रह्मविष्णुमहेश्वराऋषयः ॥ ऋग्यजुःसामाथर्वाणिछंदांसि ॥ पराप्राणशक्तिर्देवता ॥ आंबीजं । ह्रींशक्तिः । क्रोंकीलकं ॥ अस्याःस्वर्णमय्याःमूर्तेःप्राणप्रतिष्ठापनेविनि० ॥ ॐ आंह्रींक्रोंअंयंरंलंवंशंषंसंहंळंक्षंअः क्रोंह्रींआंहंसः सोहंअस्याःस्वर्णमय्याःमूर्तेःप्राणाइहप्राणाः ॥ ॐ आंह्रींक्रोंअं० सोहंअस्याःस्वर्ण० जीवइहस्थितः ॥ ॐ आंह्रींक्रोंअं० अस्याः स्व० सर्वेंद्रियाणिवाङ्मनस्त्वक्चक्षुःश्रोत्रजिह्वाघ्राणपाणिपादपायूपस्थादीनिइहैवागत्यसुखंचिरंतिष्ठंतुस्वाहा ॥ अस्यैप्राणाःप्रतिष्ठंतुअस्यैप्राणाःरक्षंतुच ॥ अस्यैदेवत्वमर्चायैमामहेतिचकश्चन ॥ ॐ असुनीतेपुनरस्मासुचक्षुःपुनःप्राणमिहनोधेहिभोगं ॥ ज्योक्पश्येमसूर्यमुच्चरंतमनुमतेमृळयानःस्वस्ति ॥ गर्भाधानादिपंचदशसंस्कारसिद्ध्यर्थं पंचदशप्रणवावृत्तीःकरिष्ये ॥ ॐ १५ ॥ रक्तांभोधिस्थपोतोल्लसदरुणसरोजाधिरूढाकराब्जैःपाशंकोदंडमिक्षूद्भवमथगुणमप्यंकुशंपंचबाणान् ॥ बिभ्राणासृक्कपालंत्रिनयनलसितापीनवक्षोरुहाढ्यादेवीबालार्कवर्णाभवतुसुखकरीप्राणशक्तिःपरानः ॥ ॐ उदुत्यंजातवेदसंदे

वंवहंतिःकेतवः ॥ दृशेविश्वायसूर्यं ॥ ॐ अंजंतित्वामध्वरेदेवयंतोवनस्पतेमधुनादैव्येन ॥ यदूर्ध्वस्तिष्ठाद्रविणेहधत्ताद्यद्वा क्षयोमातुरस्याउपस्थे ॥ इतिमंत्राभ्यांघृतेननेत्रोन्मीलनं ॥ नैवेद्यंसमर्प्य ॥ इतिप्राणप्रतिष्ठाविधिः ॥ २७ ॥ अथस्तंभप्रतिष्ठाविधिः ॥ (मुंडास्थापनं) आचम्यप्राणानायम्यदेशकालौसंकीर्त्य ॥ अमुकगोत्रोत्पन्नस्यामुकशर्मणःममास्यकुमारस्यउपनयनांगं वाममकन्यकायाःकरिष्यमाणविवाहांगंमंडपनिर्माणादिक० ॥ तत्रादौनिर्विघ्नतासिद्ध्यर्थंगणपतिपूजनपूर्वककूर्मशेषवराहक्षितिविश्वकर्मादिदेवतापूजनंकरिष्ये ॥ गणपतिंसंपूज्य ॥ नाममंत्रेणकूर्मादिदेवताःषोडशोपचारैःसंपूज्यआग्नेयकोणे गर्तायांपृथिव्यैनमःइतिपंचोपचारैःसंपूज्य गर्ते[1]शैवालंदधिभक्तंफलंनिधायशैवालंपुष्पंचप्रक्षिप्य ॥ कुंकुमहरिद्राद्यलंकृतंवस्त्रे पूगीफलहरिद्राखंडाक्षतयुक्तचीरखंडंबध्वास्तंभंरोपयेत्संपूज्यतदुपरिघृतधारांधृत्वाधारयन्धारयन्निितिऐतरेयब्राह्मणमंत्रं पठन् ॥ यदिकाकादयोनतिष्ठेयुस्तदातृणादिबध्नीयात् ॥ ॥ इतिस्तंभप्रतिष्ठाविधिः ॥ विवाहउपनयकालेअयंप्रकारः ॥ ॥

॥ २८ ॥ वेद्या[2]रंभणं ॥ आचम्य० अस्यकुमारस्यउपनयनांगं( विवाहांगं ) वेद्यारंभणंकरिष्ये ॥ गणपतिस्मरणंक० ॥ वेदिनिर्माणस्थानेगर्तंखात्वातत्रपंचोपचारैःसंपूज्यदध्योदनंशैवालंपुष्पंचप्रक्षिप्य ॥ वेदिकांकुर्यात् ॥ वि०उ० अयंप्रकारः ॥

## ॥ २९ ॥ ऋतुशांतिः ॥

श्रीगणेशायनमः ॥ यजमानःकृताभ्यंगादिःस्वलंकृतःआचम्यप्राणानायम्य ॥ तिथ्यादिदोषरहितचंद्रानुकूल्येशुभासनेवस्त्रा

---

१ गृहस्याग्नेयकोणेगर्तंखात्वा ॥ २ वेदिप्रमाणं—आचर्यस्यपदैःषड्भिश्चतुर्भिरथवाकरैः ॥ विस्तृताचतुरस्राचबटोर्वेदीकरोन्नता ॥ वामे गृहस्यवेदीस्याद्विवाहेचोपनायने ॥ सर्वेषांशाखिनामेवविनावाजसनेयिनः ॥ प्रयोगपारिजाते ॥

च्छादितेपीठेप्राङ्मुखउपविश्यस्वदक्षिणतःपत्नींचोपवेश्य ॥ आचम्यप्राणानायम्यदेशकालौसंकीर्त्य॥ ममपत्न्याःप्रथमऋतुदर्श
नेअमुकदुष्टमासादिसूचितसकलारिष्टनिरसनद्वाराश्रीपरमेश्वरप्रीत्यर्थंसग्रहमखांबौधयनोक्तांऋतुशांतिंक० ॥ तदंगंगणपति
पूजनंकर्मणःपुण्याहवाचनंआचार्यादिवरणंचकरिष्ये ॥ गणपतिपूजनादिआचार्यवरणांतंकृत्वा ॥ आचार्यःआचर्यकर्मकरि
ष्येइत्यादिप्रादेशांतंकुर्यात् ॥ ऋतुशांत्यंगभूतंमुख्यदेवतास्थापनंपूजनंचक० ॥ महीद्यौरितिभूमिंस्पृष्ट्वा ॥ ओषधयःसंवदंतेइ
तिमंत्रेणप्रस्थपरिमितव्रीहिभिःचतुरस्रांवेदिंकृत्वा ॥ वेदिमध्येअष्टदलंलिखित्वाकुशैर्दूर्वाभिश्चवेदिंप्रच्छाद्य ॥ वेद्युपरि ॐ आ
जिंघ्रकलशंमह्युरुधारापयस्वत्यात्वाविशंत्विंदवःसमुद्रमिवसिंधवःसामासहस्रआभजप्रजयापशुभिःसहपुनर्माविशताद्रयिः ॥
इतिमंत्रेणतंतुवेष्टितंनवंदृढंअव्रणंताम्रंमृन्मयंवाकलशंनिधायतस्मिन्कुंभे ॥ ॐ आपोवाइदꣳसर्वंविश्वाभूतान्यापःप्राणावाआ
पःपशवआपोन्नमापोमृतमापःसम्राडापोविराडापःस्वराडापश्छंदाꣳस्यापोज्योतीꣳष्यापोयजूꣳष्यापःसत्यमापःसर्वादेवताआ
पोभूर्भुवःसुवरापॐ ॥ ॐ आपोहिष्ठा०चनः॥ इतिमंत्रेणउदकंपूरयित्वा ॥ ॐ कांडात्कांडादितिमंत्रेणकूर्चमंतर्धाय ॥ ॐ अश्व
त्थेवोनिषदं० पंचपल्लवान्निक्षिप्य ॥ बृहस्पतेजुषस्वनो० शुषे ॥ इतिनवरत्नानि ॥ ॐ अग्नेरेतश्चंद्रꣳ० तरेयं । हिरण्यंप्रक्षि
प्य ॥ ॐ याःफलिनीरितिफलानि ॥ ॐ युवासुवासाः० इतिमंत्रेणवस्त्रयुग्मेनाच्छाद्य ॥ कलशोपरिनारिकेलफलंनिधाय ॥
बिल्वपल्लवैश्चूतपल्लवैश्चावकीर्य ॥ तत्रपुरुषायपुंडरीकाक्षायनमःपुरुषंपुंडरीकाक्षंध्यायामिइत्यादिषोडशोपचारैःसंपूज्य (केचि
त्मतेमध्यकुंभेतद्विष्णोःपरमंपदमितिमंत्रेणविष्णुप्रतिमांतद्दक्षिणेब्रह्मजज्ञानमितिब्रह्मप्रतिमांतदुत्तरेत्र्यंबकमितिमंत्रेणरुद्रप्र
तिमांअग्न्युत्तारणपूर्वकंप्रतिष्ठाप्यषोडशोपचारैःसंपूज्य) ॥ ऋत्विग्भिःसहाचार्यःकुंभमन्वारभ्यजपेत् ॥ ॐ नारायणायविद्महे

वासुदेवायधीमहि ॥ तन्नोविष्णुःप्रचोदयात् ॥ इतिवैष्णवींगायत्रीमष्टोत्तरशतवारंजप्त्वा ॥ ततःवेदादीन्पठेत् ॥ ॐ अग्नि
मीळे० तमं ॥ ॐ इषेत्वोर्जेत्वा० ॥ ॐ अग्नआयाहि० ॥ ॐ शन्नोदेवीर० ॥ ॐ आपोहिष्ठा० चनः ॥ ॐ हिरण्यवर्णाः०
निर्धत्त ॥ ॐ यद्दः संप्रयतीरहावनंदताहुते ॥ तस्मादानद्योनामस्थतावोनामानिसिंधवः ॥ यत्प्रेषितावरुणेनताःशीभंऽसम
वल्गत ॥ तदाप्नोदिंद्रोवोयतीस्तस्मादापोअनुस्थन ॥ अपकामंऽस्यंदमानाअवीवरतवोहिकं ॥ इंद्रोवःशक्तिभिर्देवीस्तस्मा
द्वार्णामवोहितं ॥ एकोदेवोअप्यतिष्ठत्स्यंदमानायथावशं ॥ उदानिषुर्महीरितितस्मादुदकमुच्यते ॥ आपोभद्राघृतमिदाप
आसुरग्नीषोमौबिभ्रत्यापइत्ताः ॥ तीव्रोरसोमधुपृचामरंगमआमाप्राणेनसहवर्चसागन् ॥ आदित्पश्याम्युतवाश्रृणोम्यामाघो
षोगच्छतिवाङ्नआसां ॥ मन्येभेजानोअमृतस्यतर्हिहिरण्यवर्णाअतृपंयदावः ॥ आपोहिष्ठा० चनः ॥ पवमानःसुवर्जनः० जात
वेदामोर्जयंत्यापुनातु ॥ ॐ सहस्रशी० देवाः ॥ ॐ ऋचांप्राचीमहतीदिगुच्यते ॥ दक्षिणामाहुर्यजुषामपारां ॥ अथर्वणामं
गिरसांप्रतीची ॥ साम्नामुदीचीमहतीदिगुच्यते ॥ ऋग्भिःपूर्वाह्णेदिविदेवईयते ॥ यजुर्वेदेतिष्ठतिमध्येअह्नः ॥ सामवेदे
नास्तमयेमहीयते ॥ वेदैरशून्यस्त्रिभिरेतिसूर्यः ॥ ऋग्भ्योजाताऽसर्वशोमूर्तिमाहुः ॥ सर्वागतिर्याजुषीहैवशश्वत् ॥ सर्वतेजः
सामरूप्यंऽहशश्वत् ॥ सर्वंऽहेदंब्रह्मणाहैवसृष्टं ॥ ऋग्भ्योजातंवैश्यंवर्णमाहुः ॥ यजुर्वेदंक्षत्रियस्याहुर्योनिं ॥ सामवेदोब्राह्म
णानांप्रसूतिः ॥ पूर्वेपूर्वेभ्योवचएतदूचुः ॥ आदर्शमग्निंचिन्वानाः ॥ पूर्वेविश्वसृजोमृताः ॥ शतंवर्षसहस्राणि ॥ दीक्षिताः
सत्रमासत ॥ २ ॥ तपआसीद्गृहपतिः ॥ ब्रह्मब्रह्माभवत्स्वयं ॥ सत्यंऽहहोतैषामासीत् ॥ यद्विश्वसृजआसत ॥ अमृतमेभ्य
उदगायत् ॥ सहस्रंपरिवत्सरान् ॥ भूतंऽहप्रस्तोतैषामासीत् ॥ भविष्यत्प्रतिचाहरत् ॥ प्राणोअध्वर्युरभवत् ॥ इदंऽसर्वं

सिषासतां ॥ ३ ॥ अपानोविद्वानावृतः ॥ प्रतिप्रतिष्ठदध्वरे ॥ आर्तवाउपगातारः ॥ सदस्याऋतवोभवन् ॥ अर्धमासाश्च
मासाश्च ॥ चमसाध्वर्युवोभवन् ॥ अशंँसद्ब्रह्मणस्तेजः ॥ अछावाकोभवद्यशः ॥ ऋतमेषांप्रशास्तासीत् ॥ यद्विश्वसृज
आसत ॥ ४ ॥ ऊर्ग्राजानमुदवहत् ॥ ध्रुवगोपःसहोभवत् ॥ ओजोभ्यष्टौग्राव्णः ॥ यद्विश्वसृजआसत ॥ अपचितिःपोत्रि
यामयजत् ॥ नेष्ट्रीयामयजत्विषिः ॥ आग्नीध्राद्विदुषीसत्यं ॥ श्रद्धाहैवायजत्स्वयं ॥ इरापत्नीविश्वसृजां ॥ आकूतिरपिन
द्धविः ॥ ५ ॥ इध्मँँहक्षुच्चैभ्यउग्रे ॥ तृष्णाचावहतामुभे ॥ वागेषाँँसुब्रह्मण्यासीत् ॥ छंदोयोगान्विजानती ॥ कल्पतंत्रा
णितन्वानाहः ॥ सँँस्थाश्चसर्वशः ॥ अहोरात्रेपशुपाल्यौ ॥ मुहूर्ताःप्रेष्याअभवन् ॥ मृत्युस्तदभवद्धोता ॥ शमितोग्रोवि
शांपतिः ॥ ६ ॥ विश्वसृजःप्रथमाःसत्रमासत ॥ सहस्रसमंप्रसुतेनयंतः ॥ ततोहजज्ञेभुवनस्यगोपाः ॥ हिरण्मयःशकुनिब्र
ह्मनाम ॥ येनसूर्यस्तपतितेजसेद्धः ॥ पितापुत्रेणपितृमान्योनियोनौ ॥ नावेदविन्मनुतेतंबृहंतं ॥ सर्वानुभुमात्मानँँसंप
राये ॥ एषनित्योमहिमाब्राह्मणस्य ॥ नकर्मणावर्धतेनोकनीयान् ॥ ७ ॥ तस्यैवात्मापदवित्तंविदित्वा ॥ नकर्मणालिप्यते
पापकेन ॥ पंचपेचाशतस्त्रिवृतःसंवत्सराः ॥ पंचपंचाशतःपंचदशाः ॥ पंचपंचाशतःसप्तदशाः॥ पंचपंचाशतएकविँँशाः॥
विश्वसृजाँँसहस्रसंवत्सरः ॥ एतेनवैविश्वसृजइदंविश्वमसृजंत ॥ यद्विश्वमसृजंत ॥ तस्माविश्वसृजः ॥ विश्वमेनाननुप्र
जायते ॥ ब्रह्मणःसायुज्यँँसलोकतांयंति ॥ एतासामेवदेवतानाँँसायुज्यं ॥ सार्ष्टिताँँसमानलोकतांयंति ॥ यएतदुपयंति ॥
येचैनत्प्राहुः ॥ येभ्यश्चैनत्प्राहुः ॥ इत्यनुवाकंजपित्वा ॥ ततःकुंभस्योत्तरतःनववस्त्रालंकृतंसपत्नीकयजमानंतृणमयेविष्टरे
प्राङ्मुखमुपवेश्य ॥ ऋत्विक्सहाचार्यःस्थापितकलशोदकंपात्रांतरेगृहीत्वातत्रस्थपंचपल्लवैःकुशदूर्वाभिश्चउदङ्मुखएवआशी

र्वादपुरःसरंअभिषिंचेदेभिर्मंत्रैः ॥ तद्यथा ॐ आपोहिष्ठा० क्षसे । शिवमस्तुकल्याणंचास्तुइतिप्रतिमंत्रंपठेत् ॥ ॐ योवः शिवत० तरः । शिव० ॥ २ ॥ ॐ तस्माअरंग० चनः । शि० क० ॥ ॐ हिरण्यवर्णाः० भवंतु । शि० क० ॥ ४ ॥ ॐ यासांराः० भवंतु । शि० ॥ ५ ॥ ॐ यासांदेवा० भवंतु । शि० क० ॥ ६ ॥ ॐ शिवेनमा० धत्त । शि० ॥ ७ ॥ ॐ पवमान० सु० यःपोतास० शि० ॥ ८ ॥ पुनंतुमा० पुनंतुम० आयवः० शि० ॥ ८ ॥ जातवेदः० पवित्रेण० शुक्रेण० रनु० शिव० ॥ १० ॥ यत्तेपवित्र० अग्नेवि० महे ॥ शिव० ॥ ११ ॥ उभाभ्यां० पवित्रे० इदं० महे । शिव० ॥ १२ ॥ वैश्वदेवी० यस्यै० यीणां । शिव० ॥ १३ ॥ वैश्वानरो० वातः० द्यावा० नीतां । शिव० ॥ १४ ॥ बृहद्भिः० वर्षि० हिमा । शि० ॥ १५ ॥ येनदेवाः० येनापो० महेशिव० ॥ १६ ॥ यःपा० ऋषिभि० श्वना । शिव० ॥ १७ ॥ पावमा० क्षीरं० दकं । शिव० ॥ १८ ॥ पावमानीः० सुदुघा० मृतुंहितंशि० ॥१९॥ पावमानीः० भृताः । शिव० ॥२०॥ पावमा० ब्राह्मणे ष्वमृतंहितं । शि० ॥ २१ ॥ येनदेवाः० तुमा । शिव० ॥ २२ ॥ प्राजापत्यं० पूतंब्रह्मपुनीमहे ॥ शिव० ॥ २३ ॥ इंद्रः सुनीति० मोर्जयंत्यापुनातुशि० ॥२४॥ सुरास्त्वामभिषिंचंतु० सर्वकामार्थसिद्धये ॥ इत्यादिमंत्रैरभिषेकंकुर्यात् ॥ नारीपंच गव्यंप्राश्नीयात् ॥ उष्णोदकेनतैलाभ्यंगपूर्वकंस्नानंकृत्वा ॥ अहतवाससीपरिधायकुंकुमपुष्पमालादिधारणंकुर्यात् ॥ अभि षेककालीनवाससीआचार्यायदद्यात् ॥ आचम्यप्राणानायम्य ॥ ऋतुशांत्यंगंहवनंकर्तुंस्थंडिलादिसकलंकर्मकरिष्ये ॥ यत्रा ग्निःस्थाप्यतेति० वरदोभव ॥ ग्रहयज्ञवत्ग्रहान्संपूज्यवरुणंप्रार्थयेत् ॥ दक्षिणोत्तरैरुत्तराधरैःप्रागुदगग्रैर्दर्भैरग्निंपरिस्तृणा तीतिसमंपूर्वेणयथोपदेशांतंकुर्यात् ॥ हविर्द्रव्यत्यागंकुर्यात् ॥ ग्रहयज्ञवत्ग्रहान् ॥ आदित्यंसोमंइत्यादि० ॥ अथप्रधानदे

वता–विष्णुंषड्ऋचात्मकेनविष्णुसूक्तेनपलाशसमिद्भिःअष्टोत्तरशतसंख्याहुतिपर्याप्तंविष्णवेनमम ॥ ब्रह्माणं–षड्ऋचात्मके
नब्रह्मसूक्तेनचरुद्रव्येणअष्टोत्तरशतसंख्याहुतिपर्याप्तंब्रह्मणेनमम ॥ २ ॥ रुद्रं–षड्ऋचात्मकेनरुद्रसूक्तेनाज्यद्रव्येणअष्टोत्तर
शतसंख्याहुतिपर्याप्तंरुद्रायनमम ॥ ब्रह्माद्यष्टदेवान्अष्टर्चात्मकेनघृतसूक्तेनाज्यद्रव्येणैकैकाहुतिपर्याप्तंब्रह्मादिभ्योनमम ॥
नक्षत्रदेवतांअष्टौवाक्यात्मकेनमंत्रेणसमिच्चर्वाज्यद्रव्यैःप्रतिद्रव्यंअष्टाविंशतिसंख्याहुतिपर्याप्तंतत्तद्देवताभ्योनमम ॥ त्र्यंब
कं ॥ त्र्यंबकेतिमंत्रेणअष्टोत्तरशतसंख्याहुतिपर्याप्तंतिलद्रव्यंत्र्यंबकायनमम ॥ इतिद्रव्यत्यागंकृत्वा ॥ ग्रहहोमंकृत्वाप्रधानहो
मंकुर्यात् ॥ विष्णुसूक्तेनपलाशसमिद्भिः ॥ मंत्रः ॥ ॐ विष्णोर्नुकंवीर्याणिप्रवोचंयःपार्थिवानिविममेरजाꣳसि योअस्कभाय
दुत्तरꣳसधस्थंविचक्रमाणस्त्रेधोरुगायःस्वाहा ॥ १ ॥ ॐ तदस्यप्रियमभिपाथोअश्यांनरोयत्रदेवयवोमदंति ॥ उरुक्रमस्यसहि
बंधुरित्थाविष्णोःपदेपरमेमध्वउत्सःस्वाहा ॥ २ ॥ ॐ प्रतद्विष्णुस्तवतेवीर्यायमृगोनभीमःकुचरोगिरिष्ठाः ॥ यस्योरुषुत्रिषु
विक्रमणेष्वधिक्षियंतिभुवनानिविश्वास्वाहा ॥ ३ ॥ ॐ परोमात्रयातनुवावृधाननतेमहित्वमन्वश्नुवंति ॥ उभेतेविद्मरजसी
पृथिव्याविष्णोदेवत्वंपरमस्यवित्सेस्वाहा ॥४॥ ॐ विचक्रमेपृथिवीमेषएतांक्षेत्रायविष्णुर्मनुषेदशस्यन् ॥ ध्रुवासोअस्यकीरयो
जनासउरुक्षितिꣳसुजनिमाचकारस्वाहा ॥ ५ ॥ त्रिर्देवःपृथिवीमेषएतांविचक्रमेशतर्चसंमहित्वा ॥ प्रविष्णुरस्तुतवसस्तवी
यान्त्वेषꣳह्यस्यस्थविरस्यनामस्वाहा ॥ ६ ॥ ब्रह्मसूक्तेनचरुणा ॥ ॐ ब्रह्मजज्ञानंप्रथमंपुरस्ताद्विसीमतःसुरुचोवेनआवः ॥
सबुध्नियाउपमाअस्यविष्ठाःसतश्चयोनिमसतश्चविवःस्वाहा ॥१॥ ॐ पिताविराजामृषभोरयीणामंतरिक्षंविश्वरूपआविवेश ॥
तमर्कैरभ्यर्चंतिवत्संब्रह्मसंतंब्रह्मणावर्धयंतःस्वाहा ॥ २ ॥ ॐ ब्रह्मदेवानजनयद्ब्रह्मविश्वमिदंजगत् ॥ ब्रह्मणःक्षत्रंनिर्मितंब्रह्म

ब्राह्मणआत्मनास्वाहा ॥ ३ ॥ ॐ अंतरस्मिन्निमेलोकाअंतर्विश्वमिदंजगत् ॥ ब्रह्मैवभूतानांज्येष्ठंतेनकोर्हतिस्पर्धितुꣳस्वाहा ॥ ४ ॥ ब्रह्मन्देवास्त्रयस्त्रिꣳशद्ब्रह्मन्निंद्रप्रजापती ॥ ब्रह्मन्हविश्वाभूतानिनावीवांतःसमाहितास्वाहा ॥५॥ ॐ चतस्रआशाः प्रचरंत्वग्नयइमंनोयज्ञंनयतुप्रजानन् ॥ घृतंपिन्वन्नजरꣳसुवीरंब्रह्मसमिद्भवत्याहुतीनाꣳस्वाहा ॥६॥ अथरुद्रसूक्तेनाज्येन ॥ ॐ परिणोरुद्रस्यहेतिर्वृणक्तुपरित्वेषस्यदुर्मतिरघायोः ॥ अवस्थिरामघवद्भ्यस्तनुष्वमीढ्वस्तोकायतनयायमृडयस्वाहा ॥ १ ॥ ॐ स्तुहिश्रुतंगर्तसदंयुवानंमृगंनभीममुपहत्नुमुग्रं ॥ मृडाजरित्रेरुद्रस्तवानोअन्यंतेअस्मन्निवपंतुसेनाःस्वाहा ॥२॥ ॐ मीढुष्टमशिवतमशिवोनःसुमनाभव ॥ परमेवृक्षआयुधंनिधायकृत्तिंवसानआचरपिनाकंबिभ्रदागहिस्वाहा ॥३॥ ॐ अर्हन्बिभर्षिसायकानिधन्वार्हन्निष्कंयजतंविश्वरूपं ॥ अर्हन्निदंदयसेविश्वमभ्भुवंनवाओजीयोरुद्रत्वदस्तिस्वाहा ॥४॥ ॐ त्वमग्नेरुद्रोअसुरोमहोदिवस्त्वꣳशर्द्धोमारुतंपृक्षईशिषे ॥ त्वंवातैररुणैर्यासिशंगयस्त्वंपूषाविधतःपासिनुत्मनास्वाहा ॥५॥ ॐ आवोराजानमध्वरस्यरुद्रꣳहोतारꣳसत्ययजꣳरोदस्योः ॥ अग्निंपुरातनयित्नोरचित्ताद्धिरण्यरूपमवसेकृणुध्वꣳस्वाहा ॥ ६ ॥ घृतसूक्तेनाज्येन ॥ ॐ योब्रह्माब्रह्मणउज्जभारप्राणेश्वरःकृत्तिवासाःपिनाकी ॥ ईशानोदेवःसनआयुर्दधातुतस्मैजुहोमिहविषाघृतेनस्वाहा ॥ ब्रह्मणइदं० ॥१॥ ॐ विभ्राजमानःसरिरस्यमध्याद्रोचमानोघर्मरुचिर्यआगात् ॥ समृत्युपाशादपनुद्यघोरामिहायुषेनोघृतमत्तुदेवाः स्वा० ॥ देवायेदं० ॥२॥ ॐ ब्रह्मज्योतिर्ब्रह्मपत्नीषुगर्भंयमादधात्पुरुरूपंजयंतं ॥ सुवर्णरंभंगृहमर्कमर्चंनमायुषेवर्धयामोघृतेन स्वाहा ॥ अर्कायेदं ॥३॥ ॐ श्रियंलक्ष्मीमौपलामंबिकांगाꣳषष्ठींचयामिंद्रसेनेत्युदाहुः ॥ तांविद्यांब्रह्मयोनिꣳसरूपामिहायुषेतर्पयामोघृतेनस्वाहा ॥ विद्यायेदं० ॥४॥ ॐ दाक्षायण्यःसर्वयोन्यःसयोन्यःसहस्रशोविश्वरूपाविरूपाः ॥ ससूनवःसपतयःसयू

थ्याआयुषेनोघृतमिदंजुषताᳫंस्वाहा ॥ दाक्षायणीभ्यइदं० ॥५॥ ॐ दिव्यांगनाबहुरूपाःपुराणाआयुश्छिदोनःप्रथमंतुवीरान् ॥
तेभ्योजुहोमिबहुधाघृतेनमानःप्रजाᳫंरीरिषोमोतवीरान्त्स्वाहा ॥ दिव्यांगनाभ्यइदं० ॥६॥ ॐ एकःपुरस्ताद्यइदंबभूवयतोबभू
वुर्भुवनस्यगोपाः ॥ यमप्येतिभुवनᳫंसांपरायेसनोहविर्घृतमिहायुषेत्तुदेवःस्वाहा ॥ देवायेदं० ॥७॥ ॐ वसून्रुद्रानादित्यान्म
रुतोथसाध्यानृभून्यक्षान्गंधर्वाᳫंश्चपितॄᳫंश्चविश्वान् ॥ भृगून्सर्पाᳫंश्चांगिरसोथसर्वान्घृतᳫंहुत्वास्वायुष्यामहयामशश्वत्स्वाहा ॥
वस्वादिभ्यइदं० ॥ ८ ॥ इतिघृतसूक्तेन ॥ नक्षत्रदेवताअष्टौवाक्यात्मकेनमंत्रेणतत्तन्नक्षत्रदेवतासमिच्चर्वाज्यैर्हुत्वा ॥ त्र्यंबक
मितिमंत्रेणतिलद्रव्येणअष्टोत्तरशतंहुत्वा ॥ स्विष्टकृतंहुत्वा ॥ ॐ हव्यवाहमभिमातिषाहᳫंरक्षोहणंपृतनासुजिष्णुं ॥ ज्योति
ष्मंतंदीद्यतंपुरंधिमग्निᳫंस्विष्टकृतमाहुवेमोंस्विष्टमग्नेअभितत्पृणाहिविश्वादेवपृतनाअभिष्य ॥ उरुंनःपंथांप्रदिशन्विभाहिज्यो
तिष्मद्धेह्यजरंन्नआयुःस्वाहा ॥ अग्नयेस्विष्टकृतइदं० ॥ समिधमिध्मसंनहनंजयादिसमस्तराष्ट्रभृद्धोमंप्रायश्चित्तहोमांतंकृत्वा ॥
बलिंपूर्णाहुतिंचजुहुयात् ॥ प्रणीताविमोकादिकर्मशेषंसमापयेत् ॥ आचार्यायसांगतागोदानं ॥ मयाकृतस्यआचार्यादृत्वि
क्द्वाराऋतुशांतिकर्मणःसांगतायैतत्संपूर्णफलावाप्तयेआचार्यायगोनिष्क्रयीभूतंद्रव्यदानमहंक० ॥ यज्ञसा० । इदंगोनिष्क्र
यीभूतंद्रव्यंआचार्यायदातुमहमुत्सृज्ये ॥ पीठदानं श्रेयोग्रहणंचकृत्वा ॥ आचार्यादिभ्यःब्राह्मणेभ्यःदक्षिणांदद्यात् ॥ देव
स्यत्वेत्यादिमंत्रेणसपत्नीकयजमानमभिषिंचेत् ॥ ब्राह्मणभोजनसंकल्प्यभूयसींदत्वा ॥ यांतुदेवगच्छगच्छेत्यग्निंविसृज्य ॥
यस्यस्मृत्या० अनेनसग्रहमखबौधायनोक्तऋतुशांत्याख्येनकर्मणा० प्रीयतां ॥ ॥ इतिबौधायनोक्तऋतुशांतिप्रयोगः ॥

## ॥ ३० ॥ अथनक्षत्रदेवताः ॥

कृत्तिका—ॐ अग्निर्नः पातुकृत्तिकाः । नक्षत्रंदेवमिंद्रियं । इदमासांविचक्षणं । हविरासंजुहोतन । यस्यभांतिरश्मयोयस्य केतवः । यस्येमाविश्वाभुवनानिसर्वा । सकृत्तिकाभिरभिसंवसानः । अग्निर्नोदेवःसुवितेदधातु ॥१॥ रोहिणी—प्रजापतेरोहिणीवेतुपत्नी । विश्वरूपाबृहतीचित्रभानुः । सानोयज्ञस्यसुवितेदधातु । यथाजीवेमशरदःसवीराः । रोहिणीदेव्युदगात्पुरस्तात् ॥ विश्वारूपाणिप्रतिमोदमाना । प्रजापतिꣳहविषावर्द्धयंती । प्रियादेवानामुपयातुयज्ञं ॥ २ ॥ मृग—सोमोराजामृगशीर्षेणआगन् । शिवंनक्षत्रंप्रियमस्यधाम । आप्यायमानोबहुधाजनेषु । रेतःप्रजांयजमानेदधातु । यत्तेनक्षत्रंमृगशीर्षमस्ति । प्रियꣳराजन्प्रियतमंप्रियाणां । तस्मैतेसोमहविषाविधेम । शन्नएधिद्विपदेशंचतुष्पदे ॥ ३ ॥ आर्द्रा—आर्द्रयारुद्रः प्रथमानएति । श्रेष्ठोदेवानांपतिरघ्नियानां । नक्षत्रमस्यहविषाविधेम । मानःप्रजाꣳरीरिषन्मोतवीरान् । हेतीरुद्रस्यपरिणोवृणक्तु ॥ आर्द्रानक्षत्रंजुषताꣳहविर्नः । प्रमुंचमानौदुरितानिविश्वा । अपाघशꣳसंनुदतामरातिं ॥ ४ ॥ पुनर्वसु—पुनर्नोदेव्यदितिस्पृणोतु । पुनर्वसूनःपुनरेतांयज्ञं । पुनर्नोदेवाअभियंतुसर्वे । पुनःपुनर्वोहविषायजामः । एवानदेव्यदितिरनर्वा । विश्वस्यभर्त्रीजगतःप्रतिष्ठा । पुनर्वसूहविषावर्धयंती ॥ प्रियंदेवानामप्येतुपाथः ॥ ५ ॥ पुष्य—बृहस्पतिःप्रथमंजायमानः । तिष्यंनक्षत्रमभिसंबभूव । श्रेष्ठोदेवानांपृतनासुजिष्णुः । दिशोनुसर्वाअभयंनोअस्तु । तिष्यःपुरस्तादुतमध्यतोनः । बृहस्पतिर्नःपरिपातुपश्चात् । बाधेतांद्वेषोअभयंकृणुतां । सुवीर्यस्यपतयःस्याम ॥ ६ ॥ आश्लेषा—इदꣳसर्पेभ्योहविरस्तुजुष्टं ।

आश्रेषायेषामनुयंतिचेतः । येअंतरिक्षंपृथिवींक्षियंति । तेनःसर्पासोहवमागमिष्ठाः । येरोचनेसूर्यस्यापिसर्पाः । येदिवंदेवी मनुसंचरंति । येषामाश्रेषाअनुयंतिकामं । तेभ्यःसर्पेभ्योमधुमज्जुहोमि ॥ ७ ॥ मघा—ॐ उपहूताःपितरोयेमघासु । मनो जवसःसुकृतःसुकृत्याः । तेनोनक्षत्रेहवमागमिष्ठाः । स्वधाभिर्यज्ञंप्रयतंजुषंतां । येअग्निदग्धायेनग्निदग्धाः । यैमुंलोकंपितरः क्षियंति । यांश्चविद्मयांउचनप्रविद्म । मघासुयज्ञंसुकृतंजुषंतां ॥ ८ ॥ पूर्वा—ॐ गवांपतिःफल्गुनीनामसित्वं । तदर्य मन्वरुणमित्रचारु । तंत्वावयंसनितारंसनीनां । जीवाजीवंतमुपसंविशेम । येनेमाविश्वाभुवनानिसंजिता । यस्यदेवा अनुसंयंतिचेतः । अर्यमाराजाजरस्तुविष्मान् । फल्गुनीनामृषभोरोरवीति ॥९॥ उत्तरा—ॐ श्रेष्ठोदेवानांभगवोभगासि । तत्त्वा विदुःफल्गुनीस्तस्यवित्तात् । अस्मभ्यंक्षत्रमजरंसुवीर्यं । गोमदश्ववदुपसंनुदेह । भगोहदाताभगइत्प्रदाता । भगोदेवीःफल्गुनी राविवेश । भगस्येत्तंप्रसवंगमेम । यत्रदेवैःसधमादंमदेम ॥१०॥ हस्त—ॐ आयातुदेवःसवितोपयातु । हिरण्ययेनसुवृतारथेन । वहन्हस्तंसुभगंविद्मनापसं । प्रयच्छंतंपपुरिंपुण्यमच्छ । हस्तःप्रयच्छत्वमृतंवसीयः । दक्षिणेनप्रतिगृभ्णीमएनत् । दातारमद्यस विताविदेय । योनोहस्तायप्रसुवातियज्ञं ॥११॥ चित्रा—त्वष्टानक्षत्रमभ्येतिचित्रां । सुभंससंयुवतिंरोचमानां । निवेशयन्न मृतान्मर्त्यांश्च । रूपाणिपिंशन्भुवनानिविश्वा । तंनस्त्वष्टातदुचित्राविचष्टां । तन्नक्षत्रंभूरिदाअस्तुमह्यं । तन्नःप्रजांवीर वतींसुनोतु । गोभिर्नोअश्वैःसमनक्तुयज्ञं ॥ १२ ॥ स्वाती—ॐ वायुर्नक्षत्रमभ्येतिनिष्ट्यां । तिग्मशृंगोवृषभोरोरुवाणः । समीरयन्भुवनामातरिश्वा । अपद्वेषांसिनुदतामरातीः । तन्नोवायुस्तदुनिष्ट्याशृणोतु । तंनक्षत्रंभूरिदाअस्तुमह्यं । तंनो देवासोअनुजानंतुकामं । यथातरेमदुरितानिविश्वा ॥ १३ ॥ विशाखा—ॐ दूरमस्मच्छत्रवोयंतुभीताः । तदिंद्राग्नीकृणुतां

तद्विशाखे । तन्नोदेवाअनुमदंतुयज्ञं । पश्चात्पुरस्तादभयंनोअस्तु । नक्षत्राणामधिपत्नीविशाखे । श्रेष्ठाविंद्राग्नीभुवनस्य गोपौ । विषूचःशत्रूनपबाधमानौ । अपक्षुधंनुदतामरातिं ॥ १४ ॥ अनुराधा—ऋध्यास्महव्यैर्नमसोपसद्य ॥ मित्रंदेवंमित्रधेयंनोअस्तु ॥ अनूराधान्हविषावर्धयंतः । शतंजीवेमशरदःसवीराः ॥ चित्रंनक्षत्रमुदगात्पुरस्तात् ॥ अनूराधासइतियद्वदंति ॥ तन्मित्रएतिपथिभिर्देवयानैः ॥ हिरण्ययैर्विततैरंतरिक्षे ॥ १५ ॥ ज्येष्ठा—इंद्रोज्येष्ठामनुनक्षत्रमेति ॥ यस्मिन्वृत्रंवृत्रतूर्येततार ॥ तस्मिन्वयममृतंदुहानाः ॥ क्षुधंतरेमदुरितिंदुरिष्टिं ॥ पुरंदरायवृषभायधृष्णवे ॥ अषाढायसहमानायमीढुषे ॥ इंद्रायज्येष्ठामधुमद्दुहाना ॥ उरुंकृणोतुयजमानायलोकं ॥ १६ ॥ मूलं—ॐ मूलंप्रजांवीरवतींविदेय ॥ पराच्येतुनिर्ऋतिःपराचा ॥ गोभिर्नक्षत्रंपशुभिःसमक्तं ॥ अहर्भूयाद्यजमानायमह्यं ॥ अहर्नोअद्यसुवितेदधातु ॥ मूलंनक्षत्रमितियद्वदंति ॥ पराचींवाचानिर्ऋतिंनुदामि । शिवंप्रजायैशिवमस्तुमह्यं ॥ पूर्वाषाढा—ॐ यादिव्याआपःपयसासंभूवुः ॥ याअंतरिक्षउतपार्थिवीर्याः ॥ यासामषाढाअनुयंतिकामं ॥ तानआपःशꣳस्योनाभवंतु ॥ याश्चकूप्यायाश्चनाद्याःसमुद्रियाः ॥ याश्चवैशंतीरुतप्रासचीर्याः ॥ यासामषाढामधुभक्षयंति ॥ तानआपःशꣳस्योनाभवंतु ॥ उत्तराषाढा—तन्नोविश्वेउपश्रृण्वंतुदेवाः ॥ तदषाढाअभिसंयंतुयज्ञं ॥ तन्नक्षत्रंप्रथतांपशुभ्यः ॥ कृषिर्वृष्टिर्यजमानायकल्पतां ॥ शुभ्राःकन्यायुवतयःसुपेशसः ॥ कर्मकृतःसुकृतोवीर्यावतीः ॥ विश्वान्देवान्हविषावर्धयंतीः ॥ अषाढाःकाममुपयांतुयज्ञं ॥ अभिजित्—ॐ यस्मिन्ब्रह्माभ्यजयत्सर्वमेतत् ॥ अमुंचलोकमिदमूचसर्वं ॥ तन्नोनक्षत्रमभिजिद्विजित्य ॥ श्रियंदधात्वहृणीयमानं ॥ उभौलोकौब्रह्मणासंजितेमौ ॥ तन्नोनक्षत्रमभिजिद्विचष्टां ॥ तस्मिन्वयंपृतनाःसंजयेम ॥ तन्नोदेवासोअनुजानंतुकामं ॥ श्रवण—ॐ शृण्वंतिश्रोणा

ममृतस्यगोपां ॥ पुण्यामस्याउपश्शृणोमिवाचं ॥ महींदेवींविष्णुपत्नीमजूर्यां ॥ प्रतीचीमेनाꣳहविषायजामः ॥ त्रेधाविष्णु
रुरुगायोविचक्रमे ॥ महींदिवंपृथिवीमंतरिक्षं ॥ तच्छ्रोणैतिश्रवइच्छमाना ॥ पुण्यꣳश्लोकंयजमानायकृण्वती ॥ धनिष्ठा——
ॐ अष्टौदेवावसवःसोम्यासः ॥ चतस्रोदेवीरजराःश्रविष्ठाः ॥ तेयज्ञंपांतुरजसःपरस्तात् ॥ संवत्सरीणममृतꣳस्वस्ति ॥
यज्ञंनःपांतुवसवःपुरस्तात् ॥ दक्षिणतोभियंतुश्रविष्ठाः ॥ पुण्यंनक्षत्रमभिसंविशाम ॥ मानोअरातिरघशꣳसागन् ॥ शतता
रका—क्षत्रस्यराजावरुणोधिराजः ॥ नक्षत्राणाꣳशतभिषग्वसिष्ठः ॥ तौदेवेभ्यःकृणुतोदीर्घमायुः ॥ शतꣳसहस्राभेषजा
निधत्तः ॥ यज्ञंनोराजावरुणउपयातु ॥ तन्नोविश्वेअभिसंयंतुदेवाः ॥ तन्नोनक्षत्रꣳशतभिषग्जुषाणं ॥ दीर्घमायुःप्रतिरद्भे
षजानि ॥ पूर्वाभाद्रपदा—ॐ अजएकपादुदगात्पुरस्तात् ॥ विश्वाभूतानिप्रतिमोदमानः ॥ तस्यदेवाःप्रसवंयंतिसर्वे ॥
प्रोष्ठपदासोअमृतस्यगोपाः ॥ विभ्राजमानःसमिधानउग्रः ॥ आंतरिक्षमरुहदगंद्यां ॥ तꣳसूर्यंदेवमजमेकपादं ॥ प्रोष्ठपदा
सोअनुयंतिसर्वे ॥ उत्तराभाद्रपदा—अहिर्बुध्नियःप्रथमानएति ॥ श्रेष्ठोदेवानामुतमानुषाणां ॥ तंब्राह्मणाःसोमपाःसो
म्यासः ॥ प्रोष्ठपदासोअभिरक्षंतिसर्वे ॥ चत्वारएकमभिकर्मदेवाः ॥ प्रोष्ठपदासइतियान्वदंति ॥ तेबुध्नियंपरिषद्यꣳस्तुवंतः ॥
अहिꣳरक्षंतिनमसोपसद्य ॥ रेवती——ॐ पूषारेवत्यन्वेतिपंथां ॥ पुष्टिपतीपशुपावाजबस्त्यौ ॥ इमानिहव्याप्रयताजुषाणा ॥
सुगैर्नोयानैरुपयातांयज्ञं ॥ क्षुद्रान्पशून्रक्षतुरेवतीनः ॥ गावोनोअश्वाꣳअन्वेतुपूषा ॥ अन्नꣳरक्षंतौबहुधाविरूपं ॥ वाजꣳस
नुतांयजमानाययज्ञं ॥ अश्विनी——तदश्विनावश्वयुजोपयातां ॥ शुभंगमिष्ठौसुयमेभिरश्वैः ॥ स्वंनक्षत्रꣳहविषायजंतौ ॥
मध्वासंपृक्तौयजुषासमक्तौ ॥ यौदेवानांभिषजौहव्यवाहौ ॥ विश्वस्यदूतावमृतस्यगोपौ ॥ तौनक्षत्रंजुजुषाणोपयातां ॥ नमो

श्विभ्यांकृणुमोश्वयुग्भ्यां ॥ भरणी——ॐ अपपाप्मानंभरणीर्भरंतु ॥ तद्यमोराजाभगवान्विचष्टां ॥ लोकस्यराजामहतोमहान्हि ॥ सुगंनःपंथामभयंकृणोतु ॥ यस्मिन्नक्षत्रेयमएतिराजा ॥ यस्मिन्नेनमभ्यषिंचंतदेवाः ॥ तदस्यचित्रंहविषायजाम ॥ अपपाप्मानंभरणीर्भरंतु ॥ ॥ इतिनक्षत्रदेवतामंत्राः ॥ ॥ ॥ ॥ ॥

३१ नक्षत्रदेवता——अग्निःप्रजापतिःसोमोरुद्रोदितिर्बृहस्पतिः ॥ सर्पाश्चपितरश्चैवभगश्चैवार्यमापिच ॥ सवितात्वष्टाथवायुश्चेंद्राग्नीमित्रएवच ॥ इंद्रोनिर्ऋतिरापोवैविश्वेदेवास्तथैवच ॥ विष्णुर्वसवोवरुणोजएकपात्तथैवच ॥ अहिर्बुध्न्यस्तथापूषाश्विनौयमएवच । नक्षत्रदेवताएताएताभिर्यज्ञकर्मणि ॥ ॥ ॥ ॥

## ॥ ३२ ॥ अथगर्भाधानं ॥

श्रीः ॥ ऋतुस्नातायांभार्यायांशुभेहनिदंपतीमंगलस्नातौभूत्वास्वदक्षिणतःपत्नींभद्रासनेउपविश्य ॥ आचम्यप्राणानायम्यदेशकालौसंकीर्त्य ॥ इमांपत्नींगर्भाधानेनकर्मणासंस्करिष्ये ॥ तत्रादौनिर्विघ्नतासिद्ध्यर्थंगणपतिपूजनंस्वस्तिपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धंचकरिष्ये ॥ उक्तरीत्याकुर्यात् ॥ पत्युन्वारब्धःसन्मंत्रान्पठेत् ॥ ॐ आरोहोरुमुपबर्हस्वबाहुंपरिष्वजायांसुमनस्यमानः ॥ तस्यांपुष्यतंमिथुनौसयोनीबह्वींप्रजांजनयंतीसरेतसा ॥ आर्द्रयारण्यायत्रामंथत्पुरुषंपुरुषेणचक्रः ॥ तदेतौमिथुनौसयोनीप्रजयामृतेनेहगच्छतं ॥ अहंगर्भमदधामोषधीष्वहंविश्वेषुभुवनेष्वंतः ॥ अहंप्रजाअजनयन्पितृणामहंजनि

१ ततोरात्रौरत्यर्थंसुवस्त्रांस्वलंकृतांसुगंधांतांबूलादिनावासितवक्त्रांस्वशय्यामारूढांस्वयमपितादृशोभूत्वा ॥

भ्योअपरीषुपुत्रान् ॥ पुत्रिणेमाकुमारिणाविश्वमायुर्व्यश्नुतं ॥ उभाहिरण्यपेशसावीतिहोत्राकृतद्वसु ॥ दशस्यंत्वामृतायकं ॥ शमूधोरोमशꣳहथोदेवेषुकृणुतोदुवः ॥ ऋतुस्नातामृतुसमावेशनेजपेत् ॥ ॐ विष्णुर्योनिंकल्पयतुत्वष्टारूपाणिपिꣳशतु ॥ आसिंचतुप्रजापतिर्धातागर्भंदधातुते ॥ गर्भंधेहिसिनीवालिगर्भंधेहिसरस्वति ॥ गर्भंतेअश्विनौदेवावाधत्तांपुष्करस्रजा ॥ हिरण्ययीअरणीयंनिर्मंथतोअश्विना ॥ तंतेगर्भंहवामहेदशमेमासिसूतवे ॥ यथेयंपृथिवीमहीतिष्ठंतीगर्भमादधे ॥ एवंत्वंगर्भमाधत्स्वदशमेमासिसूतवे ॥ यथापृथिव्यग्निगर्भाद्यौर्यथेंद्रेणगर्भिणी ॥ वायुर्यथादिशांगर्भएवंगर्भंदधातुते ॥ विष्णोःश्रेष्ठेन रूपेणास्यांनार्यांगवीन्यां ॥ पुमाꣳसंगर्भमाधेहिदशमेमासिसूतवे ॥ नेजमेषपरापतसुपुत्रःपुनरापत ॥ अस्यैमेपुत्रकामायै गर्भमाधेहियःपुमान् ॥ यस्ययोनिंपतिरेतोगृहाणपुमान्पुत्रोधीयतांगर्भेअंतः ॥ तंमातादशमासोबिभर्तिसजायतांवीरतमः स्वानां ॥ आतेगर्भोयोनिमेतुपुमान्बाणइवेषुधिं ॥ आवीरोजायतांपुत्रस्तेदशमास्यः ॥ करोमितेप्राजापत्यमागर्भोयोनिमेतुते ॥ अनूनःपूर्णोजायतामश्लोणोपिशाचधीरः ॥ पुमाꣳस्तेपुत्रोनारितंपुमाननुजायतां ॥ तानिभद्राणिबीजान्यृषभाजनयंतिनौ ॥ यानिभद्राणिबीजान्यृषभाजनयंतिनः ॥ तैस्त्वंपुत्रान्विंदस्वसाप्रसूर्धेनुकाभव ॥ कामःसमृध्यतामह्यमपराजितमेवमे ॥ यंकामंकामयेदेवतन्मेवायोसमर्धय ॥ इत्येतैर्मंत्रैःपत्नीमभिमंत्र्य ॥ फलदानानिदत्वा ॥ ॐ याःफलिनी० ॐ अग्निस्तुविश्रवस्तमंतुविब्रह्माणमुत्तमं ॥ अतूर्तंश्रावयत्पतिंपुत्रंददातिदाशुषे ॥ ॐ मासिमासिपृष्ठान्युपयंतिमासिमास्यतिग्राह्यागृह्यंते ॥ मासिमास्येववीर्यंदधातिमासाप्रतिष्ठित्याउपरिष्टान्मासान्पृष्ठान्युपयंतितस्मादुपरिष्टादोषधयःफलंगृह्णंति ॥ इतिमंत्रेणफलं निधाय ॥ कृतस्य० ॥ इतिगर्भाधानं ॥ आशिषोवाचयित्वा ॥ ब्राह्मणभोजनंकृत्वाभूयसींदद्यात् ॥ ॥

## ॥ ३३ ॥ पुनःसंधानं ॥

श्रीः ॥ आचम्यप्राणानायम्यदेशकालौसंकीर्त्य ॥ ममाग्निविच्छिन्नदिनादारभ्यएतावत्कालपर्यंतंगृह्याग्नित्यागजन्यदोषपरिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थंप्रत्यब्दंप्राजापत्यात्मकंप्रायश्चित्तंप्रतिप्राजापत्यंयथाशक्तिगोनिष्क्रयीभूतंद्रव्यंप्रत्याम्नायद्वाराअहमाचरिष्ये ॥ तथाचलुप्तानांसायंप्रातरौपासनहोमानांतथादर्शपूर्णमासस्थालीपाकानांचव्रीह्याज्यनिष्क्रयीभूतंद्रव्यंब्राह्मणाय दातुमहमुत्सृज्ये ॥ तेनश्रीपापापहामहाविष्णुःप्रीयतां ॥ पुनराचम्य ॥ ममविच्छिन्नस्यौपासनाग्नेःपुनःसंधानंकरिष्ये ॥ तदंगभूतंगणपतिपूजनंस्वस्तिवाचनंस्थंडिलाद्यग्निप्रतिष्ठापनंचकरिष्ये ॥ गणपतिपूजनादिस्वस्तिवाचनांतंकृत्वा ॥ यत्राग्निस्थप्यतेतत्रप्रादेशमात्रंस्थंडिलंकल्पयित्वेत्यादिद्वंद्वन्यचिपात्राणिप्रयुनक्ति ॥ दर्व्याज्यस्थालीप्रोक्षणस्रुवाविति ॥ चत्वारिपात्राणासाद्य ॥ प्रोक्षणीसंस्काराद्याज्यसंस्कारांते ॥ अग्निंपरिषिच्य ॥ चतुर्गृहीतमाज्यं ॥ अयाश्चेतिव्याहृतिभिश्चद्वेआज्याहुती हुत्वा ॥ ॐ अयाश्चाग्नेस्य० जुँस्वाहा ॥ ॐ भूर्भुवःसुवःस्वाहा ॥ प्रजापतयइ० ॥ ॐ महाहविर्होता ॥ सत्यहविरध्वर्युः ॥ अच्युतपाजाअग्नीत् ॥ अच्युतमनाउपवक्ता ॥ अनाधृष्यश्चाप्रतिधृष्यश्चयज्ञस्याभिगरौ ॥ अयास्यउद्गाता ॥ वाचस्पतेहृद्विधेनामन् ॥ विधेमतेनाम ॥ विधेस्त्वमस्माकंनाम ॥ वाचस्पतिःसोममपात् ॥ मादैव्यस्तंतुश्छेदिमामनुष्यः ॥ नमोदिवे ॥ नमःपृथिव्यैस्वाहा ॥ अग्नयेवाचस्पतयइदं० ॥ ॐ मनोज्योतिर्जुषतामाज्यंविच्छिन्नयज्ञंसमिमंदधातु ॥ याइष्टाउषसोनिम्रुचश्चताःसंदधामिहविषाघृतेनस्वाहा ॥ उषसोनिम्रुग्भ्यइदं० ॥ ॐ यदस्मिन्यज्ञेंतरगाममंततःकर्मतोवा ॥ अनयाहुत्या

तच्छंमयामिसर्वंतृप्यंतुदेवाआवृधंतांघृतेनस्वाहा ॥ देवेभ्यइदं० ॥ ॐ स्वस्तिनइंद्रोवृद्धश्रवाःस्वस्तिनःपूषाविश्ववेदाः ॥ स्वस्तिनस्तार्क्ष्योअरिष्टनेमिः स्वस्तिनोबृहस्पतिर्दधातुःस्वाहा ॥ इंद्राये० ॥ ॐ त्रयस्त्रिꣳशत्तंतवोयेवितत्निरेयइमंयज्ञꣳ स्वधयाददंते ॥ तेषांछिन्नंप्रत्येतद्दधामिस्वाहाघर्मोदेवानाꣳअप्येतुस्वाहा ॥ त्रयस्त्रिꣳशत्तंतुभ्यइदं० ॥ ॐ तंतुंतन्वन्रजसो भानुमन्विहिज्योतिष्मतःपथोरक्षधियाकृतान् ॥ अनुल्बणंवयतजोगुवामपोमनुर्भवजनयादैव्यंजनꣳस्वाहा ॥ अग्नयेतंतुमतइदं० ॥ ॐ उद्बुध्यस्वाग्नेप्रतिजागृह्येनमिष्टापूर्तेसꣳसृजेथामयंच ॥ पुनःकृण्वꣳस्त्वापितरंयुवानमन्वाताꣳसीत्वयितंतुमेतꣳ स्वाहा ॥ अग्नयेतंतुमतइद० ॥ ॐ उदुत्तमंवरुणपाशमस्मदवाधमंविमध्यमꣳश्रथाय ॥ अथावयमादित्यव्रतेतवानागसोअदि तयेस्यामस्वाहा ॥ वरुणायेदं० ॥ ॐ उद्वयंतमसस्परिपश्यंतोज्योतिरुत्तरं ॥ देवंदेवत्रासूर्यमगन्मज्योतिरुत्तमꣳस्वाहा ॥ सूर्यायेदं० ॥ ॐ उदुत्यंजातवेदसंदेवंवहंतिकेतवः ॥ दृशेविश्वायसूर्यꣳस्वाहा ॥ सूर्यायेदं० ॥ ॐ चित्रंदेवानामुदगादनी कंचक्षुर्मित्रस्यवरुणस्याग्नेः ॥ आप्राद्यावापृथिवीअंतरिक्षꣳसूर्यआत्माजगतस्तस्थुषश्चस्वाहा ॥ सूर्यायेदं० ॥ ॐ अग्नेभ्याव र्तिन्नभिनआवर्तस्वायुषावर्चसासन्यामेधयाप्रजयाधनेनस्वाहा ॥ अग्नयेभ्यावर्तिनइ० ॥ ॐअग्नेअंगिरःशतंतेसंत्वावृतःसहस्रंत उपावृतः ॥ तासांपोषस्यपोषेणपुनर्नोनष्टमाकृधिःपुनर्नोरयिमाकृधिस्वाहा ॥ अग्नयेअंगिरसइदं० ॥ ॐ पुनरूर्जानिवर्तस्व पुनरग्नइषायुषा ॥ पुनर्नःपाहिविश्वतःस्वाहा ॥ अग्नयइदं० ॥ ॐ सहरय्यानिवर्तस्वाग्नेपिन्वस्वधारया ॥ विश्वप्स्नियावि श्वतस्परिस्वाहा ॥ अग्नयइदं० ॥ द्वादशवारमाज्यंगृहीत्वा ॥ ॐ सप्ततेअग्नेसमिधःसप्तजिह्वाःसप्तर्षयःसप्तधामप्रियाणि ॥

सप्तहोत्राःसप्तधात्वायजंतिसप्तयोनीरापृणस्वाघृतेनस्वाहा ॥ सप्तवतेऽग्नयइदं० ॥ अदितेऽन्वमꣳस्थाःइत्यादिपरिषेचनादिअग्निं संपूज्य० ॥ कर्मशेषंसमाप्य अनेनपुनःसंधानाख्येनकर्मणाभगवान्परमेश्वरःप्रीयतां ॥ ॥ इतिपुनःसंधानं ॥ ॥

॥ ३४ ॥ अथतंतुमतिस्थालीपाकः ॥ दर्भेष्वासीनोदर्भान्धारयमाणःपत्न्यासहआचम्यप्राणानायम्यदेशकालौसंकीर्त्य ॥ ममधर्मपत्नीसमेतस्यममोपात्तदुरितक्षयद्वाराश्रीपरमेश्वरप्रीत्यर्थंतंतुमतीस्थालीपाकेनयक्ष्ये ॥ तत्रतंतुमानग्निःप्रधानदेवता स्विष्टकृदंगदेवताव्रीहिमयचरुद्रव्येणसद्योयक्ष्ये ॥ विद्युदसीत्यपउपस्पृश्य ॥ व्रीहीन्त्रिःप्रक्षाल्यश्रपयित्वाऽभिघार्योदगु द्वास्य ॥ प्रतिष्ठितमभिघार्य ॥ अग्नींधनादिषट्पात्रप्रयोगाद्यग्निमुखांते ॥ अवदानधर्मेणावदायाभिघार्य ॥ ॐ अग्नयेतंतुम तेस्वाहा ॥ अग्नयेतंतुमतइदं० ॥ स्रुच्युपस्तीर्यउत्तरार्द्धात्सकृदवदायद्विरभिघार्यनहविःप्रत्यभिघारयति ॥ अग्नयेस्विष्टकृते स्वाहा ॥ अग्नयेस्विष्टकृतइदं० ॥ अग्नयेस्वा० अग्नइ० ॥ रुद्रायतंतिचरायस्वाहा ॥ रुद्रायतंतिचरायेदं० ॥ देव्र्यापरिधी ननक्तादिअनाज्ञातादिप्रायश्चित्तहोमंप्रणीताविमोकंकर्मशेषंसमाप्य ॥ वृष्टिरसीत्यपउपस्पृश्य ॥ उभयोर्ललाटेरक्षांविधाय ॥ मौनंकृत्वा ॥ सायमौपासनहोमंकृत्वा ॥ मौनंविसर्जयेत् ॥ ब्राह्मणेनसहभुंजीत ॥ ॥ इतितंतुमतीस्थालीपाकः ॥

॥ ३५ ॥ प्रकारांतरेणपुनःसंधानं ॥ सिंगाभट्टीग्रंथेअयंपुनःसंधानं ॥ यदाऔपासनाग्निरनुगच्छेत्तदाउक्तप्रकारेणप्रा

---

१ तूष्णींशूर्पेपवित्रेनिधाय । अग्नयेतंतुमतेवोजुष्टंनिर्वपामीतित्रिःतूष्णीचतुर्थं ॥ तथैवप्रोक्ष्यकृष्णाजिनउलूखलमुसलव्रीहीगृहीत्वा ॥ त्रिःकं डनं । त्रिःफलीकृतवान् । त्रिःप्रक्षाल्योदकंनिनीय ॥ इतिविश्वप्रकाशः ॥ २ जयाभ्यातान् समस्तराष्ट्रभृतादिकार्यंकेचित्मतं ॥

यश्चित्तंकृत्वा ॥ आचम्यप्राणानायम्यविच्छिन्नोपासनाग्नेःपुनःसंधानंकरिष्ये ॥ श्रोत्रियागारादग्निमाहृत्य ॥ स्थंडिलेविधिनाग्निंप्रतिष्ठाप्य ॥ परिस्तीर्य ॥ पूर्ववत्चतुःपात्रप्रयोगआज्यसंस्कारांतंकृत्वा ॥ परिषिच्य ॥ चतुर्गृहीतमाज्यं ॥ ॐ अयास्याग्ने० जु॑ष्स्वाहा ॥ अग्नयेअयसइदं० ॥ स्रुवेणाज्यमादायव्याहृतिर्हुत्वा ॥ ॐ भूर्भुवःसुवःस्वाहा ॥ प्रजापत० ॥ अग्निपरिषेचनादिकर्मशेषंसमाप्य ॥ ॥ इतिपुनःसंधानं ॥ ॥ ॥ ॥

॥ ३६ ॥ उपनयनविवाहयोःनष्टस्याग्न्युत्पत्तिः ॥ यद्युपनयनेविवाहेवात्रिरात्रात्पूर्वअग्न्यानुगतेअग्न्युत्पत्तिः ॥ आचम्यप्राणानायम्य० श्रीपरमेश्वरप्रीत्यर्थंममविवाहाग्ने(उपनयनाग्नेर्वा)नष्टस्ययथाशक्तिप्रायश्चित्तपूर्वकंपुनरुत्पत्तिंकरिष्ये ॥ अग्निनष्टप्रायश्चित्तार्थंगोमूल्यहिरण्यमाचार्यायदत्वा ॥ ॐ शन्नोदेवीरभिष्टयआपोभवंतुपीतये ॥ शंयोरभिस्रवंतुनः ॥ इतिभस्मनिअद्भिःप्रोक्ष्य ॥ अयंतेयोनिर्ऋत्वियोयतोजातोअरोचथाः ॥ तंजानन्नग्नआरोहाथानोवर्द्धयारयिं ॥ इतिमंत्रेणभस्मनिसमिधंप्रताप्यभस्मतिरस्यापउपस्पृश्य ॥ यत्राग्निस्थाप्यतेतिलौकिकाग्निंप्रतिष्ठाप्य ॥ ॐ आजुह्वानःसुप्रतीकःपुरस्तादग्नेस्वांयोनिमासीदसाध्या ॥ अस्मिन्त्सधस्थेअध्युत्तरस्मिन्विश्वेदेवायजमानश्चसीदत ॥ उद्बुध्यस्वाग्नेप्रतिजागृह्येनमिष्टापूर्तेसंसृजेथामयंच ॥ पुनःकृण्वंस्त्वापितरंयुवानमन्वातांसीत्वयितंतुमेतं ॥ इतिद्वाभ्यांसमिधंलौकिकानलेप्रहृत्य ॥ ॐ भूर्भुवःसुवः परिषेचनादिचतुःपात्रप्रयोगद्याज्यसंस्कारांतंकृत्वा ॥ चतुर्गृहीतमाज्यं ॥ ॐ अयाश्चा० स्वाहा ॥ अग्नयेअयसइदं० ॥ १ ॥ ॐ अग्निर्होता । अश्विनाध्वर्यू । त्वष्टाग्नीत् ॥ मित्रउपवक्ता । सोमःसोमस्यपुरोगाः ॥ शुक्रःशुक्रस्यपुरोगाः ॥ श्रातास्त्वइंद्रसोमाः । वातापेर्हवनश्रुतःस्वाहा ॥ अग्नयेसप्तहोत्रेदं० ॥ २ ॥ ॐ ब्राह्मणएकंहोता । सयज्ञः । समेददातुप्रजांपशून्पुष्टिं

यशः ॥ यशश्चमेभूयात्स्वाहा । एकहोत्रेदं० ॥ ३ ॥ ॐ अग्निर्द्विहोता ॥ सभर्ता । समेददातुप्रजांपशुंपुष्टिंयशः ॥ भर्ताच
मेभूयात्स्वाहा ॥ अग्नयेद्विहोत्रेदं० ॥ ४ ॥ ॐ पृथिवीत्रिहोता । सप्रतिष्ठा । समेददातुप्रजांपशून्पुष्टिंयशः ॥ प्रतिष्ठाचमे
भूयात्स्वाहा ॥ पृथिव्यैत्रिहोत्रेदं० ॥ ५ ॥ ॐ अंतरिक्षंचतुर्होता । सविष्ठा ॥ समेददातुप्रजांपशून्पुष्टिंयशः ॥ विष्ठाचमे
भूयात्स्वाहा ॥ अंतरिक्षायचतुर्होत्रेदं० ॥ ६ ॥ ॐ वायुःपंचहोता । सप्राणः ॥ समेददातुप्रजांपशून्पुष्टिंयशः ॥ प्राणश्चमेभूया
त्स्वाहा ॥ वायवेपंचहोत्रेदं० ॥ ७ ॥ ॐ चंद्रमाःषड्ढोता ॥ सऋतून्कल्पयाति । समेददातुप्रजांपशून्पुष्टिंयशः ॥ ऋतवश्चमे
कल्पंताꣳस्वाहा ॥ चंद्रमसेषड्ढोत्रेदं० ॥ ८ ॥ ॐ अन्नꣳसप्तहोता ॥ सप्राणस्यप्राणः । समेद० यशः । प्राणस्यचमेप्राणोभूया
त्स्वाहा ॥ अन्नायसप्तहोत्रेदं० ॥ ९ ॥ ॐ द्यौरष्टहोता । स्योनाधृष्यः । समेद० यशः ॥ अनाधृष्यश्चभूयासꣳस्वाहा । द्यौर
ष्टहोत्रेदं० ॥ १० ॥ ॐ आदित्योनवहोता । सतेजस्वी । समेद० यशः ॥ तेजस्वीचभूयासꣳस्वाहा ॥ आदित्यायनवहोत्रे०
॥ ११ ॥ ॐ प्रजापतिर्दशहोता ॥ सइदꣳसर्वं ॥ समेद० यशः ॥ सर्वंचमेभूयासꣳस्वाहा ॥ प्रजापतयेदशहोत्रेदं० ॥१२॥
ॐ मनोज्योतिर्जुषतामाज्यंविच्छिन्नंयज्ञꣳसमिमंदधातु ॥ याइष्टाउषसोनिम्रुचश्चताःसंदधामिहविषाघृतेनस्वाहा ॥ मनसेज्यो
तिषइदं० ॥१३॥ ॐ यन्मआत्मनोमिंदाभूदग्निस्तत्पुनराहार्जातवेदाविचर्षणिः ॥ पुनरग्निश्चक्षुरदात्पुनरिंद्रोबृहस्पतिःस्वाहा ॥
मिंदवतेग्नयेजातवेदसइदं० ॥१४॥ ॐ भूरग्नयेचपृथिव्यैचमहतेचस्वाहा ॥ अग्नयेपृथिव्यैमहतइदं० ॥१५॥ ॐ भुवोवायवे
चांतरिक्षायचमहतेचस्वाहा ॥ वायवेचांतरिक्षायचमहतइदं० ॥१६॥ ॐ सुवरादित्यायचदिवेचमहतेचस्वाहा ॥ आदित्या
यदिवेमहतइदं० ॥ १७ ॥ ॐ भूर्भुवःसुवश्चंद्रमसेचनक्षत्रेभ्यश्चदिग्भ्यश्चमहतेचस्वाहा ॥ चंद्रमसेनक्षत्रेभ्योदिग्भ्योमहतइदं०

॥ १८ ॥ ॐ अनाज्ञातं० तथ॒ꣳस्वाहा ॥ अग्नयइदं० ॥ ॐ पुरुषसं० तथ॒ꣳस्वाहा ॥ अग्नयइदं० ॥ ॐ यत्पाकत्रा० ति स्वाहा ॥ अग्नयइदं० ॥ ॐ भूस्वाहा । अग्नयइदं० ॥ ॐ भुवःस्वाहा । वायवइदं० ॥ ॐꣳसुवःस्वाहा । सूर्यायेदं० ॥ ॐ भूर्भुवःसुवःस्वाहा । प्रजापतयइदं० ॥ ॐ इमंमेवरुणश्रुधी० चकेस्वाहा । वरुणायेदं० ॥ ॐ तत्त्वायामिब्र० षीःस्वाहा ॥ वरुणायेदं० ॥ ॐ यच्चिद्धितेविशोयथाप्रदेववरुणव्रतं ॥ मिनीमसिद्यविद्यविस्वाहा ॥ वरुणा० ॥ ॐ यत्किंचेदंवरुणदैव्ये जनेभिद्रोहंमनुष्यांश्चरामसि ॥ अचित्तीयत्तवधर्मायुयोपिममानस्तस्मादेनसोदेवरीरिषःस्वाहा ॥ वरुणा० ॥ ॐ त्रयस्त्रिꣳशत्तंतवोयेवितत्निरे ॥ यइमंयज्ञꣳस्वधयाददंतेतेषांछिन्नंप्रत्येतद्धामिस्वाहाघर्मोदेवानाꣳअप्येतुस्वाहा ॥ अग्नयेतंतुमत इदं० ॥ ॐ तंतुंतन्वन्रजसोभानुमन्विहिज्योतिष्मतःपथोरक्षधियाकृतान् ॥ अनुल्बणंवयतजोगुवामपोमनुर्भवजनयादैव्यं जनꣳस्वाहा ॥ अग्नयेतंतुमतइदं० ॥ ॐ उद्बुध्यस्वाग्ने० मेतꣳस्वाहा ॥ अग्नयेतंतुमतइदं० ॥ अदितेन्वमꣳस्थाःइत्यादिप रिषेचनं ॥ अग्निंसंपूज्य ॥ विभूतिंधृत्वा ॥ यस्यस्मृत्या० अनेननष्टस्याग्नेःपुनःसंधानाख्येनकर्मणाभगवान्परमेश्वरःप्रीय तां ॥ ॥ इति उपनयनविवाहाग्नेर्नष्टस्यपुनःसंधानं ॥ ॥ ॥ ॥

## ॥ ३७ ॥ अथपुंसवनं ॥



श्रीः ॥ व्यक्तेगर्भेतृतीयेमासिशुभेदिनेपुंसवनंषष्ठाष्टमेमासेसीमंतेनसहवाकार्यम् ॥ दंपतीमंगलस्नातौभूत्वा ॥ आचम्यप्रा णानायम्यदेशकालौसंकीर्त्य ॥ ममधर्मपत्न्याःप्रथमगर्भसंस्कारद्वारासर्वगर्भसंस्कारार्थंपुꣳसवनाख्यंकर्मक० ॥ तत्रादौनिर्वि

ष्ठतासिद्ध्यर्थंगणपतिपूजनंस्वस्तिपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धंचकरिष्ये ॥ उक्तरीत्याकुर्यात् ॥ पुंसवनांगत्वेनो भयोः रक्षार्थंरक्षाबंधनंकरिष्ये ॥ बृहत्सामेतिमंत्रेणविश्वेत्तातेतिमंत्रेणदंपतीकंकणौधारयेतां ॥ औपासनाग्निंप्रतिष्ठाप्य ॥ परिषिच्यचत्वारिश्रृंगेतिध्यात्वा ॥ फलसहितवटशाखाद्दषदुपलेनूतनवस्त्रंचसकृत्प्रयुंज्य ॥ दक्षिणोत्तरैरुत्तराधरैःप्रागुदगग्रेति आज्यभागांतंकृत्वा ॥ चतुर्गृहीतंस्रुच्याज्यमादाय ॥ ॐ धातादंदातुनोरयिमीशानोजगतस्पतिः ॥ सनःपूर्णेनवावनत्स्वाहा ॥ धात्रेदं० ॥ धाताप्रजायाउतरायईशेधातेदंविश्वंभुवनंजजान ॥ धातापुत्रंयजमानायदातातस्माउहव्यंघृतवद्विधेमस्वाहा ॥ धात्रेदं० ॥ धातादंदातुनोरयिंप्राचींजीवातुमक्षितां ॥ वयंदेवस्यधीमहिसुमतिंसत्यराधसःस्वाहा ॥ धात्रेदं० ॥ ॐ धाता ददातुदाशुषेवसूनिप्रजाकामायमीढुषेदुरोणे ॥ तस्मैदेवाअमृताःसंव्ययंतविश्वेदेवासोअदितिःसजोषाःस्वाहा ॥ धात्रे० ॥ यस्त्वाहृदाकीरिणामन्यमानोमर्त्यंमर्त्योजोहवीमि ॥ जातवेदोयशोअस्मासुधेहिप्रजाभिरग्नेअमृतत्वमश्यांस्वाहा ॥ अग्नये जातवेदसइ० ॥ ॐ यस्मैत्वंसुकृतेजातवेदउलोकमग्नेकृणवःस्योनं ॥ अश्विनंसपुत्रिणंवीरवंतंगोमंतंरयिंनशतेस्वस्तिस्वाहा ॥ अग्नयेजातवेदसइ० ॥ ॐ त्वेसुपुत्रशवसोवृत्रन्कामकातयः ॥ नत्वामिंद्रातिरिच्यतेस्वाहा ॥ इंद्रायेदं० ॥ ॐ उक्थउक्थे सोमइंद्रंममादनीथेनीथेमघवानंसुतासः ॥ यदींसबाधःपितरन्नपुत्राःसमानदक्षाअवसेहवंतेस्वाहा ॥ इंद्रायेदं० ॥ इत्यष्टा वाज्याहुतीर्हुत्वा ॥ समित्सन्नहनंजयादिसमस्तराष्ट्रभृतः अनाज्ञातादिप्रायश्चित्तहोमसदसिसन्मेत्यादिब्रह्मविसर्जनांते ॥ फल

---

१ विवाहमौंजीस्नानेषुपुंससीमंतयोरपि ॥ शताभिषेकेचैतेपुशरबंधोविधीयते ॥ (कंकणबंधनं) ॥ २ दर्व्यापरिधीननक्तीत्यादिपरिधि प्रहरणंसर्वकार्यं इतिविश्वप्रकाशः ॥

सहितवटशाखांपेषयित्वावस्त्रेनिधाय ॥ अंगुष्ठतर्जनीभ्यांगृहीत्वा ॥ अग्नेःपश्चात्पत्नीमुत्तानमुखींकृत्वापुंसवनमसीत्यनेन यजुषापत्नीदक्षिणनासिकाछिद्रेरसंनिनयति ॥ तंरसंगर्भपर्यंतंगिरति ॥ आचम्य ॥ कृतस्य० ब्राह्मणान्भोजयित्वाद क्षिणांदत्वाआशिषोवाचयित्वा ॥ ॥ इतिपुंसवनं ॥ ॥ ॥ ॥ ॥

## ॥ ३८ ॥ अथसीमंतोन्नयनं ॥

श्रीः ॥ गर्भोत्पत्तिप्रभृतिषष्ठाष्टमेमासिसीमंतोन्नयनंकुर्यात् ॥ शुभेह्निदंपतीमंगलस्नातौभूत्वा ॥ आचम्यप्राणानायम्यमम धर्मपत्न्याःप्रथमगर्भसंस्कारद्वारासर्वगर्भसंस्कारार्थंसीमंताख्यंकर्मकरिष्ये ॥ तत्रादौनिर्विघ्नतासिद्ध्यर्थंगणपतिपूजनंस्वस्तिपु ण्याहवाचनंमातृकापूजनंनांदीश्राद्धंचक० ॥ उक्तरीत्याकुर्यात् ॥ विधिवत्उभौकंकणौधारयेतां ॥ औपासनाग्निंप्रतिष्ठाप्य ॥ परिषेचनादिषट्पात्राणिप्रयुंज्य ॥ विरूढयवमालिकाशललीऔदुंबरशाखादर्भपिंजूलांश्चप्रयुज्याज्यभागांते ॥ पत्न्याअन्वार ब्धायांधाताददातुनोरयीतिचतसृभिर्यस्त्वाहृदाकीरिणेतिचतसृभिःप्रतिमंत्रमष्टावाज्याहुतीर्हुत्वा ॥ जयादिब्रह्मविसर्जनांते॥ अग्नेःपश्चात्प्राङ्मुखींपत्नीमुपवेश्यस्वयंप्रत्यङ्मुखस्तिष्ठन् ॥ त्रयेण्याशलल्यात्रिभिर्दर्भपिंजूलैरौदुंबरशाखयाच ॐ भूर्भुवःसुव रोम् ॥ राकामहंसुहवांसुष्टुतीहुवेशृणोतुनःसुभगाबोधतुत्मना ॥ सीव्यत्वपःसूच्याच्छिद्यमानयाददातुवीरंशतदायमुक्थ्यं ॥ यास्तेराकेसुमतयःसुपेशसोयाभिर्ददासिदाशुषेवसूनि ॥ ताभिर्नोअद्यसुमनाउपागहिसहस्रपोषंसुभगेरराणा ॥ इतिमंत्रा भ्यांनासिकामारभ्यसीमंतपर्यंतंपत्नींशिरसोलेखामुद्वहतिप्रतीचीनंनिरस्यापउपस्पृश्य ॥ ततोवीणागाथिनौगायेतामितिसंप्रे

ष्यति ॥ यौगंधरिरेवनोराजेतिसाल्विरवादिषु ॥ विवृत्तचक्रआसीनास्तीरेणयमुनेतव ॥ सोमएवनोराजेत्याहुर्ब्राह्मणीःप्रजाः विवृत्तचक्रआसीनास्तीरेणासौ(गंगे)तव ॥ समीपनदीतीरेसतितस्यानामसंबुद्ध्यानिर्दिश्य ॥ अथपत्नीकंठेविरूढयवमालिकांनिधाय ॥ नक्षत्रोदयपर्यंतंपतिर्मौनीभूत्वास्थित्वा ॥ नक्षत्रोदयेसतिप्राचीमुदीचींवादिशमुपनिष्क्रम्यवत्समन्वारभ्य ॥ भूर्भुवःसुवरितिजपित्वावाचंविसृजेत् ॥ ब्राह्मणान्भोजयित्वाशिषोवाचयित्वा ॥ ॥ इतिसीमंतोन्नयनं ॥ ॥ ॥

## ॥ ३९ ॥ विष्णुबलिः ॥

श्रीः ॥ सीमंतानंतरंशुक्लदशम्यांद्वादश्यांश्रवणनक्षत्रेवाकर्तव्यः ॥ आचम्यप्राणानायम्यममधर्मपत्न्याःकुशलपूर्वकंगर्भरक्षणार्थंसर्वेषांकुशलार्थंचविष्णुबलिकर्मकरिष्ये ॥ तत्रादौगणपतिपूजनंस्वस्तिपुण्याहवाचनंकरिष्ये ॥ कुर्यात् ॥ पूर्वतःपीठंसंस्थाप्यतदुपरिनूतनवस्त्रंप्रसार्यतत्रप्रस्थपरिमिततंडुलान्निक्षिप्य ॥ तंडुलोपरिमहीद्यौरित्यादिविधिनाकलशंसंस्थाप्यतत्रसुवर्णनिर्मितांविष्णुप्रतिमांप्रतिष्ठाप्य ॥ गंधपुष्पाक्षतानिगृहीत्वा ॥ ॐ भूःपुरुषमावाहयामि ॥ ॐ भुवःपुरुषमावाहयामि ॥ ॐसुवःपुरुषमावाहयामि ॥ ॐ भूर्भुवःसुवःपुरुषमावाहयामिइत्यादिषोडशोपचारैःसंपूज्य ॥ पुरतःदर्भमयंकूर्चंनिधायततः गायत्र्याभिमंत्रितंताम्राघ्यर्पात्रंसोदकंसपवित्रंसुगंधपुष्पाक्षतंभूमौनिधाय ॥ ॐ इतिप्रणवेनआदित्यंदर्शयित्वा ॥ त्रीणिपदेतिपाद्यंदत्वा ॥ प्रणवेनार्घ्यंचदद्यात् ॥ मधुपर्कंचदद्यात् ॥ आपोहिष्ठाहिरण्यवर्णाःपावमानैर्मार्जयित्वा ॥ पात्रांतरेणगंधपुष्पाक्षतमिश्रितजलेनतर्पयति ॥ केशवंतर्पयामि॰दामोदरांतं ॥ एतैरेवनामभिःपूजयेत् ॥ युवंवस्त्राणीतिवस्त्रं ॥ इदंविष्णु

रितिगंधं ॥ तद्विष्णोरितिपुष्पाणि ॥ इरावतीत्यक्षताः ॥ गायत्र्याधूपं ॥ उद्दीप्यस्वेतिदीपं ॥ तद्विष्णोरितिनैवेद्यं ॥ भक्ष भोज्यतांबूलादिदत्वापुष्पांजलिंदद्यात् ॥ शर्करामिश्रितमन्नबलिंदद्यात् ॥ केशवइमंबलिंगृहाणगर्भरक्षांकुरुसर्वेषांकुशलंकुरु ॥ इतिद्वादशनामभिःदामोदरांतंबलिंदद्यात् ॥ अस्याःकुशलंकुरुगर्भरक्षांकुरु ॥ विष्णुस्तोत्रंपठित्वा ॥ व्याहृतिभिःउद्वासयेत् ॥ अनेनविष्णुबलिविधानेनभगवान्महाविष्णुःप्रीयतां ॥ नैवेद्यशेषंपत्नींप्राशयेत् ॥ साप्रत्यहंयावत्प्रसवंविष्णवेबलिमुद्धृत्यब्राह्मणायदत्वास्वयंभुंजीतब्राह्मणान्भोजयित्वाशिषोवाचयित्वा ॥ ॥ इतिविश्वप्रकाशोक्तविष्णुबलिविधानं ॥ ॥

## ॥ ४० ॥ जातकर्म ॥

श्रीः ॥ जातेपुत्रेपितुःस्नानंसचैलंतुविधीयते ॥ आचम्यप्राणानायम्यदेशकालौसंकीर्त्यअस्यकुमारस्यआयुष्याभिवृद्ध्यर्थंगार्भिकबैजिकएनोनिबर्हणार्थंबलपुष्टिप्रज्ञामेधासिद्ध्यर्थंजातकर्मणासंस्करिष्ये ॥ तदंगंगणपतिपूजनंस्वस्तिपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धंचकरिष्ये ॥ उक्तरीत्याकुर्यात् ॥ दिवस्परीत्यनुवाकेनकुमारमभिमंत्र्य ॥ ॐ दिवस्परिप्रथमंजज्ञेअग्निरस्मद्द्वितीयंपरिजातवेदाः ॥ तृतीयमप्सुनृमणाअजस्रमिंधानएनंजरतेस्वाधीः ॥ विद्मातेनामपरमंगुहायद्विद्मातमुत्संयतआजगंथ ॥ समुद्रेत्वानृमणाअप्स्वंतर्नृचक्षाईधेदिवोअग्नऊधन् ॥ तृतीयेत्वारजसितस्थिवांसमृतस्ययोनौमहिषाअहिन्वन् ॥ अक्रंददग्निस्तनयन्निवद्यौःक्षामारोरीहद्वीरुधःसमंजन् ॥ सद्योजज्ञानोविहिमिद्धोअख्यदारोदसीभानुनाभात्यंतः ॥ उशिक्पा



---

१ जातेकुमारेपितास्वकंठादेकंयज्ञोपवीतमुत्तार्यजातस्यकुमारस्यनाभौनिधायस्पृष्ट्वा ॥ २ अच्छिन्ननाभ्यांकर्तव्यंश्राद्धंवैपुत्रजन्मनि ॥

वक्रोअरतिःसुमेधामर्त्येष्वग्निरमृतोनिधायि ॥ इयर्तिधूममरुषंभरिभ्रदुच्छुक्रेणशोचिषाद्यामिनक्षन् ॥ विश्वस्यकेतुर्भुवनस्य गर्भआरोदसीअपृणाज्जायमानः ॥ वीडुंचिदद्रिमभिनत्परायंजनायदग्निमयजंतपंच ॥ श्रीणामुदारोधरुणोरयीणांमनीषाणां प्रार्पणःसोमगोपाः ॥ वसोःसूनःसहसोअप्सुराजाविभात्यग्रउषसामिधानः ॥ यस्तेअद्यकृणवद्भद्रशोचेपूपंदेवघृतवंतमग्ने ॥ प्रतन्नयप्रतरांवस्योअच्छाभिद्युम्नंदेवभक्तंयविष्ठ ॥ आतंभजसौश्रवसेष्वग्नउक्थउक्थआभजशस्यमाने ॥ प्रियःसूर्येप्रियोअग्ना भवात्युज्जातेनभिनदुज्जनित्वैः ॥ त्वामग्नेयजमानाअनुद्यून्विश्वावसूनिदधिरेवार्याणि ॥ त्वयासहद्रविणमिच्छमानाव्रजं गोमंतमुशिजोविवव्रुः ॥ दृशानोरुक्मउर्व्याव्यद्यौदुर्मर्षमायुःश्रियेरुचानः ॥ अग्निरमृतोअभवद्वयोभिर्यदेनंद्यौरजनयत्सुरेताः । इत्यनुवाकेनकुमारमभिमंत्र्य ॥ अस्मिन्नहमितियजुषांकेउपविश्य ॥ ॐ अस्मिन्नहꣳसहस्रंपुष्यंमेधमानास्वेवशे ॥ अंगादंगा दितिद्वाभ्यामभिमंत्र्य ॥ ॐ अंगादगात्संभवसिहृदयादधिजायसे ॥ आत्मावैपुत्रनामासिसजीवशरदःशतं ॥ ॐ अश्माभ वपरशुर्भवहिरण्यमस्तृतंभव ॥ पशूनांत्वाहिंकारेणाभिजिघ्राम्यसौ ॥ इत्यभिमंत्र्य ॥ एताभ्यांमंत्राभ्यांशिशोर्मूर्ध्न्यवघ्राय ॥ अंगादंगाअश्माभवइमौमंत्रौशिशोःदक्षिणकर्णेजपति ॥ जन्मनक्षत्रनामसंबुद्ध्यानिर्दिश्य ॥ मेधांतेदेवःसवितेतिघृतयुक्तंम धुसुवर्णेनसकृत्कुमारंपाययित्वा ॥ ॐ मेधांतेदेवःसवितामेधांदेवीसरस्वती ॥ मेधांतेअश्विनौदेवावाधत्तांपुष्करस्रजा ॥ त्वयिमेधांत्वयिप्रजांत्वय्यग्निस्तेजोदधातु ॥ त्वयिमेधांत्वयिप्रजांत्वयींद्रइंद्रियंदधातु ॥ त्वयिमेधांत्वयिप्रजांत्वयिसूर्योभ्रा जोदधातु ॥ क्षेत्रियैत्वाइतिपंचभिर्मंत्रैःकुमारंसकृत्स्नापयित्वा ॥ ॐ क्षेत्रियैत्वानिर्ऋत्यैत्वाद्रुहोमुंचामिवरुणस्यपाशात् ॥ अनागसंब्रह्मणेत्वाकरोमिशिवेतेद्यावापृथिवीउभेइमे ॥ शंतेअग्निःसहाद्भिरस्तुशंद्यावापृथिवीसहौषधीभिः ॥ शमंतरिक्षꣳस

हवातेनतेशंतेचतस्रःप्रदिशोभवंतु ॥ यादेवीश्चतस्रःप्रदिशोवातपत्नीरभिसूर्योविचष्टे ॥ तासांत्वाजरसआदधामिप्रयक्ष्मयतु निर्ऋतिंपराचैः ॥ अमोचियक्ष्मादुरितादवर्त्यैद्रुहःपाशांनिर्ऋत्यैचोदमोचि ॥ अहाअवर्तिमविदत्स्योनमप्यभूद्भद्रेसुकृतस्य लोके ॥ सूर्यमृतंतमसोग्राह्यायद्देवाअमुंचंनसृजन्व्येनसः ॥ एवमहमिमंक्षेत्रियाज्जामिशꣳसाद्द्रुहोमुंचामिवरुणस्यपाशात् ॥ भूःस्वाहाभुवःस्वाहासुवःस्वाहोꣳस्वाहा ॥ इतिकुमारंदधिमिश्रमाज्यंकांस्यपात्रेणसकृत्प्राशयित्वा ॥ शेषमद्भिःसꣳसृज्य ॥ मातेकुमारमितिमातुर्दक्षिणांकेआदाय ॥ ॐ मातेकुमारꣳरक्षोवधीन्माधेनुरत्याचारिणी ॥ प्रियाधनस्यभूयाएधमानास्वे गृहे ॥ अयंकुमारमितिमातुर्दक्षिणस्तनंप्राशयित्वा ॥ ॐ अयंकुमारोजरांधयतुदीर्घमायुः ॥ यस्मैत्वꣳस्तनंप्रप्यायायुर्वर्चो यशोबलं ॥ यद्भूमेर्हृदयंइतिकुमारंभूमौउपवेश्य ॥ ॐ यद्भूमेर्हृदयंदिविचंद्रमसिश्रितं ॥ तदुर्विपश्यंमाहंपौत्रमघꣳरुदं ॥ यत्तेसुशीमेहृदयेवेदाहंतप्रजापतौ ॥ वेदामतस्यतेवयंमाहंपौत्रमघꣳरुदं ॥ ॐ नामयतिनरुदतियत्रवयंवदामसियत्रचाभिमृ शामसि ॥ तत्रोपविष्टंकुमारंउपस्पृश्य ॥ ॐ आपःसुप्तेषुजाग्रतरक्षाꣳसिनिरितोनुदध्वं ॥ इतिकुमारशिरःसमीपेउदकपूर्ण कुंभंनिधाय ॥ यत्राग्निस्थाप्यतेतिअग्निंप्रतिष्ठाप्यपरिषिच्यअलंकृत्यपरिस्तीर्य ॥ फलीकरणमिश्रान्सर्षपांनंजलिनासकृदवदा यस्तिष्ठन्हुत्वा ॥ ॐ अयंकलिंपतयंत्वꣳश्वानमिवोद्बृढं ॥ अजांवाजिनामिवमरुतःपर्याधꣳस्वाहा ॥ मरुद्भ्यइदं० ॥ तच्छे षेण ॥ स्वाहामरुद्भ्यइ० ॥ स्वाहामरुद्भ्यइदं० ॥ इतिद्विराहुतीर्हुत्वा ॥ पूर्ववत्अंजलीनादाय ॥ ॐ शंडेरथःशंडिकेरउ लूखलः ॥ च्यवनोनश्यंतादितःस्वाहा ॥ पूर्ववत्त्रिवारं ॥ मरुद्भ्यइ० ॥ ॐ अयःशंडोमर्कउपवीरउलूखलः ॥ च्यवनोनश्यं तादितःस्वाहा ॥ मरुद्भ्यइदं० ॥ ॐ केशिनीश्वलोमिनीःखजायोचोपकाशिनीः ॥ अपेतनश्यतादितःस्वाहा ॥ मरुद्भ्यइदं० ॥

मिश्रवासमः कौबेरकारक्षोराजेनप्रेषिताः ॥ ग्रामꣳसंजानयोगच्छंतीच्छंतौपरिहाकृतान्स्वाहा ॥ मरुद्भ्यइदं० ॥ एतान्घ्नंतैता न्गृह्णीतेत्ययंब्रह्मणस्पुत्रः ॥ तानग्निःपर्यसरत्तानिंद्रस्तान्बृहस्पतिः ॥ तानाहंवेदब्राह्मणःप्रमृशतःकूटदंतान्विकेशालंबनस्त नात्स्वाहा ॥ मरुद्भ्यइदं० ॥ ॐ नक्तंचारिणउरस्पेशास्थूलहस्तान्कपालपान् ॥ पूर्वएषांपितेत्युच्चैःश्राव्यकर्णकः ॥ माताज घन्यासर्पतिग्रामेविधुरमिच्छंतीस्वाहा ॥ मरुद्भ्यइदं० ॥ निशीथचारिणीस्वसासंधिनाप्रेक्षतेकुलं ॥ यास्वपंतंबोधयंतितस्यै विजातायांमनः ॥ तासांत्वंकृष्णवर्त्मनेक्लोमानꣳहृदयंयकृत ॥ अग्नेअक्षीणिनिर्दहत्स्वाहा ॥ अग्नयइदं० ॥ पुनःअदितेन्वमꣳ स्थेतिपरिषिच्य ॥ अग्निंसंपूज्यकृतस्यभूयसींदद्यात् ॥ दशदिनपर्यंतंशांतिपाठंवाचयेत् ॥ ॥ इतिजातकर्म ॥ ॥

## ॥ ४१ ॥ अथषष्ठीपूजा ॥

श्रीः ॥ प्रथमंबहिरेवचतुष्कोणेकृसरादिनाक्षेत्रपालायबलिंदद्यात् ॥ तत्रमंत्रः ॥ क्षेत्रपालनमस्तुभ्यंसर्वशांतिफलप्रद ॥ बालस्यविघ्ननाशायगृह्णगृह्णबलिंमम ॥ इतिमंत्रेणबलिंदद्यात् ॥ हस्तौपादौप्रक्षाल्याचम्य प्राणानायम्य अद्येत्यादिममा भिनवजातकुमारस्यसूतिकायाश्चनैरुज्यपूर्वकदीर्घायुष्यकामनयाभगवत्याःश्रीषष्ठीमहादेव्याःगौर्यादिमातृणांचपूजांकरिष्ये॥ दीर्घस्वरेणषकारेणन्यासंकुर्यात् ॥ ॐ षांअंगुष्ठाभ्यांनमः ॥ ॐ षींतजनीभ्यां० । षूंमध्यमाभ्यां० । ॐ षैंअनामिकाभ्यां० । ॐ षौंकनिष्ठिकाभ्यां । ॐ षः करतलकरपृ० ॥ एवंहृदयादि ॥ अस्यांस्वर्णमय्यांमूर्तौषष्ठीदेव्यैनमःषष्ठीदेवीमावाहयामिइत्यादि प्रकारेणषष्ठीदेवीगौर्यादिमातृणांचषोडशोपचारैःपूजांकृत्वा ॥ पोलिकाफेनिकाभिश्चनैवेद्यंदद्यात् ॥ प्रार्थयेत् ॥ गौर्याःपुत्रो

यथास्कंदःशिशुःसंरक्षितस्त्वया ॥ तथाममाप्ययंबालोरक्ष्यतांषष्ठिकेनमः ॥ ॐ षष्ठीभट्टारिकायैसांगायैसपरिवारायैसायुधायै
सवाहनायैनमः ॥ कार्तिकेयमहाबाहोगौरीहृदयनंदन ॥ कुमारंरक्षभीतिभ्यःपाहिदेवनमोस्तुते ॥ शक्तिस्त्वंसर्वदेवानांलो
कानांहितकारिणी ॥ मातर्बलिमिमंरक्षमहाषष्ठिनमोस्तुते ॥ रुद्राणांरुद्ररूपेणमहाविघ्नविनाशिनी ॥ प्रसन्नेवरदेदेविस्वयंर
क्षस्वबालकं ॥ भूतदैत्यपिशाचेभ्योडाकिनीयोगिनीषुच ॥ मातेवरक्षमेपुत्रंश्वापदेपन्नगेषुच ॥ त्वमेववैष्णवीदेविब्रह्माणीच
व्यवस्थिता ॥ रुद्रशक्तिःसमाख्यातामहाषष्ठिनमोस्तुते ॥ ततोमंथांपूजयेत् ॥ मंथानत्वंहिगोलोकेदेवदेवेननिर्मितः ॥ पूजि
तश्चविधानेनसूतिरक्षांकुरुष्वमे ॥ खड्गंप्रार्थयेत् ॥ असिर्विशसनःखड्गस्तीक्ष्णपार्ष्णिर्दुरासदः ॥ पुत्रस्यविजयश्चैवधर्मपालन
मोस्तुते ॥ वंशाभिवृद्ध्यर्थंवैणवदंडपूजांकृत्वा ॥ सर्वमंगलमांगल्यगोविंदस्यकरेस्थित ॥ वंशवर्धयमेवंशंसदानंदनमोस्तुते ॥
माथुरंयद्बलंयच्चविष्णोरमिततेजसः ॥ हरस्ययद्बलंसर्वंतत्सर्वंपुत्रकेमम ॥ त्रैलोक्यवर्धनश्रीमान्सदाद्विजविवर्द्धन ॥ शांतिं
कुरुगदापाणेनारायणनमोस्तुते ॥ बालकंव्यजनेस्थाप्य ॥ देवतानांऋषीणांचभक्तानांभक्तवत्सले ॥ अर्पितंरक्षमेपुत्रंमहाष
ष्ठिनमोस्तुते ॥ जननीसर्वभूतानांबालकानांविशेषतः ॥ नारायणीस्वरूपेणपुत्रंमेरक्षसर्वदा ॥ भूतदैत्यपिशाचेभ्योडाकि
नीभ्यःशरोत्करैः ॥ सुतंमेस्वसुतंकृत्वारक्षरक्षवरानने ॥ एवंरक्षमहाषष्ठिसदात्वंविघ्ननाशिनी ॥ बालंसमातरंरक्षनित्यमंतः
कुटीस्थिता ॥ सर्वभूतहितेमातर्जगतामुपकारिणी ॥ सर्वतःषष्ठिरूपेणबालरक्षांकुरुष्वमे ॥ षष्ठीदेवीमहाभागेहिताहितवर
प्रदे ॥ त्वत्प्रसादादविघ्नेनचिरंजीवतुमेसुतः ॥ अस्मिंस्तुसूतिकागारेदेवीभिःपरिवारिता ॥ रक्षांकुरुमहाभागेसर्वोपद्रवना
शिनी ॥ अयंममकुलोत्पन्नोरक्षार्थंपादयोस्तव ॥ नीतोमातर्महाभागेचिरंजीवतुबालकः ॥ रूपंदेहिजयंदेहिभाग्यंभवतिदे

हिमे ॥ पुत्रान्देहिधनंदेहिसर्वान्कामांश्चदेहिमे ॥ ॥ ब्राह्मणेभ्यःशर्कराखंडपूगीफलतांबूलदक्षिणादिदत्वा ॥ इतिषष्ठीपूजा ॥

## ॥ ४२ ॥ नामकर्म ॥

श्रीः ॥ एकादशेद्वादशदिनेवानामकर्मकुर्यात् ॥ मातापितरौमंगलस्नातौभूत्वाभद्रासनेउपविश्य ॥ आचम्यप्राणानायम्य देशकालौसंकीर्त्य ॥ अस्यकुमारस्यआयुष्याभिवृद्ध्यर्थंलौकिकवैदिकव्यवहारसिद्ध्यर्थंनामकर्मणासंस्करिष्ये ॥ तदंगंगणपतिपूजनंस्वस्तिपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धंचकरिष्ये ॥ कुर्यात् ॥ विशालकांस्यपात्रेतंडुलान्पूरयित्वा ॥ कुलदेवतानामकुमारस्यजन्ममासनामनक्षत्रनामव्यवहारनामानिहिरण्येनलिखित्वा ॥ नामदेवताभ्योनमइतिसंपूज्य ॥ कुमारस्य दक्षिणकर्णेअमुकशर्मानामासीत्युक्त्वाशिरसिअक्षतान्क्षिपेत् ॥ अंगादंगादितिद्वाभ्यांपुत्रमभिमंत्र्य ॥ ॐ अंगादंगात्सं० यते ॥ वेदोवैपुत्रनामासिसजीवशरदःशतं ॥ अश्माभवपरशुर्भवहिरण्यमस्तृतंभव ॥ पशूनांत्वाहिंकारेणाभिजिघ्रामि ॥ अमुकशर्मन् ॥ कृतस्य०ब्राह्मणभोजनंभूयसींदत्वा ॥ ॥ ॥ ॥

॥ ४२ ॥ आशीर्मंत्राः ॥ ॐ अग्निरायुष्मान्त्सवनस्पतिभिरायुष्मान्तेनत्वायुषायुष्मंतंकरोमि ॥ सोमआयुष्मान्त्सओष

---

१ कृष्णोनंतोच्युतश्चक्रीवैकुंठोथजनार्दनः ॥ उपेंद्रोयज्ञपुरुषोवासुदेवस्तथाहरिः ॥ योगीशःपुंडरीकाक्षोमासनामान्यनुक्रमात् ॥ चैत्रादिक्रमः ॥ स्त्रीनामानि—श्रीःपद्माकमलालक्ष्मीःसीतासत्याचरुक्मिणी ॥ माधवीचेंदिरादेवीतुलसीजांबवत्यपि ॥ मार्गशीर्षक्रमः ॥

धीभिरायुष्मान्तेनत्वायुषायुष्मंतंकरोमि ॥ यज्ञआयुष्मान्त्सदक्षिणाभिरायुष्मान्तेनत्वायुषायुष्मंतंकरोमि ॥ ब्रह्मायुष्मत्त ब्राह्मणैरायुष्मत्तेनत्वायुषायुष्मंतंकरोमि ॥ देवाआयुष्मंतस्तेमृतेनायुष्मंतस्तेनत्वायुषायुष्मंतंकरोमि ॥ इतिपंचमंत्रान्पुत्रस्य दक्षिणेकर्णेजपेत् ॥ सर्वस्मादात्मनःसंभूतासिसजीवशरदःशतं ॥ इतिमभिमंत्रयते ॥ मातापित्रोःशिशोश्चत्रयाणांआयुष्या भिवृद्धिरस्त्वितिभवंतोब्रुवंतु ॥ मातापित्रोःशिशोश्चत्रयाणांआयुष्याभिरस्तु ॥ ॥ इतिनामकरणं ॥ ॥ ॥ ॥

## ॥ ४३ ॥ अथसूर्यचंद्रदर्शनं ॥

श्रीः ॥ अंगणेभूमिमुपलिप्यद्वादशारंसूर्यमंडलंषोडशारंचंद्रमंडलंचलिखित्वापंचवर्णैःपरिपूर्य ॥ सूर्यंचंद्रंचषोडशोपचारैःसं पूज्य ॥ पूरिकादिनैवेद्यंदत्वा ॥ कुमारमानीयसूर्यंदर्शयति ॥ ॐ उद्वयंतम० ॥ उदुत्यंजात० । चित्रंदेवाना० । आसत्येन रजसा० । तद्विष्णोःपरमं० । इतिपंचमंत्रान्नमस्कृत्य ॥ देवीःषडुर्वी० । माहांस्महि० । महतेक्षत्राय० । नवोनवोभ० । आप्यायस्व० । सोमोधेनुं० ॥ इतिषण्मंत्रैःचंद्रमसंनमस्कृत्य ॥ सूर्यचंद्रमंडलेप्रदक्षिणांकृत्वागृहंप्रविश्य ॥ ब्राह्मणेभ्योद क्षिणांदत्वा ॥ सुवासिनीभ्योवायनानिपोलिकादीनिदत्वा ॥ नमस्कृत्य ॥ रात्रौचंद्रंदर्शयित्वा ॥ इतिसूर्यचंद्र०विधिः ॥

## ॥ ४४ ॥ अथनिष्क्रमणं ॥

श्रीः ॥ चतुर्थेमासिनिष्क्रमणं ॥ शुक्लपक्षेशुभेह्निपितासभार्यःशिशुरभ्यंगस्नातः ॥ आचम्यप्राणानायम्यदेशकालौसं०

ममास्यकुमारस्यआयुष्याभिवृद्ध्यर्थंबलपुष्टिप्रज्ञामेधासिध्यर्थंनिष्क्रमणंकरिष्ये ॥ तदंगंगणपतिपूजनंपुण्याहवाचनंक० ॥ कुर्यात् ॥ स्वेष्टदेवतापूजादिकंविधाय नमस्कृत्य ॥ मंगलतूर्यघोषैःसहदेवालयंगंगादिनदीतीरेबंधुगृहाणामन्यतमस्थानंच गत्वामहोत्सवपूर्वकं ॥ उद्गातेवश० स्वस्तिनो० स्वस्तिनइं० इत्यादिमंत्रान्पठेत् ॥ बंधुवर्गादिकंनमस्कृत्य ॥ दत्तांकिंचिच्छकुनादिकंगृहीत्वागृहंपुनरागत्यआशिषोवाचयित्वा महोत्सवंकुर्यात् ॥ विप्रेभ्योन्नदानंभूयसींचदत्वा ॥ ॥ इतिनिष्क्रमणं ॥

## ॥ ४५ ॥ अथान्नप्राशनं ॥

श्रीः ॥ जन्मप्रभृतिषष्ठेमासि ॥ कुमारंदक्षिणतमातुरंकेउपवेश्य ॥ स्वयमुत्तरमासीनः ॥ आचम्यप्राणानायम्यदेशकालौ संकीर्त्य ॥ ममास्यकुमारस्यआयुष्याभिवृद्ध्यर्थंइमंकुमारंअमुकशर्माणंअन्नप्राशनेनकर्मणासꣳस्करिष्ये ॥ तदंगंगणपतिपूजनं स्वस्तिपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धंचकरिष्ये ॥ कुर्यात् ॥ अन्नप्राशनांगत्वेनरक्षाबंधनंक० ॥ बृहत्सामेतिमंत्रेण शिशोःदक्षिणकरेकंकणंबध्नीयात् ॥ दधिमधुघृतोदनमितिचतुष्टयंपृथगानीयकर्तास्वपुरतःसुवर्णरजतपात्रमध्ये ॥ दधिक्राव्णोइतिदधि । मधुवाताइतिमधु । शुक्रमसीतिघृतंनिक्षिप्य । ओदनमुद्धुवतेतिओदनंनिक्षिप्य ॥ ॐ प्रणवेनसंसृज्य ॥ ॐ भूरपांत्वोषधीनाꣳरसंप्राशयामि शिवास्तआपओषधयःसंत्वनमीवास्तआपओषधयःसंतुअमुकशर्मन् ॥ ॐ भुवोपांत्वौषधीनाꣳरसंप्राशयामि ॥ शिवास्तआप० अमुकशर्मन् ॥ ॐ स्वरपांत्वौषधीनाꣳरसंप्राशयामि । शिवास्तआप० अमुकशर्मन् ॥ ॐ भूर्भुवःसुवरपांत्वौषधीनाꣳरसंप्राशयामि । शिवास्तआप० अमुकशर्मन् ॥ इतिमंत्रैःसकृत्कुमारंप्राशयित्वा ॥

१ भूरपांत्वोषधीइत्यादिचतुर्मंत्रैःचतुर्वारंप्राशयेत् ॥ विश्वप्रकाशः ॥

हस्तमुखप्रक्षालनं ॥ पुस्तकादिस्पर्शयेत् ॥ कृतस्य० ब्राह्मणान्भोजयित्वाशिशोवाचयित्वा ॥ भूयसींदद्यात ॥ ॥



## ॥ ४६ ॥ पाहित्रयोदशहोमः ॥

श्रीः ॥ यद्येतानिगर्भाधानादिकर्माणिअज्ञानात्आलस्याद्वातत्तत्कालेनकृतानि । गृह्यप्रायश्चित्तेचौलादर्वाचीनसंस्कारकर्मलोपसंध्यावंदनादिनित्यकर्मअनुष्ठानकर्मलोपेप्रायश्चित्तार्थपाहित्रयोदशहोमंकुर्यात् ॥ आचम्यप्राणानायम्यदेशकालौसंकीर्त्य ॥ अमुककर्मलोपनिमित्तंप्रायश्चित्तार्थंपाहित्रयोदशहोमंकरिष्ये ॥ यत्राग्निस्थाप्यतेतिअग्निंप्रतिष्ठाप्य ॥ चतुःपात्रप्रयोगःदर्व्याज्यस्थाल्यौप्रोक्षणस्रुवाविति ॥ चत्वारिपात्राणिप्रयुंज्याज्यसंस्कारांते ॥ चतुर्गृहीतमाज्यं ॥ ॐ भूरग्नयेचपृथिव्यैचमहतेचस्वाहा ॥ अग्नयेपृथिव्यैमहतइदं० ॥ १ ॥ ॐ भुवोवायवेचांतरिक्षायचमहतेचस्वाहा ॥ वायवेचांतरिक्षायचमहतइदं० ॥ २ ॥ ॐ सुवरादित्यायचदिवेचमहतेचस्वाहा ॥ आदित्यायदिवेमहतइदं० ॥ ॐ भूर्भुवःसुवश्चंद्रमसेचनक्षत्रेभ्यश्चदिग्भ्यश्चमहतेचस्वाहा ॥ चंद्रमसेनक्षत्रेभ्योदिग्भ्योमहतइदं० ॥ ॐ पाहिनोअग्नएनसेस्वाहा ॥ पाहिनोअग्नएनसइदं० ॥ ॐ पाहिनोविश्ववेदसेस्वाहा ॥ विश्ववेदसइदं० ॥ ॐ यज्ञंपाहिविभावसोःस्वाहा ॥ विभावसवइदं० ॥ ॐ सर्वंपाहिशतक्रतोस्वाहा ॥ शतक्रतवइदं० ॥ ॐ पाहिनोअग्नएकया ॥ पाह्युतद्वितीयया ॥ पाह्यूर्जंतृतीयया ॥ पाहिगीर्भिश्चतसृभिर्वसोस्वाहा ॥ वसवइदं० ॥ ॐ पुनरूर्जानिवर्तस्वपुनरग्नइषायुषा ॥ पुनर्नःपाहिविश्वतःस्वाहा ॥ अग्नयइदं० ॥ ॐ सहरय्यानिवर्तस्वाग्नेपिन्वस्वधारया ॥ विश्वप्स्नियाविश्वतस्परिस्वाहा ॥ अग्नयइदं० ॥ ॐ भूरग्नयेचपृथिव्यैचमहतेचस्वाहा ॥ अग्नयेपृथिव्यैम

हतइदं० ॥ ॐ भुर्वोवायवेंचांतरिक्षायचमहतेचस्वाहा ॥ वायवेचातरिक्षायमहतइदं० ॥ ॐ सुवरादित्यायंचदिवेचमहतेच स्वाहा ॥ आदित्यायदिवेमहतइदं० ॥ ॐ भूर्भुवःसुवश्चंद्रमसेचनक्षत्रेभ्यश्चदिग्भ्यश्चमहतेचस्वाहा ॥ चंद्रमसेनक्षत्रेभ्योदि ग्भ्योमहतइदं० ॥ अदितेन्वमꣳस्थेतिपरिषिच्य ॥ अग्निंसंपूज्य ॥ बृहत्सामेतिरक्षांधृत्वा ॥ यस्यस्मृत्या० अनेनपाहित्रयो दशहोमाख्येनकर्मणाभगवान्परमेश्वरःप्रीयतां ॥ ॥ इतिपाहित्रयोदशहोमः ॥ ॥ ॥ ॥

## ॥ ४७ ॥ अथचौलम्[१] ॥

श्रीः ॥ जन्मप्रभृतितृतीयेवर्षेचौलंउपनयनेसहवाकुर्यात् ॥ कुमारंमातुर्दक्षिणतउपवेश्यस्वयमुत्तरमासीनः ॥ आचम्यप्राणा नायम्यदेशकालौसंकीर्त्य ॥ ममास्यकुमारस्यआयुष्याभिवृध्यर्थंकुसुमगर्भत्वसिध्यर्थंचौलेनकर्मणासꣳस्करिष्ये ॥ तत्रादौनिर्वि घ्नतासिध्यर्थंगणपतिपूजनंस्वस्तिपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धंअंकुरारोपणंइडाहवाचनंचकरिष्ये ॥ उक्तरीत्याकु र्यात् ॥ चूडाकर्मांगत्वेनकुमारस्यरक्षाबंधनंक० ॥ बृहत्सामेतिमंत्रेणविधिवत्कंकणंबध्नीयात् ॥ यवकुशजलद्व्यशलालुग्ल प्सदर्भपुंजीलान्शकृच्छलल्यादीन्पात्राणामुत्तरतोनिधाय ॥ आचम्यप्राणानायम्यअस्यकुमारस्यायुष्याभिवृध्यर्थंचूडाकर्म होमंकर्तुंस्थंडिलादिसकलंकर्मक० ॥ यत्राग्निस्थाप्यतेतिअग्नींधनाद्याज्यभागांते ॥ चतुर्गृहीतमाज्यं ॥ ॐ धातादंदातुनोरयि मीशानोजगंतस्पतिः ॥ सनःपूर्णेनवावनत्स्वाहा ॥ धात्रेदं० ॥ ॐ धाताप्रजायाउतरायईशेधातेदंविश्वंभुवनंजजान ॥

---

१ सूनोर्मातरिगर्भिण्यांचूडाकर्मनकारयेत् ॥ पंचमाब्दात्प्रागूर्ध्वंगर्भिण्यामपिकारयेत् ॥ सहोपनीत्याकुर्वीचेत्गर्भदोषोनविद्यते ।

धातापुत्रंयजमानायदातातस्माउहव्यंघृतवद्विधेमस्वाहा ॥ धात्रेदं० ॥ ॐ धातादधातुनोरयिंप्राचीं जीवातुमक्षिता ॥ वयंदेवस्यधीमहिसुमतिꣳसत्यराधसःस्वाहा ॥ धात्रेदं० ॥ ॐ धातादधातुदाशुषेवसूनिप्रजाकामायमीढुषेदुरोणे ॥ तस्मैदेवाअमृताःसंव्ययंतांविश्वेदेवासोअदितिःसजोषाःस्वाहा ॥ धात्रेदं० ॥ ॐ यस्त्वाहृदाकीरिणामन्यमानोमर्त्यंमर्त्योजोहवीमि ॥ जातवेदोयशोअस्मासुधेहिप्रजाभिरग्नेअमृतत्वमश्याꣳस्वाहा ॥ अग्नयेजातवेदसइदं० ॥ ॐ यस्मैत्वꣳसुकृतेजातवेदउलोकमग्नेकृणवस्योनं ॥ अश्विनꣳसुपुत्रिणंवीरवंतंगोमंतꣳरयिंनशतेस्वस्तिस्वाहा ॥ अग्नयेजातवेदसइदं० ॥ ॐ त्वेसुपुत्रशवसोवृत्रन्कामंकातयः ॥ नत्वामिंद्रातिरिच्यतेस्वाहा ॥ इंद्रायेदं० ॥ ॐ उक्थउक्थेसोमइंद्रंममादनीथेनीथेमघवानꣳसुतासः ॥ यदींꣳसबाधःपितरंनपुत्राःसमानदक्षाअवसेहवंतेस्वाहा ॥ इंद्रायेदं० ॥ इत्यष्टावाज्याहुतीर्हुत्वा ॥ समित्संनहनंजयाभ्यातान्व्यस्तराष्ट्रभृत्प्रायश्चित्ताहुतीर्हुत्वा ॥ अपरेणाग्निंप्राचींकुमारमुपवेश्य ॥ त्र्येण्याशलल्यात्रिभिर्दर्भपिंजूलैःशलालुग्लप्सेनेतितूष्णींकेशान्निनीय ॥ उष्णेनवायउदकेनेत्युष्णोदकंशीतोदकंनिनीय ॥ ॐ उष्णेनवायवुदकेनेह्यदितिःकेशान्वपतु ॥ आपउंदंत्विवितितेनोदकेनकुमारस्यशिरउनत्ति ॥ ॐ आपउंदंतुजीवसेदीर्घायुत्वायवर्चसे ॥ ज्योक्सूर्यंदृशे ॥ त्रीꣳस्त्रीन्दर्भान्पूर्वाग्रान्पूर्वेअंतर्धाय ॥ येनावपदितिचतसृभिःप्रतिमंत्रंप्रतिदिशंप्रदक्षिणंप्रवपति ॥ ॐ येनावपत्सविताक्षुरेणसोमस्यराज्ञोवरुणस्यविद्वान् ॥ तेनब्रह्माणोवपतेदमस्यायुष्मान्जरदष्टिर्यथासत् ॥ अमुकशर्मन् ॥ इतिशिरःपुरस्तात्क्षुरेणप्रवपेत् ॥ अपउपस्पृश्य ॥ कुमारस्यमाताब्रह्मचारीवायवसहितअनडुहशकृत्पिंडंगृहीत्वादक्षिणतःस्थित्वा ॥ यत्क्षुरेणेतिसर्वत्रवपंतमाचार्यमनुमंत्रयते ॥ ॐ यत्क्षुरेणमर्चयतासुपेशसावप्तावपसिकेशान् ॥ शुंधिशिरोमास्यायुःप्रमोषीः ॥ आचार्यस्ता

न्केशान्शकृत्पिंडेनिधाय ॥ अपउ० ॥ पुनस्त्रीन्दर्भान्दक्षिणतोंतर्धाय ॥ ॐ येनंपूषाबृहस्पतेरग्नेरिंद्रस्यचायुषेवपत् ॥ तेनास्यायुंषेवपसौश्लोकयायस्वस्तये ॥ ॐ यत्क्षुरे० दक्षिणतःकेशान्वापयित्वातान्केशान्शकृत्पिंडेनिधायापउपस्पृश्य ॥ पुनस्त्रीन्दर्भान्पश्चिमतोंतर्धाय ॥ ॐ येनभूयश्चरात्ययंज्योक्चपश्याति सूर्यं ॥ तेनास्यायुषेवपसौश्लोकयायस्वस्तये॥ ॐ यत्क्षु० ॥ इति पश्चात्केशान्वापयित्वातान्केशान्शकृत्पिंडेनिधायापउपस्पृश्य ॥ पुनस्त्रीन्दर्भानुत्तरतोंतर्धाय ॥ ॐ येनंपूषाबृहस्पतेरग्नेरिंद्रस्यचायुषेवपत् ॥ तेनंतेवपामिअमुकशर्मन्नायुंषावर्चसायथाज्योक्सुमनाअसाः ॐ यत्क्षुरे० ॥ इत्युत्तरकेशान्वापयित्वातान्केशान्शकृत्पिंडेनिधायापउपस्पृश्य ॥ ततोमाताब्रह्मचारीवाउश्वायकेशानितिकेशसहितंशकृत्पिंडंऔदुंबरमूलेदर्भस्तंभेवा निदधाति॥ॐ उश्वायकेशान्वरुणस्यराज्ञोबृहस्पतिःसवितासोमोअग्निः ॥ तेभ्योनिधानंबहुधान्वविंदन्नंतराद्यावापृथिवीअपःसुवः ॥ सम्यकूस्नापयित्वा ॥ क्षुरंप्रक्षाल्य ॥ तेनत्र्यहंकर्मनिवृत्तिः ॥ यथाऋषिशिखानिदधाति ॥ सदसिसन्मेत्यादिपूर्णपात्रमुद्रास्यकुमारस्यांजलौनिनीय ॥ अग्निंसंपूज्य ॥ ब्रह्मणेवरंदद्यात् ॥ कृतस्य० ब्राह्मणान्भोजयित्वाशिषोवाचयित्वा ॥ यस्यस्मृ० परमेश्वरःप्रीयतां ॥ ॥ इतिचूडाकर्मप्रयोगः ॥ ॥ ॥ ॥

## ॥ ४८ ॥ अथोप[१]नयनं ॥

श्रीः ॥ सकुटुंबयजमानः ॥ आचम्य ॥ पूर्वोक्तप्रकारेणस्तंबप्रतिष्ठांवेद्यारंभणादिकार्यं ॥ अन्यत्कुलाचारप्राप्तं कार्यं ॥

---

१ गर्भाष्टमेष्टमेवाब्देब्राह्मणमुपनयीत वसंतेब्राह्मणमुपनयीत ॥

॥ ४९ ॥ गर्भाधानादिसंस्कारतंत्रं ॥ स्वस्वकालेगर्भाधानादिसंस्काराःअकृत्वातेसंस्काराःगर्भाधानादिचौलांताःउपनयनेकर्तव्याः ॥ तत्रप्रयोगःउपनयनात्प्राक्दिनेतद्दिनेवा ॥ शुभेमुहूर्तेकृताभ्यंगःवस्त्राच्छादितेपीठेप्राङ्मुखउपविश्यस्वदक्षिणतःपत्नींतद्दक्षिणतःसंस्कार्यंचोपवेश्य ॥ आचम्यप्राणानायम्यदेशकालौसंकीर्त्य ॥ ममास्यकुमारस्यबीजगर्भसमुद्भवैनोनिबर्हणद्वाराक्षेत्रसंस्कारव्यवहारान्नाद्यतेजआयुर्वर्चोभिवृद्धिद्वाराचश्रीपरमेश्वरप्रीत्यर्थंअंतरितान्गर्भाधानपुंसवनसीमंतोन्नयनजातकर्मनामकरणान्नप्राशनसंस्कारान्सहैकतंत्रेणकरिष्ये ॥ अथवाजातकर्मनामकर्मान्नप्राशनसंस्कारान्सहैकतंत्रेणकरिष्ये ॥ पूर्ववत्गर्भाधानादिसकलसंस्कारान्कुर्यात् ॥ वासंस्कारलोपप्रायश्चित्तंकार्यं ॥ ॥ ॥

॥ ५० ॥ स्वकालेअकरणजनितप्रायश्चित्तं ॥ आचम्यप्राणानायम्यदेशकालौसंकीर्त्यअमुकगोत्रोत्पन्नस्यामुकशर्मणःममास्यकुमारस्यगर्भाधानपुंसवनसीमंतोन्नयनजातकर्मनामकर्मान्नप्राशनचौलांतानांसंस्काराणांस्वकालेअकरणजनितप्रत्यवायपरिहारार्थंप्रतिसंस्कारंपादकृच्छ्रात्मकंप्रायश्चित्तंयथाशक्तिगोनिष्क्रयद्रव्यदानप्रत्याम्नायद्वारातथाचचौलस्यार्धकृच्छ्रात्मकप्रायश्चित्तंयथाशक्तिगोनिष्क्रयद्रव्यदानप्रत्याम्नायद्वाराअहमाचरिष्ये ॥ प्रायश्चित्तीयद्रव्यंब्राह्मणायदातुमहमुत्सृज्ये ॥ तेनश्रीपापापहामहाविष्णुःप्रीयतां ॥ ॥ इतिस्वकालेअकरणजनितप्रायश्चित्तं ॥ ॥ ॥



॥ ५१ ॥ संस्कारलोपप्रायश्चित्तं ॥ आचम्य० ममास्यकुमारस्यगर्भाधानपुंसवनसीमंतोन्नयनजातकर्मान्नप्राशनचौलसंस्काराणांअकरणजनितप्रत्यवायपरिहारार्थंप्रतिसंस्कारंपादकृच्छ्रात्मकंप्रायश्चित्तं (पाहित्रयोदश)होमपूर्वकंयथाशक्तिगोनि

ष्क्रयद्रव्यदानप्रत्याम्नायद्वाराअहमाचरिष्ये ॥ प्रायश्चित्तीयद्रव्यंब्राह्मणायदातुमहमुत्सृज्ये ॥ तेनश्रीपापापहामहाविष्णुः प्रीयतां ॥ ॥ इतिसंस्कारलोपप्रायश्चित्तं ॥ ॥ ॥ ॥ ॥

॥ ५२ ॥ अधिकारसिध्यर्थंप्रायश्चित्तं ॥ आचार्यः आचम्य० ममउपनेतृत्वाधिकारयोग्यतासिद्ध्यर्थंकृच्छ्रत्रयप्रायश्चित्तंयथाशक्तिगोनिष्क्रयद्रव्यदानप्रत्याम्नायद्वारातथाचममगायत्र्युपदेशाधिकारार्थंद्वादशसहस्रवा(द्वादशाधिकसहस्र)संख्यागायत्रीजपंतथाचममसंध्यावंदनादिकर्मलोपप्रायश्चित्तार्थंचपाहित्रयोदशहोमंकरिष्ये ॥ कुर्यात् ॥ वातत्प्रत्याम्नायगोनिष्क्रयीभूतंद्रव्यंयथाशक्तिब्राह्मणायदातुमहमुत्सृज्ये ॥ ॥ ॥ ॥ ॥

॥ ५३ ॥ बटोःअधिकारसिध्यर्थंप्रायश्चित्तं ॥ आचम्यममकामचारकामवादकामभक्षणादिदोषपरिहारार्थंउपनेयत्वयोग्यतासिद्ध्यर्थंकृच्छ्रत्रयप्राय० ॥ ॥ ॥ ॥ ॥ ॥

## ॥ ५४ ॥ उपनयनप्रयोगः ॥

श्रीः ॥ आचम्य० ॥ कुलदेवतादीनांतांबूलसमर्पणंकृत्वाब्राह्मणेभ्यःवृद्धेभ्यश्चनमस्कृत्य ॥ आचम्यप्रा० ममास्यकुमारस्यआयुष्याभिवृद्ध्यर्थंएतावंतंकालमनाश्रमेणाश्रमयत्यतिशयसंपादनार्थंआयुस्तेजोवीर्ययशःश्रीपुष्टिकाम्याभिवृध्यर्थंसांगोपांगसकलवेदशास्त्राध्ययनाध्यापनाधिकारसिध्यर्थंतत्प्रतिपादितनित्यनैमित्तिककाम्यकर्मानुष्ठानयोग्यतासिध्यर्थंद्विजत्वसिध्यर्थंचउपनयनकर्मणासꣳस्करिष्ये ॥ तत्रादौनिर्विघ्नतासिध्यर्थंमहागणपतिपूजनपूर्वकंस्वस्तिपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धंकुल

देवतास्थापनंमंडपदेवतास्थापनंपूजनंइडाहवाचनंआचमनाधिकारार्थंनवतंतुधारणंशोभनहेतुभूतंब्रह्मेंद्रादिपंचपालिकाप्रतिष्ठासिध्यर्थंअंकुरारोपणंविधिवत्कंकणबंधनंचक० ॥ गणपतिपूजनादिइडाहवाचनांतंकुर्यात् ॥ ॥

॥ ५५ ॥ नवतंतुधारणं ॥ अस्यकुमारस्यआचमनाधिकारार्थंनवतंतुधारणंकरिष्ये ॥ कुमारायतूष्णींत्रिराचमनंकार्यं॥ ॐ नवोनवोभवतिजायमानोन्हांकेतुरुषसामेत्यग्रे ॥ भागंदेवेभ्योविदधात्यायन्प्रचंद्रमास्तिरतिदीर्घमायुः ॥ इतिमंत्रेणनवतंतुंधारयेयुःआचम्य ॥ ॥ इतिनवतंतुधारणं ॥ पंचपालिकाअंकुरारोपणादिकंकणबंधनांतंकुर्यात् ॥ इतिपूर्वदिनकृत्यं ॥

॥ ५६ ॥ अथोपनयनदिनं ॥ यजमानःमंगलस्नानंकृत्वा ॥ आचम्यप्राणानायम्यदेशकालौसंकीर्त्यइमंकुमारंअमुकशर्माणंउपनेष्ये ॥ तदंगंगणपतिस्मरणंकर्मणःपुण्याहवाचनंचकरिष्ये ॥ गणपतिंस्मृत्वा ॥ सोदकंकलशतंडुलतांबूलयुक्तपात्रेणापिधाय ॥ मह्यंसह० पुण्याहं० स्वस्तिं० ऋद्धिं० भवंतोब्रुवंतु ॥ पुनर्गोब्राह्मणेभ्यःशुभंभवतु ॥ तदुदकेनमार्जयेत् ॥ तूष्णींकुमारस्यनवतंतून्विसर्जयेत् ॥ उपनयनांगंहवनंकर्तुंस्थंडिलादिकर्मकरिष्ये ॥ यत्राग्निस्थाप्यतेतिअग्निंप्रतिष्ठाप्य ॥ ॐ भूर्भुवःस्वःइतिपरिषिच्य ॥ अग्नयेनमःइत्यलंकृत्य ॥ अदितेनुमन्यस्वेतिपरिषिच्य ॥ चत्वारिशृंगेतिध्यात्वा ॥ अस्यकुमारस्यब्रह्मचर्यादिद्विजत्वसिध्यर्थंयज्ञोपवीतधारणंकारयिष्ये ॥ ॐ यज्ञोपवीतं० तेजः॥ इमंमंत्रंकुमारंवाचयेत्॥ पुनराचम्य ॥ क्षारादिवर्जंमात्रासहकुमारंभोजयेत् ॥ तदाब्रह्मचारिभ्योभोजनंदेयमित्याचारः ॥ ततःउष्णेनवायउदकेनेह्यदितिःकेशान्वपत्वित्यादिउक्त्वायकेशानित्युदुंबरमूलेदर्भस्तंभेवानिदधातीत्यंतंचौलवत्कुर्यात् ॥ कुमारंसम्यक्स्नापयित्वा ॥ पूर्ववदुपवेश्य ॥ दक्षिणोत्तरैरुत्तराधरैरितिपरिस्तीर्य ॥ दर्व्याज्यस्थाल्यावितिषट्पात्राणिप्रयुंज्य ॥ समित्कुशांबुकूर्चवस्त्राश्मदंडाजिनमेखलां

श्वसकृत्प्रयुंज्यात् ॥ प्रोक्षणपात्रसंस्काराद्याज्यभागांतंकृत्वा ॥ कुमारेणआयुर्दादेवजरसमितिमंत्रेणपालाशꣳसमिधमग्नावा
दधाति ॥ ॐ आयुर्दादेवजरसंगृणानोघृतप्रतीकोघृतपृष्ठोअग्ने ॥ घृतंपिबन्नमृतंचारुगव्यंपितेवपुत्रंजरसेनयेमꣳस्वाहा ॥ अग्नय
इदं० ॥ उत्तरेणाग्निंकुमारस्यदक्षिणेनपदातिष्ठेत्यश्मानमास्थाप्य ॥ ॐ आतिष्ठेममश्मानमश्मेवत्वꣳस्थिरोभव ॥ अभितिष्ठपृत
न्यतःसहस्वपृतनायतः ॥ बटुःपूर्ववदुपविश्य ॥ रेवतीस्त्वेतिद्वाभ्यांकुमारंवासोभिमंत्र्य ॥ ॐ रेवतीस्त्वाव्यक्षणन्कृत्तिकाश्चा
कृंतꣳस्त्वा ॥ धियोवयंनवग्नाआवृंजन्सहस्रमंताꣳअभितोअयच्छन् ॥ देवीर्देवायपरिधीसवित्रेमहत्तदासामभवन्महित्वनं ॥
याअकृंतन्निवितितिस्त्रभिर्वासःपरिधाय ॥ ॐ याअकृंतंनवयन्याअतन्वतयाश्चदेवीरंतानभितोददंत ॥ तास्त्वादेवीर्जरसेसंव्य
यंत्वायुष्मानिदंपरिधत्स्ववासः ॥ परिधत्तधत्तवाससैनꣳशतायुषंकृणुतदीर्घमायुः ॥ बृहस्पतिःप्रायच्छद्वासएतत्सोमायराज्ञेप
रिधातवाउ ॥ जरांगच्छासिपरिधत्स्ववासोभवाकृष्टीनामभिशस्तिपावा ॥ शतंचजीवशरदःसुवर्चारायश्चपोषमुपसंव्ययस्व ॥
परिहितंपरीदमितिकुमारमभिमंत्र्य ॥ परीदंवासोअधिधास्वस्तयेभूरापीनामभिशस्तिपावा ॥ शतंचजीवशरदःपुरूचीर्वसूनि
चार्य्योविभजासिजीवन् ॥ ममब्रह्मचर्यादिद्विजत्वसिध्यर्थंमौंजीधारणंकरिष्ये ॥ मौंजींमेखलांत्रिवृतांत्रिःप्रदक्षिणमियंदुरु
क्तादितिद्वाभ्यांपरिवेष्टयेत् ॥ ॐ इयंदुरुक्तात्परिबाधमानाशर्मवरूथंपुनतीनआगात् ॥ प्राणापानाभ्यांबलमाभरंतीप्रियादे
वानाꣳसुभगामेखलेयं ॥ ऋतस्यगोप्त्रीतपसःपरस्पीघ्नतीरक्षःसहमानाअरातीः ॥ सानःसमंतमनुपरीहिभद्रयाभर्तारस्तेमेखले
मारिषाम ॥ ममज्ञानसिध्यर्थंअजिनधारणंक० ॥ ॐ मित्रस्यचक्षुर्धरुणंबलीयस्तेजोयशस्विस्थविरꣳसमिद्धं ॥ अनाहनस्यंवसं
नंजरिष्णुपरीदंवाज्यजिनंदधेहं ॥ कृष्णाजिनंदत्वामंत्रंकुमारंवाचयेत् ॥ अग्नेरुत्तरतोदर्भान्सꣳस्तीर्य ॥ आगंत्रासमगन्महिप्रसु

मृत्युंर्युयोतुन ॥ अरिष्टाःसंचरेमहिस्वस्तिचरतादिहस्वस्त्यागृहेभ्यः ॥ कुमारंप्रत्यङ्मुखंदर्भेषूपवेश्यमंत्रंवाचयित्वा ॥ आचार्य स्योदकांजलिंकुमारस्यांजलौनिनीय ॥ समुद्रादूर्मिरितित्रिःप्रोक्ष्यवाचयेत् ॥ ॐ समुद्रादूर्मिर्मधुमा२ँउदार्दुपा२ँशुनासमंमृत त्वमंश्यां ॥ इमेनुतेरश्मयःसूर्यस्ययेभिःसपित्वंपितरोनआयन् ॥ तेनोदकेनकुमारंसकृन्मंत्रेणप्रोक्ष्यद्विस्तूष्णीं ॥ अग्निष्टइति दशभिर्मंत्रैःसकृत्कुमारस्यदक्षिणहस्तंगृहीत्वा ॥ ॐ अग्निष्टेहस्तमग्रभीत्सोमस्तेहस्तमग्रभीत्सवितातेहस्तमग्रभीत्सरस्वतीतेहस्त मग्रभीत्पूषातेहस्तमग्रभीदर्यमातेहस्तमग्रभीद२ँशस्तेहस्तमग्रभीद्भगस्तेहस्तमग्रभीन्मित्रस्तेहस्तमग्रभीन्मित्रस्त्वमसिधर्मणाग्नि राचार्यस्तव ॥ अग्नयेत्वेतिप्रतिमंत्रंकुमारंदेवताभ्योरक्षणायदत्वा ॥ ॐ अग्नयेत्वापरिददामिअमुकशर्मन् ॥ ॐ सोमायत्वापरि ददामि० ॥ सवित्रेत्वापरि० ॥ सरस्वत्यैत्वा० ॥ अद्भ्यस्त्वापरिददामि०॥ ओषधीभ्यस्त्वाप० ॥ पृथिव्यैत्वासवैश्वानरायैपरि०॥

॥ सुमुहूर्ते ॥ आचार्यकुमारयोर्मध्येनूतनसदशपटंधृत्वा ॥ चूर्णिकामंगलाष्टकानिपठित्वा ॥ देवस्येत्वतियजुषापितु र्दक्षिणांकेउपवेश्य ॥ ॐ देवस्यत्वासवितुःप्रसवउपनयनेअमुकशर्मन् ॥ सुप्रजाइतिकुमारस्यदक्षिणकर्णेजपति ॥ ॐ सुप्रजाः प्रजयाभूयास२ँसुवीरोवीरैःसुवर्चावर्चसासुपोषःपोषैः ॥ ॥ ॥ ॥ ॥

॥ ५७ ॥ उपनयनमंत्राः ॥ हरिः ॐ अग्नेतेजस्विन्तेजस्वीत्वंदेवेषुभूयास्तेजस्वंतंमामायुष्मंतंवर्चस्वंतंमनुष्येषुकुरुदीक्षा यैचत्वातपसश्चतेजसेजुहोमितेजोविदसितेजोमामाहासीन्माहंतेजोहासिषंमामान्तेजोहासीदिंद्रौजस्विन्नोजस्वीत्वंदेवेषुभूया ओजस्वंतंमामायुष्मंतंवर्चस्वंतंमनुष्येषुकुरुब्रह्मणश्चत्वाक्षत्रस्यच ॥ १ ॥ ॐ ओजसेजुहोम्योजोविदस्योजोमामाहासीन्माह

मोजोंहासिषंमामामोजोंहासीत्सूर्यंभ्राजस्विन्भ्राजस्वीत्वंदेवेषुभूयाभ्राजस्वंतंमामायुष्मंतंवर्चस्वंतंमनुष्येषुकुरुवायोश्चत्वापां
चभ्राजसेजुहोमिसुवर्विंदसिसुवर्मामाहासीन्माहंसुवर्हासिषंमामांसुवर्हासीन्मयिमेधांमयिप्रजांमय्यग्निस्तेजोदधातुमयिमे
धांमयिप्रजांमयींद्रइंद्रियंदधातुमयिमेधांमयिप्रजांमयिसूर्योभ्राजोदधातु ॥ २ ॥ ॐ सांग्रहण्येष्ट्यायजते ॥ इमांजनतां
संगृह्णानीति ॥ द्वादशारत्नीरशनाभवति ॥ द्वादशमासाःसंवत्सरः ॥ संवत्सरमेवावरुंधे ॥ मौंजीभवति ॥ ऊर्ग्वैमुंजाः ॥
ऊर्जमेवावरुंधे ॥ चित्रानक्षत्रंभवति ॥ चित्रंवाएतत्कर्म ॥ यदश्वमेधःसमृध्यै ॥ पुण्यनामदेवयजनमध्यवस्यति ॥ पुण्यामे
वतेनकीर्तिमभिजयति ॥ अपदातीनृत्विजःसमावहंत्यासुब्रह्मण्यायाः ॥ सुवर्गस्यलोकस्यसमष्ट्यै ॥ केशश्मश्रुवपते ॥ नखा
निनिकृंतंते ॥ दतोधावते ॥ स्नाति ॥ अहतंवासःपरिधत्ते ॥ पाप्मनोपहत्यै ॥ वाचंयत्वोपवसति ॥ सुवर्गस्यलोकस्यगुप्त्यै ॥
रात्रिंजागरयंतआसते ॥ सुवर्गस्यलोकस्यसमष्ट्यै ॥ ३ ॥ नयिप्रजांमेगोपाय ॥ अमृतत्वायजीवसे ॥ जातांजनिष्यमाणांच ॥
अमृतेसत्येप्रतिष्ठितां ॥ ४ ॥ ॥ इत्युपनयनमंत्राः ॥ ॥ ॥ ॥ ॥
ब्रह्मचर्यमागामितिमंत्रंकुमारंब्रूयात् ॥ ब्रह्मचर्यमागामुपमानयस्वदेवेनसवित्राप्रसूतः ॥ आचार्यःकोनामासीतिब्रूयात् ॥
कुमारःअमुकशर्मास्मि ॥ आचार्यः । कस्यब्रह्मचार्यसि ॥ कुमारःप्राणस्यब्रह्मचार्यस्मि ॥ आचार्यः । अमुकशर्मैषतेदेवसूर्य
ब्रह्मचारीतंगोपायसमामृतैषतेसूर्यपुत्रःसदीर्घायुःसमामृतयांस्वस्तिमग्निर्वायुःसूर्यश्चंद्रमाआपोनुसंचरंतितांस्वस्तिमनुसंचर॥
अमुकशर्मन् ॥ अध्वनामितिकुमारंवाचयेत् ॥ ॐ अध्वनामध्वपतेश्रेष्ठस्याध्वनःपारमशीय ॥ ॥ ॥
॥ ५८ ॥ उपनयनहोमः ॥ योगादिमंत्रान्वाचयन्नेकादशाज्याहुतीर्हुत्वा ॥ कुमारेणस्रुचाज्यमादाय ॥ ॐ योगेयोगेत

वस्तरंवाजेवाजेहवामहे ॥ सखायइंद्रंमूतयेस्वाहा ॥ इंद्रायेदं० ॥ १ ॥ आचार्यः । ॐ इममग्नआयुषेवर्चसेकृधिप्रियःरेतो वरुणसोमराजन् ॥ मातेवास्माअदितेशर्मयच्छविश्वेदेवाजरदष्टिर्यथासत्स्वाहा ॥ अग्निवरुणसोमादितिर्विश्वेभ्योदेवेभ्यइदं० ॥ २ ॥ कुमारः ॥ ॐ शतमिन्नुशरदोअंतिदेवायत्रानश्चक्राजरसंतनूनां ॥ पुत्रासोयत्रपितरोभवंतिमानोमध्यारीरिषतायुर्गं तोःस्वाहा ॥ देवेभ्यइदं० ॥ ३ ॥ आचार्यः ॥ ॐ अग्निष्टआयुःप्रतरांदधात्वग्निष्टेपुष्टिंप्रतरांकृणोतु ॥ इंद्रोमरुद्भिर्ऋतुथाकृ णोत्वादित्यैस्तेवसुभिरादधातुस्वाहा ॥ अग्नींद्रमरुदादित्यवसुभ्यइदं० ॥ ४ ॥ कुमारः ॥ ॐ मेधामह्यमंगिरसोमेधाःसप्त ऋषयोददुः ॥ मेधामह्यंप्रजापतिर्मेधामग्निर्ददातुमेस्वाहा ॥ अंगिरसःसप्तऋषिःप्रजापत्यग्निभ्यइदं० ॥५॥ आचार्यः ॥ ॐ अप्स राशुंचयामेधागंधर्वेषुचयद्यशः ॥ दैवीयामानुषीमेधासामाविशतादिहस्वाहा ॥ मेधादेव्याइदं० ॥६॥ कुमारः ॥ ॐ इमंमेवरु णःश्रुधीहवमद्याचमृडय ॥ त्वामवस्युराचकेस्वाहा ॥ वरुणायेदं ॥७॥ ॐ तत्त्वायामिब्रह्मणा० षीःस्वाहा ॥ वरुणायेदं० ॥८॥ ॐ त्वन्नोअग्नेवरुण० स्वस्वाहा ॥ अग्निवरुणाभ्यामिदं० ॥ ९ ॥ ॐ सत्वन्नोअग्ने० ॥ अग्नीवरुणाभ्यामिदं० ॥ १० ॥ ॐ त्वमग्नेअयास्ययासन्मनसाहितः ॥ अयासन्हव्यमूहिषेयानोधेहिभेषजःस्वाहा ॥ अग्नयेअयसइदं० ॥ ११ ॥ इत्येकादशाज्या हुतीर्हुत्वा ॥ समित्संन्नहनंजयादिव्यस्तराष्ट्रभृद्धोमंब्रह्मविसर्जनांतंकृत्वा ॥ ॥ ॥ ॥

॥ ५९ ॥ गायत्र्युंपदेशः ॥ कुमारः ॥ आचार्यःपुरस्तात्प्रत्यङ्मुखउपविश्य ॥ अपरेणाग्निमुदगग्रंकूर्चंनिदधाति ॥ तत्रराष्ट्रभृदसीतियजुषोपविशति ॥ राष्ट्रभृदस्याचार्यसंदीमात्वद्योषं ॥ कुमारः ॥ दक्षिणेनपाणिनागुरोर्दक्षिणपादमन्वार



१ नवभिःकुशैर्निर्मितंसूत्रेणपरिवेष्टितं ॥

भ्यगृहीत्वा ॥ गुरोसावित्रींभोअनुब्रूहीतिब्रूयात् ॥ पूर्वसंकल्पितनिष्क्रयीभूतंद्रव्यंब्राह्मणायदत्वा ॥ अस्यबटोःसावित्रीउप
देशंकरिष्ये ॥ तदंगंगणपतिपूजनंसावित्रीपूजनंक० ॥ कांस्यपात्रेसंभवितंतंडुलोपरिसावित्रींलिखेत् ॥ पंचोपचारैःसंपूज्य ॥
सावित्रींउपदिशेत् ॥ उभयोरुपरिनूतनवस्त्रावरणंकृत्वा ॥ ॐ भूःतत्सवितुर्वरेण्यं । ॐ भुवःभर्गोदेवस्यधीमहि । ॐ स्वुवः
धियोयोनःप्रचोदयात् ॥ ॐ भूःतत्सवि० महि । ॐ भुवःधियोयोनः० ॥ ॐ स्वुवःतत्सवि० यात् ॥ ॐ भूर्भुवःसुवःतत्सवि०
यात् ॥ कुमारः । अवृधमितिउत्तरोष्ठस्याचांतमुपस्पृश्याचामेत् ॥ ॐ अवृधमसौसौम्यप्राणस्त्वंमेगोपाय ॥ ब्रह्मणआ
णीस्थः ॥ इतिकर्णौयुगपत्कराभ्यामुपस्पृश्य ॥ सुश्रवइतिपालाशंदंडंदक्षिणहस्तेनादत्ते ॥ ममगोसर्पनिबर्हणार्थंदंडधारणं
करिष्ये ॥ ॐ सुश्रवःसुश्रवसंमाकुरुयथात्वस्सुश्रवःसुश्रवाअस्येवमहस्सुश्रवःसुश्रवाभूयासंयथात्वस्सुश्रवोदेवानांनिधिगोपो
स्येवमहंब्राह्मणानांब्रह्मणोनिधिगोपोभूयासं ॥ स्मृतंचमइत्येनंकुमारंवाचयति ॥ स्मृतंचमेऽस्मृतंचमेतन्मउभयंव्रतं ॥ निंदा
चमेऽनिंदाचमेतन्मउभयंव्रतं ॥ श्रद्धाचमेऽश्रद्धाच० । विद्याचमेऽविद्याचमे० । श्रुतंचमेऽश्रुतंचमे० । सत्यंचमेऽसत्यंच० ।
तपश्चमेऽतपश्च० । व्रतंचमेऽव्रतंचमे० । यद्ब्राह्मणानांब्रह्मणिव्रतं । यदग्नेसेंद्रस्यसप्रजापतिकस्यसदेवस्यसदेवराजस्यसमनुष्य
स्यसमनुष्यराजस्यसपितृकस्यसपितृराजस्यसगंधर्वाप्सरस्कस्य ॥ यन्मआत्मनिव्रतंतेनाहस्सर्वव्रतोभूयासं ॥ गुरवेबटुर्वरंद
द्यात् ॥ गुरुःसप्तदशवारंप्रणवंजपेत् ॥ आचार्यः मयाकृतस्यसावित्रीउपदेशस्यसांगतायैतत्संपूर्णफलावाप्त्यर्थंगुरवेगो

१ पच्छोर्द्धर्चशःसर्वान्व्याहरन्व्याहृतिःक्रमात् ॥ पदेष्वर्धर्चयोरर्धेकृत्स्नायामुत्तमांवदेत् ॥ २ पच्छोर्धर्चशस्ततःसर्वाव्याहृतीर्विहृताःपादा
दिषुदद्यात् ॥ पुनरर्धर्चादौद्वे ॥ उत्तमांकृत्स्नादौ इतिसूत्रं ॥

दानमहंकरिष्ये ॥ गुरोःपूजनंचकरिष्ये ॥ पूजांकृत्वा ॥ यज्ञसाधनभूतायाविश्वस्याघौघनाशिनी ॥ विश्वरूपधरोदेवः प्रीयतामनयागवा ॥ इदंगोदानं(वागोनिष्क्रयीभूतद्रव्यं)गुरवेतुभ्यमहंसंप्रददे ॥ गुरोःदेवस्यत्वासवितु० प्रतिगृह्णामि ॥ राजात्वावरुणोनयतुदेवीदक्षिणे । रुद्रायगां । तेनामृतत्वमश्यां । वयोदात्रे । मयोमह्यमस्तुप्रतिग्रहीत्रे । कइदंकस्माअदात् । कामःकामाय । कामोदाता । कामःप्रतिग्रहीता । कामंसमुद्रमाविश । कामेनत्वाप्रतिगृह्णामि । कामैतत्ते । एषातेकामदक्षिणा । उत्तानस्त्वांगीरसःप्रतिगृह्णातु ॥ इतिमंत्रेणगुरोःधेनुंप्रगृह्य ॥ उदायुषेतिकुमारमुपस्थायमंत्रंवाचयेत् ॥ ॐ उदायुषास्वायुषोदोषधीनाꣳरसेनोत्पर्जन्यस्यशुष्मेणोदस्थाममृताꣳअनु ॥ तच्चक्षुरितिसूर्यमुपस्थायवाचयेत् ॥ ॐ तच्चक्षुर्देवहितंपुरस्ताच्छुक्रमुच्चरत् ॥ पश्येमशरदःशतंजीवेमशरदःशतंनंदामशरदःशतंमोदामशरदःशतंभवामशरदःशतꣳशृणवामशरदःशतंप्रब्रवामशरदःशतमजीतास्यामशरदःशतंज्योक्चसूर्यंदृशे ॥ यउदगान्महतोर्णवाद्विभ्राजमानःसरिरस्यमध्यात्समावृषभोलोहिताक्षःसूर्योविपश्चिन्मनसापुनातु ॥ यस्मिन्भूतमितिकुमारस्यदक्षिणहस्तंगृहीत्वा ( वाजप्वा ) ॥ ॐ यस्मिन्भूतंचभव्यंचसर्वेलोकाःसमाहिताः ॥ तेनगृह्णामित्वामहंमह्यंगृह्णामित्वामहंप्रजापतिनात्वामह्यंगृह्णामिअमुकशर्मन् ॥ ॥

॥ ६० ॥ प्रातरग्निकार्यं ॥ बटोःआचम्यप्राणानायम्यएवंगुणेत्यादिश्रीपरमेश्वरप्रीत्यर्थंप्रातरग्निकार्यंकरिष्ये ॥ परित्वेतिपरिमृज्य ॥ ॐ परित्वाग्नेपरिमृजाम्यायुषाचधनेनच ॥ सुप्रजाःप्रजयाभूयासꣳसुवीरोवीरैःसुवर्चावर्चसासुपोषःपोषैःसुगृहोगृहैःसुपतिःपत्यासुमेधामेधयासुब्रह्माब्रह्मचारिभिः ॥ अग्निमिध्वा ॥ ॐ भूर्भुवःसुवःइतिपरिषेचनं ॥ अग्नयेनमःइत्यलंकृत्य ॥

१ यथाचार्यःस्वयमेवकुमारमध्यापयितुंव्याख्यातंचसमर्थश्चेत्तर्हिकुमारस्यदक्षिणहस्तंगृहीत्वानोचेन्मंत्रंजप्वा ॥

अदितेनुमन्यस्वेतित्याग्निंपरिषिच्य ॥ चत्वारिश्रृंगेतिध्यात्वा ॥ अग्नयेइतिद्वादशभिर्व्याहृतिभिश्चषोडशान्समिधोदत्वा ॥ ॐ अग्नयेसमिधमाहार्षंबृहतेजातवेदसे यथात्वमग्नेसमिधासमिध्यसएवंमामायुषावर्चसासंन्यामेधयाप्रजयापशुभिर्ब्रह्मवर्चसेनान्नाद्येनसमेधयस्वाहा ॥ अग्नयइदं० ॥१॥ ॐ एधोस्येधिषीमहिस्वाहा ॥ अग्नय० ॥२॥ ॐ समिदसिसमेधिषीमहिस्वाहा ॥ अग्नय० ॥ ३ ॥ ॐ तेजोसितेजोमयिधेहिस्वाहा ॥ अग्नय० ॥ ४ ॥ ॐ अपोअद्यान्वचारिषꣳरसेनसमसृक्ष्महि ॥ पयस्वाꣳअग्नआगमंतंमासꣳसृजवर्चसास्वाहा ॥ अग्नय० ॥५॥ ॐ संमाग्नेवर्चसासृजप्रजयाचधनेनचस्वाहा ॥ अग्नय०॥६॥ ॐ विद्युन्मेअस्यदेवाइंद्रोविद्यात्सहऋषिभिःस्वाहा ॥ इंद्राये० ॥ ७ ॥ ॐ अग्नयेबृहतेनाकायस्वाहा ॥ अग्नयेबृहतेनाकायेदं० ॥ ८ ॥ ॐ द्यावापृथिवीभ्याꣳस्वाहा ॥ द्यावापृथिवीभ्यामिदं० ॥ ९ ॥ ॐ एषातेअग्नेसमित्तयावर्धस्वचाप्यायस्वचतयाहंवर्धमानोभूयासमाप्यायमानश्चस्वाहा ॥ अग्नय० ॥ १० ॥ ॐ योमाग्नेभागिनꣳसंतमथाभागंचिकीर्षत्यभागमग्नेतंकुरुमामग्नेभागिनंकुरुस्वाहा ॥ अग्नय० ॥ ११ ॥ ॐ समिधमाधायाग्नेसर्वव्रतोभूयासꣳस्वाहा ॥ अग्नय० ॥ १२ ॥ ॐ भूस्वाहा ॥ अग्नय० ॥ ॐ भुवःस्वाहा ॥ वायव० ॥ ॐ सुवःस्वाहा ॥ सूर्याय० ॥ ॐ भूर्भुवःसुवःस्वाहा ॥ प्रजापतयइ० ॥ इतिषोडशसमिधान्हुत्वा ॥ अदितेन्वमꣳस्थाःइतिपरिषेचनंकृत्वा ॥ यत्तेअग्नेमयिमेधामित्यग्निमुपस्थाय ॥ ॐ यत्तेअग्नेतेजस्तेनाहंतेजस्वीभूयासं ॥ यत्तेअग्नेवर्चस्तेनाहंवर्चस्वीभूयासं ॥ यत्तेअग्नेहरस्तेनाहंहरस्वीभूयासं ॥ मयिमेधांमयिप्रजांमय्यग्निस्तेजोदधातु ॥ मयिमेधांमयिप्रजांमयीद्रइंद्रियंदधातु ॥ मयिमेधांमयिप्रजांमयिसूर्योभ्राजोदधातु ॥ मानस्तोकेतिजपित्वा ॥ ॐ मानस्तोकेतनयेमानआयुषिमानोगोषुमानोअश्वेषुरीरिषः ॥ वीरान्मानोरुद्रभामितोवधीर्हविष्मंतोनमसाविधेमते ॥ किंचि

त्भस्मादाय ॥ ॐ मेधावीभूयासंइतिललाटे ॥ तेजस्वीभूयासं ॥ दक्षिणांसे ॥ वर्चस्वीभूयासं ॥ वामांसे ॥ ब्रह्मवर्चस्वी भूयासं ॥ दक्षिणस्तने ॥ आयुष्मान्भूयासं ॥ नाभौ ॥ अन्नादोभूयासं ॥ कंठे ॥ यशस्वीभूयासं ॥ पृष्ठे ॥ सर्वसमृद्धोभू यासं ॥ शिरसिधृत्वा ॥ एकंसमिधंगृहीत्वा ॥ पुनस्त्वादित्याइतिपुनःसमिधमग्नावादधाति ॥ ॐ पुनस्त्वादित्यारुद्रावस वःसमिंधतांपुनर्ब्रह्माणोवसुनीथयज्ञैः ॥ घृतेनत्वंतनुवोवर्धयस्वसत्याःसंतुयजमानस्यकामाःस्वाहा ॥ अग्नयेवसुनीथाये० ॥ ॐ स्वस्तिश्रद्धांमेधां० हव्यवाहनोंनमः ॥ प्रवरमुच्चार्यनमस्कृत्य ॥ यस्यस्मृत्या० अनेनप्रातरग्निकार्याख्येनकर्मणाभगवा न्परमेश्वरःप्रीयतां ॥ एवंसायंकाले ॥ सायमग्निकार्यंकरिष्येतिविशेषः ॥ सर्वपूर्ववत् ॥ इत्यग्निकार्यं ॥ ततःआचार्यः ब्रह्मचार्यसि ॥ बटोःबाढमस्मि ॥ आचा० अपोशान ॥ बटोःअश्नामि ॥ आ० कर्मकुरु ॥ बटोःबाढंकरोमि ॥ आचार्यः मासुषुप्थाः ॥ ब० बाढंदिवानस्वपामि ॥ आ० भिक्षाचर्यंचर ॥ ब० बाढंचरामि ॥ आ० आचार्याधीनोभव ॥ ब० बाढंभवामि ॥ इतिब्रूयात् ॥ गुरुंमातरंअन्यांश्चवृद्धान्नमस्कृत्यभिक्षांयाचयेत् ॥ ॐ भवतिभिक्षांदेहीतिस्त्रियं ॥ भवान् भिक्षांददात्वितिपुरुषं ॥ कृतस्य० ब्राह्मणान्भोजयित्वाशिषोवाचयित्वा ॥ एवमग्निंत्र्यहंधारयति ॥ अक्षारलवणवर्जंभुं जानस्तिष्ठन् ॥ मध्यान्हसंध्यांकुर्यात् ॥ इत्युपनयनदिनकृत्यं ॥ ॥ ॥ ॥

॥ ६१ ॥ अथपलाशकर्म ॥ चतुर्थेहनि ॥ आचार्यः बटोःअन्यद्वासःपरिधाय ॥ ॐ यस्यंतेप्रथमवास्यंहरामस्तंत्वावि श्वेअवंतुदेवाः ॥ तंत्वाभ्रातरःसुवृधोवर्धमानमनुजायतांबहवःसुजातं ॥ इतिमंत्रेणपूर्वपरिहितंवासआदत्ते ॥ ग्रामाद्बहिः प्राचीमुदीचींवादिशमुपनिष्क्रम्य ॥ गृहेवा ॥ आचम्यप्राणानायम्यदेशकालौसंकीर्त्य ॥ अस्यबटोःआयुष्याभिवृद्ध्यर्थंबल

पुष्टिप्रज्ञामेधासिध्यर्थंपालाशकर्मक० ॥ तदंगंगणपतिपूजनंस्वस्तिपुण्याहवाचनंकरिष्ये ॥ कुर्यात् ॥ पलाशमूलमलंकृत्य ॥ पलाशवृक्षस्याधस्थंडिलंकृत्वा ॥ यत्राग्निस्थाप्यतेतितत्रउपनयनाग्निंप्रतिष्ठाप्य ॥ ॐ भूर्भुवःसुवःपरिषिच्यालंकृत्यपरिषिच्य ध्यात्वा ॥ पूर्वदेशेईशानदेशेवात्रीण्युदगपवर्गाणितंडुलैःस्थंडिलानिकृत्वा ॥ तत्रदक्षिणस्थंडिलेअस्मिन्पूगीफले ॐ भूर्भुवः सुवःप्रणवायनमः ॥ प्रणवमावाहयामि ॥ मध्यस्थंडिलेअस्मि० ॐ भू० श्रद्धायैनमःश्रद्धामावाहयामि ॥ उत्तरस्थंडिले अस्मि० ॐ भू० मेधायैनमःमेधामावाहयामि ॥ पलाशस्याधःअस्मि० ॐ भू० ब्रह्मणेनमःब्रह्माणमावाहयामि ॥ ॐ भूर्भु वःसुवःपलाशसहितप्रणवाद्यावाहितदेवताभ्योनमःइतिनाममंत्रेणषोडशोपचारैःसंपूज्य ॥ अनेनपूजनेनप्रणवादिदेवताःप्री यंतां ॥ बटोःउपस्थानंकृत्वा । यच्छंदसाइतिनवभिर्वाक्यैःप्रणवमुपस्थाय ॥ ॐ यच्छंदसामृषभोविश्वरूपः ॥ च्छंदोभ्योध्य मृतात्संबभूव ॥ समेंद्रोमेधयास्पृणोतु ॥ अमृतस्यदेवधारणोभूयासं ॥ शरीरंमेविचर्षणं ॥ जिव्हामेमधुमत्तमा ॥ कर्णाभ्यांभूरि विश्रुवं ॥ ब्रह्मणःकोशोसिमेधयापिहितः ॥ श्रुतंमेगोपाय ॥ श्रद्धयाग्निरितिसूक्तेनश्रद्धामुपस्थाय ॥ ॐ श्रद्धयाग्निःसमि ध्यते ॥ श्रद्धयाविंदतेहविः ॥ श्रद्धांभगस्यमूर्धनि ॥ वचसावेदयामसि ॥ प्रियंश्रद्धेददतः ॥ प्रियंश्रद्धेदिदासतः ॥ प्रियंभोजेषुयज्वसु ॥ इदंमउदितंकृधि ॥ यथादेवाअसुरेषु ॥ श्रद्धामुग्रेषुचक्रिरे ॥ एवंभोजेषुयज्वसु ॥ अस्माकमुदितंकृधि ॥ श्रद्धांदेवायजमानाः ॥ वायुगोपाउपासते ॥ श्रद्धांहृदय्ययाकूत्या ॥ श्रद्धयाहूयतेहविः ॥ श्रद्धांप्रातर्हवामहे ॥ श्रद्धांमध्यं दिनंपरि ॥ श्रद्धांसूर्यस्यनिम्रुचि ॥ श्रद्धेश्रद्धापयेहमा ॥ श्रद्धादेवानधिवस्ते ॥ श्रद्धाविश्वमिदंजगत् ॥ श्रद्धांकामस्यमा तरं ॥ हविषावर्धयामसि ॥ मेधादेवीतिसूक्तेनमेधामुपस्थाय ॥ ॐ मेधादेवीजुषमाणानआगाद्विश्वाचीभद्रासुमनस्यमाना ॥

त्वयाजुष्टानुदमानादुरुक्तान्बृहद्वदेमविदथेसुवीराः ॥ त्वयाजुष्टऋषिर्भवतिदेवित्वयाब्रह्मागतश्रीरुतत्वया ॥ त्वयाजुष्टश्चित्रं विंदतेवसुसानोजुषस्वद्रविणोनमेधे ॥ मेधांमइंद्रोदधातुमेधांदेवीसरस्वती ॥ मेधांमेअश्विनावुभावाधत्तांपुष्करस्रजा ॥ अप्सराशुचयामेधागंधर्वेषुचयन्मनः ॥ दैवींमेधासरस्वतीसामांमेधासुरभिर्जुषता॑स्वाहा ॥ आमांमेधासुरभिर्विश्वरूपाहिरण्य वर्णाजगतीजगम्या ॥ ऊर्जस्वतीपयसापिन्वमानासामांमेधासुप्रतीकाजुषंतां ॥ मयिमेधांमयिप्रजांमय्यग्निस्तेजोदधातु ॥ मयिमेधांमयिप्रजांमयींद्रइंद्रियंदधातु ॥ मयिमेधांमयिप्रजांमयिसूर्योभ्राजोदधातु ॥ इत्युपस्थाय ॥ दधिमधुशर्करायुक्तंप्र णवादीनुदिश्यब्राह्मणान्भोजयेत् ॥ दक्षिणोत्तरैरुत्तराधरैरितिसमंपूर्वेणयथोपदेशांतंकृत्वा ॥ समंतादपूपैरग्निंपरिस्तृत्य ॥ स्रुच्याज्यमादाय ॥ ॐ यश्छंदसामृषभोविश्वरूपः ॥ छंदोभ्योध्यमृतात्संबभूव ॥ समेंद्रोमेधयास्पृणोतु ॥ अमृतस्यदेवधार णोभूयास॑स्वाहा ॥ छंदोभ्यइदं० ॥ ॐ शरीरंमेविचर्षणं ॥ जिव्हामेमधुमत्तमा ॥ कर्णाभ्यांभूरिविश्रुवं ॥ ब्रह्मणःकोशो सिमेधयापिहितः ॥ श्रुतंमेगोपायस्वाहा ॥ छंदोभ्यइ० ॥ ॐ आवहंतीवितन्वाना ॥ कुर्वाणाचीरमात्मनः ॥ वासा॑सिमम गावश्च ॥ अन्नपानेचसर्वदा ॥ ततोमेश्रियमावह ॥ लोमशांपशुभिःसहस्वाहा ॥ छंदोभ्यइदं० ॥ ॐ आमायंतुब्रह्मचारिणः स्वाहा ॥ छंदोभ्यइदं० ॥ ॐ विमायंतुब्रह्मचारिणःस्वाहा ॥ छंदोभ्यइदं० ॥ ॐ यशोजनेसानिस्वाहा ॥ छंदोभ्यइदं० ॥ ॐ श्रेयान्वश्यसोसानिस्वाहा ॥ छंदोभ्य० ॥ ॐ तंत्वाभगप्रविशानिस्वाहा ॥ छंदोभ्य० ॥ ॐ समाभगप्रविशस्वाहा ॥ छंदोभ्य० ॥ ॐ तस्मिन्सहस्रशाखे ॥ निभगाहंत्वयिमृजेस्वाहा ॥ छंदोभ्य० ॥ ॐ यथापःप्रवतायंति ॥ यथामासाअह र्जरं ॥ एवंमांब्रह्मचारिणः ॥ धातरायंतुसर्वतःस्वाहा ॥ छंदोभ्य० ॥ ॐ प्रतिवेशोसिप्रमाभाहिप्रमापद्यस्वस्वाहा ॥ छंदो

भ्यइदं० ॥ इत्येकादशाज्याहुतीर्हुत्वा ॥ समित्संन्नहनंजयादिव्यस्तराष्ट्रभृत्ब्रह्मविसर्जनांते ॥ नवानिगृण्हीयात् ॥ रेवती त्यादिवस्त्रं ॥ इयंदुरुक्तादितिमेखलां ॥ मित्रस्यचक्षुरितिअजिनं ॥ सुश्रवइतिपलाशदंडं ॥ बटुःवस्त्रमेखलाजिनदंडान्पाला शाग्रेनिक्षिप्य ॥ वाससीब्रह्मणेदत्वात् ॥ यस्यस्मृत्या० मेधाजननाख्येनकर्मणाभगवान्परमेश्वरःप्रीयतां ॥ कृतस्य० ब्राह्म णान्भोजयित्वाभूयसींदद्यात् ॥ ॥ इतिपलाशकर्ममेधाजननप्र० ॥ ॥ ॥ ॥

## ॥ ६२ ॥ देवकोत्थापनं ॥

श्रीः ॥ आचम्यप्राणानायम्यदेशकालौसंकीर्त्यममास्यकुमारस्यचौलोपनयनांगंदेवकोत्थापनंमंडपोद्वासनंपंचपालिकोद्वासनं कंकणमोचनंचकरिष्ये ॥ तत्रादौनिर्विघ्नतासिद्ध्यर्थंगणपतिपूजनंस्वस्तिवाचनंचकरिष्ये ॥ गणपतिंसंपूज्य ॥ ॐ उत्तिष्ठब्रह्म णस्पतेदेवयंतस्त्वेमहे ॥ उपप्रयंतुमरुतःसुदानवइंद्रप्राशूर्भवासचा ॥ इतिमंत्रेणस्थापितदेवतांविसृज्य ॥ मंडपेआनीयतैला भ्यंगोद्वर्तनोष्णोदकस्नानपूर्वकपंचोपचारैःसंपूज्य ॥ वेष्टनसूत्रमुन्मुच्यस्वस्तिवाचनंकुर्यात् ॥ अभिषेकांतेपुरोधास्तच्छाखा दिवंशपात्रेनिधायतदुपरिप्रक्षिप्ताभिषेकजलंसकुटुंबयजमानशिरसिकिंचित्स्त्रावयेत् ॥ तत्रमंत्रः ॥ प्रेतिचेतिचेत्येतद्वैसर्वं स्वस्त्ययनंयत्प्रेतिचेतिचेतितद्योस्यप्रियस्यात्तमेतेनानुमंत्रयेतप्रेतिचेतिचेतिस्वस्त्येवगच्छतिस्वस्तिपुनरागच्छतीतिब्राह्मणा न्पठेत् ॥ एवंत्रिःकुर्यात् ॥ ततःकर्ताबद्धांजलिरस्मद्गोत्रेषुषट्सुषट्सुमासेषुशोभनमस्त्विनिभवंतोब्रुवंतुइतिद्विजान्प्रार्थयेत् ॥

तेचतथास्त्वितिब्रूयुः ॥ आचार्यंसंपूज्य ॥ ब्राह्मणान्भोजयित्वाशिषोवाचयित्वाइतिदेवकोत्थापनं ॥ यांतुदेवेतिपंचपालिकोत्थापनंचकुर्यात् ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ ६३ ॥ कंकणमोचनं ॥ कंकतोनकंकुतोथोसतीनकंकतः ॥ द्वावितिप्रुषीइतिन्या[1] दृष्टाअलिप्सित ॥ कंकणंमोचयाम्यद्यरक्षांतुनकदाचन ॥ मयिरक्षांविधायाशुदेवत्वंगच्छकंकण ॥ बृहत्सामेति० रक्ष ॥ ॥ इतिकंकणमोचनविधिः ॥ ॥

## ॥ ६४ ॥ अथवेदव्रतानि ॥ प्राजापत्यव्रतं ॥

श्रीः ॥ उदगयनेशुक्लपक्षेशुभेह्नि ॥ आचार्यकुमारौमंगलस्नातौभूत्वाभद्रासनेउपविश्य ॥ आचम्यप्राणानायम्यदेशकालौसंकीर्त्य ॥ इमंअमुकशर्माणंबटुंप्राजापत्यव्रतेनकर्मणासंस्क० ॥ तदंगंगणपतिपूजनंस्वस्तिपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धंचक० ॥ उक्तरीत्याकुर्यात् ॥ ब्रह्मचारिणःकेशश्मश्रून्वापयित्वा ॥ उपाकर्मवत्[2]स्नानविधिंकृत्वा ॥ धौतवाससीपरिधायतिलकानिकृत्वा ॥ आचम्यप्राणानायम्य ॥ प्राजापत्यव्रतांगंप्राजापत्यादिकांडऋषिपूजनंकरिष्ये ॥ निवीतीभूत्वा ॥ ॐ प्रजापतिंकांडऋषिमावाहयामि ॥ ॐसांहितीर्देवतामा० ॥ॐ याज्ञिकीर्देवतामा० ॥ ॐ वारुणीर्देवतामा० ॥ ॐ ब्रह्माणंस्वयंभुवमा० ॥ सदसस्पतिमा० ॥ षोडशोपचारैःसंपूज्य ॥ प्रजापतिंकांडऋषिंतर्पयामि ॥ एवंसर्वत्रतर्पणंकृत्वा ॥ यत्राग्निस्थाप्यतेतिसमंपूर्वेणयथोपदेशांतंकृत्वा ॥ प्रधानहोमंकुर्यात् ॥ चतुर्गृहीतमाज्यं ॥ ॐ प्रजापतयेकांडऋषयेस्वाहा ॥



---

१ समेचदिवसेकुर्यादेवकोत्थापनंबुधः ॥ षष्ठंचविषमंनेष्टमुक्तापंचमसप्तमौ ॥ २ श्रावण्यामुपाकर्म ( वेदग्रहणं ) कार्यं ॥

प्रजापतयेकांडऋषयइदं० ॥ ॐ प्रजापतेनत्वदेतां० रयीणाꣳस्वाहा ॥ प्रजापतयइदं० ॥ ॐ रयीणांपतिंयजतंबृहंतमस्मि
न्भरेनृतमंवाजसातौ ॥ प्रजापतिंप्रथमजाऋतस्ययजामदेवमधिनोब्रवीतुस्वाहा ॥ प्रजा० ॥ ॐ प्रजापतेत्वान्निधिपाःपुराणा ॥
देवानांपिताजनिताप्रजानां ॥ पतिर्विश्वस्यजगतःपरस्याः ॥ हविर्नोदेववि‍हवेजुषस्वस्वाहा ॥ प्रजापतय० ॥ ॐ तवेमेलो
काःप्रदिशोदिशिश्च परावतोनिवतउद्वतश्च ॥ प्रजापतेविश्वसृजीवधन्यइदंनोदेवप्रतिहर्यहव्यꣳस्वाहा ॥ प्रजापत० ॥
ॐ प्रजापतिंप्रथमंयज्ञियानां ॥ देवानामग्नेयजतंजयध्वं ॥ सनोददातुद्रविणꣳसुवीर्यं ॥ रायस्पोषंविष्यतुनाभिमस्मेस्वाहा ॥
प्रजापत० ॥ ॐ योरायईशेशतदायउक्थ्याः ॥ यःपशूनाꣳरक्षिताविष्टितानां ॥ प्रजापतिःप्रथमजाऋतस्य ॥ सहस्रधामा
जुषताꣳहविर्नःस्वाहा ॥ प्रजापत० ॥ ॐ साꣳहितीभ्योदेवताउपनिषद्भ्यःस्वाहा ॥ साꣳहितीभ्योदेवताउपनिषद्भ्यइदं० ॥
ॐ याज्ञिकीभ्योदेवताभ्यउपनिषद्भ्यःस्वाहा ॥ याज्ञिकीभ्योदेवताभ्यउपनिषद्भ्यइदं० ॥ ॐ वारुणीभ्योदेवताभ्यउपनिषद्भ्यः
स्वाहा ॥ वारुणीभ्योदेवताउपनिषद्भ्यइदं० ॥ ॐ ब्रह्मणेस्वयंभुवेस्वाहा ॥ ब्रह्मणइदं० ॥ ॐ सदस्पतयेस्वाहा ॥ सदसस्प
तयइ० ॥ ॐ सदसस्पतिमद्भुतंप्रियमिंद्रस्यकाम्यं ॥ सनिंमेधामयासिषꣳस्वाहा ॥ सदसस्पतयइदं० ॥ इतित्रयोदशा
ज्याहुतीर्हुत्वा ॥ समित्संन्नहनेजुहुयात् ॥ ततःब्रह्मचारीअग्न्युपस्थानंकृत्वा ॥ ॐ अग्नयेव्रतपतेकांडऋषिभ्यःप्राजापत्यव्रतं
चरिष्यामि ॥ तच्छकेयंतन्मेराध्यतां ॥ वायोव्रतपतेकांडऋषिभ्यःप्राजापत्यव्रतंचरिष्यामि ॥ तच्छकेयंतन्मेराध्यतां ॥
आदित्यव्रतपतेकांडऋषिभ्यःप्राजापत्यव्रतंचरिष्यामि ॥ तच्छकेयंतन्मेराध्यतां ॥ व्रतानांव्रतपतेकांडऋषिभ्यःप्राजापत्यव्रतं

चरिष्यामि ॥ तच्छंकेयंतन्मेराध्यतां ॥ इत्यग्निमुपस्थाय ॥ जयादिव्यस्तराष्ट्रभृत्ब्रह्मविसर्जनांते ॥ यस्य० प्राजापत्यव्रताख्येनकर्मणाभग० ॥ ॥ इतिप्राजापत्यव्रतम् ॥ ॥ ॥ ॥ ॥

॥ ६५ ॥ अथप्राजापत्यउत्सर्जनं ॥ आचम्य० इमंअमुकशर्माणंबटुंप्राजापत्यव्रतोत्सर्जनेनकर्मणासंस्करिष्ये ॥ ऋष्यर्चनादिहोमांतंपूर्ववत्कुर्यात् ॥ ब्रह्मचारीअग्निमुपस्थाय ॥ अग्नयेव्रतपतेकांडऋषिभ्यःप्राजापत्यव्रतमचारिषं ॥ तदशकंतन्मेराधि ॥ वायोव्रतपते० चारिषं ॥ तदशकंतन्मेराधि ॥ आदित्य० राधि ॥ व्रतानांव्रतपते० राधि ॥ इत्यग्निमुपस्तिष्ठेत् ॥ जयादिव्यस्तराष्ट्रभृद्ब्रह्मविसर्जनांतंकृत्वा ॥ यस्यस्मृ० अनेनप्राजापत्यव्रतोत्सर्जना० प्रीयतां० ॥ ॥ ॥

## ॥ ६६ ॥ अथसौम्यव्रतं ॥

श्रीः ॥ उदगयनेपर्वणिबटोर्वपनंकृत्वाग्रामाद्बहिःसमीपेजलाशयेकुर्यात् ॥ आचार्यःकुमारंदक्षिणतउपविश्यस्वयमुत्तरआसीनः ॥ आचम्यप्राणानायम्यदेशकालौसंकीर्त्य ॥ इमंअमुकशर्माणंकुमारंसौम्यव्रतेनसंस्करिष्ये ॥ तत्रादौनि० गणपति० स्वस्तिपु० मा० नां० करिष्ये ॥ तदंगंस्नानविधिंकरिष्ये ॥ पूर्ववत्स्नानविधिंकृत्वा ॥ ऋषीन्पूजयेत् ॥ अद्य० सौम्यव्रतांगंऋषिपूजनंकरिष्ये ॥ अस्मिन्पूगीफले ॐ भूर्भुवःसुवःसोमायकांडऋषयेनमः सोमकांडर्षिमावाहयामि ॥ अस्मि० ॐ भू० सांहितीर्देवताउपनिषद्भ्योनमः ॥ सांहितीर्देवताउपनिषदमावाहयामि ॥ अस्मि० ॐ भू० याज्ञिकीर्देवताउपनिषद्भ्योनमः ॥ याज्ञिकीर्देवताउपनिषदमा० ॥ अ० ॐ भू० वारुणीर्देवताउपनिद्भ्योनमः ॥ वारुणीर्देवताउपनिषदमा० ॥ अ०

ॐ भू० ब्रह्माणꣳस्वयंभुवेनमः ब्रह्माणꣳस्वयंभुवमावाहयामि ॥ अ० ॐ भू० सदसस्पतयेनमः सदसस्पतिमा० ॥ षोडशो
पचारैःसंपूज्य ॥ बटोःपूर्ववत्ऋषितर्पणंकुर्यात् ॥ यत्राग्निस्थाप्यतेति० पात्राणिप्रयुंज्य ॥ उष्णोदकंचतस्रऔदुंबरसमिधो
नूतनवस्त्रंचसकृत्प्रयुंज्य ॥ प्रोक्षणीसꣳस्काराद्यग्निमुखांतंकृत्वा ॥ चतुर्गृहीतमाज्यं ॥ ॐ सोमायकांडऋषयेस्वाहा ॥ सोमा
यकांडऋषयइदं० ॥ ॐ सोमोधेनुꣳसोमोअर्वंतमाशुंसोमोवीरंकर्मण्यंददातु ॥ सादन्यंविदथ्यꣳसभेयंपितुःश्रवणंयोददाशद
स्मैस्वाहा ॥ सोमायेदं० ॥ ॐ अषाढंयुत्सुपृतनासुपप्रिं ॥ सुवर्षामप्सांवृजनस्यगोपां ॥ भरेषुजाꣳसुक्षितꣳसुश्रवसं ॥ जयंतं
त्वामनुमदेमसोमःस्वाहा ॥ सोमायेदं० ॥ ॐ त्वꣳसोमक्रतुभिःसुक्रतुर्भूः ॥ त्वंदक्षैःसुदक्षोविश्ववेदाः ॥ त्वंवृषावृषत्वेभिर्म
हित्वा ॥ द्युम्नेभिर्द्युम्न्यभवोनृचक्षाःस्वाहा ॥ सोमायेदं० ॥ ॐ यातेधामानिहविषायजंतितातेविश्वापरिभूरस्तुयज्ञं ॥ गयः
स्फानःप्रतरणःसुवीरोवीरहाप्रचरासोमदुर्याꣳस्वाहा ॥ सोमायेदं० ॥ ॐ त्वमिमाओषधीःसोमविश्वाः ॥ त्वमापोअजनय
स्त्वंगाः ॥ त्वंमाततंथोर्वंतरिक्षं ॥ त्वंज्योतिषावितमोववर्थस्वाहा ॥ सोमायेदं० ॥ ॐ यातेधामानिदिवियापृथिव्यां ॥
यापर्वतेष्वोषधीष्वप्सु ॥ तेभिर्नोविश्वैःसुमनाअहेडन् ॥ राजन्सोमप्रतिहव्यागृभायस्वाहा ॥ सोमायेदं० ॥ ॐ साꣳहिती
भ्योदेवताभ्यउपनिषद्भ्यःस्वाहा ॥ साꣳहितीभ्योदेवताभ्यउपनिषद्भ्यइ० ॥ ॐ याज्ञिकीभ्योदेवताभ्यउपनिषद्भ्यःस्वाहा ॥
याज्ञिकी० इदं० ॥ ॐ वारुणीभ्योदेवताभ्यउपनिषद्भ्यःस्वाहा ॥ वारुणीभ्यो० इदं० ॥ ॐ ब्रह्मणेस्वयंभुवेस्वाहा ॥ ब्रह्मणे
स्वयंभुवइदं० ॥ ॐ सदसस्पतयेस्वाहा ॥ सदसस्पतयइदं० ॥ ॐ सदसस्पतिमद्भुतं० सिषꣳस्वाहा ॥ सदसस्पतयइदं० ॥
इतित्रयोदशाज्याहुतीर्हुत्वा ॥ ब्रह्मचारीउष्णोदकमुपस्पृश्य ॥ नमोवाचेइतिशांत्यनुवाकेनशांतिंकृत्वा ॥ ॐ नमोवाचेया

चोदितायाचानुदितातस्मैवाचेनमोनमोवाचेनमोवाचस्पतयेनमऋषिभ्योमंत्रकृद्भ्योमंत्रपतिभ्योमामामृषयोमंत्रकृतोमंत्रपतयः
परादुर्माहमृषीन्मंत्रकृतोमंत्रपतीन्परादांवैश्वदेवींवाचमुद्यासꣳशिवामदस्तांजुष्टांदेवेभ्यःशर्ममेद्यौःशर्मपृथिवीशर्मविश्वमिदंज
गत् ॥ शर्मंश्चंद्रश्चसूर्यश्चशर्मब्रह्मप्रजापती ॥ भूतंवदिष्येभुवनंवदिष्येतेजोवदिष्येयशोवदिष्येतपोवदिष्येब्रह्मवदिष्येसत्यंवं
दिष्येतस्माअहमिदमुपस्तरणमुपस्तृणउपस्तरणंमेप्रजायैपशूनांभूयादुपस्तरणमहंप्रजायैपशूनांभूयासंप्राणापानौमृत्योर्मापातं
प्राणापानौमामाहासिष्टंमधुमनिष्येमधुजनिष्येम० अवंतु ॥ शोभायैपितरोनुमदंतु ॥ ॐ शांतिःशांतिःशांतिः ॥ इतिशांतिं
पठित्वा ॥ बटुरुत्थाप्यघृताक्तचतस्रऔदुंबरसमिधमादाय ॥ ॐ पृथिवीसमित् । तामग्निःसमिंधे । साग्निꣳसमिंधे ।
तामहꣳसमिंधे । सामासमिद्धा । आयुषातेजसा । वर्चसाश्रिया । यशसान्ब्रह्मवर्चसेन ॥ अन्नाद्येनसमिंधताꣳ
स्वाहा ॥ पृथिव्यैइदं० ॥ ॐ अंतरिक्षꣳसमित् ॥ सावायुꣳसमिंधे ॥ तामहꣳसमिंधे ॥ सामासमिद्धा ॥ आयुषातेजसा ॥
वर्चसाश्रिया । यशसाब्रह्मवर्चसेन ॥ अन्नाद्येनसमिंधताꣳस्वाहा ॥ वायवइदं० ॥ ॐ द्यौःसमित् । तामादित्यःसमिंधे ॥
सादित्यꣳसमिंधे ॥ तामहꣳसमिंधे ॥ सामासमिद्धा ॥ आयुषातेजसा ॥ वर्चसाश्रिया ॥ यशसाब्रह्मवर्चसेन ॥ अन्नाद्ये
नसमिंधताꣳस्वाहा ॥ आदित्यायइदं० ॥ ॐ प्राजापत्यामेसमिदसिसपत्नक्षयणी ॥ भ्रातव्यहामेसिस्वाहा ॥ प्रजापत० ॥
इतिचतस्रससमिधाग्नौजुहुयात् ॥ अग्नयेव्रतपतेत्यादिअग्निमुपस्थाय ॥ ॐ अग्नयेव्रतपतेकांडऋषिभ्यःसौम्यव्रतंचरिष्यामि ॥
तच्छकेयं । तन्मेराध्यतां ॥ ॐ वायोव्रतपतेकांडऋषिभ्यःसौम्यव्रतंचरिष्यामि ॥ तच्छकेयं । तन्मेराध्यतां ॥ ॐ आदित्य
व्रतपतेकांडऋषिभ्यःसौम्यव्रतंचरिष्यामि ॥ तच्छकेयं । तन्मेराध्यतां ॥ व्रतानांव्रतपतेकांडऋषिभ्यःसौम्यव्रतंचरिष्यामि ॥

तच्छंकेयं । तन्मेराध्यतां ॥ इत्यग्निमुपतिष्ठेत् ॥ अथाचार्यःयुंजतेमनइतिकुमारंवाचयेत् ॥ ॐ युंजतेमनः । वृष्णोअश्व
स्यनिष्पंदसि ॥ ब्रह्मन्प्रवर्ग्येणप्रचरिष्यामः ॥ दशप्राचीः ॥ अपश्यंगोपामनिपद्यमानं ॥ देवस्यत्वा ॥ समुद्रायत्वा ॥
इषेपीपिहि ॥ धर्मयाते ॥ देवावैसत्रं ॥ परिश्रिते ॥ ब्रह्मन्प्रचरिष्यामः ॥ अग्निष्वावसुभिः ॥ शिरोवाएतद्यज्ञस्य ॥ देवस्य ॥
विश्वाआशाः ॥ घर्मयाते ॥ प्रजापतिं ॥ प्रजापतिः सविताभूत्वा ॥ इतिविंशतिपदानिकुमारंवाचयेत् ॥ अथवा ॥
युंजते । सविताइतिद्वयमनुवाकंवाचयेत् ॥ जयादीन्व्यस्तराष्ट्रभृतान्हुत्वा ॥ उष्णोदकमुपस्पृश्य ॥ शन्नोवातःपवतामित्य
नुवाकेनशांतिंकृत्वा ॥ ततःब्रह्मचारीचक्षुषीसंमील्यमौनीभूत्वाशिरोवेष्टनंचधृत्वासूर्यास्तसमयेगृहमागत्यांधइवतिष्ठन्नासी
नोवाग्यतः ॥ तद्वासोब्रह्मणेदद्यात् ॥ ॥ इतिसौम्यव्रतं ॥ ॥ ॥ ॥

॥ ६७ ॥ अथसौम्यव्रतोत्सर्जनं ॥ संवत्सरेपूर्णेतदानींआचार्यःआचम्यप्राणानायम्य० ॥ इमंअमुकशर्माणंकुमारंसौ
म्यव्रतोत्सर्जनेनकर्मणासंस्करिष्ये ॥ स्नानविधिंऋष्यर्चनंहोमादिपूर्ववत्कृत्वा ॥ चतस्रःसमिधःअग्नौजुहुयात् ॥ ॐ द्यौःस
मित्० समिंधतांस्वाहा । आदित्यायइ० ॥ ॐ अंतरिक्षंसमित्० तांस्वाहा ॥ वायवइदं० ॥ ॐ पृथिवीसमित्०
तांस्वाहा ॥ अग्नय० ॥ ॐ प्राजापत्या० भ्रातृव्यहामेसिस्वाहा ॥ प्रजाप० ॥ उपस्थानं ॥ आदित्यव्रतपतेकांडऋषिभ्यः
सौम्यव्रतमचारिषं ॥ तदशकं । तन्मेराधि ॥ वायोव्रतपतेकांड० ॥ अग्नयेव्रतपते० ॥ व्रतानांव्रतपते० ॥ ततःयुंजतेइत्या
दिवाचयेत् ॥ संमीलनादिवर्जयेत् ॥ कृतस्य० ब्रह्मणेवरंदद्यात् ॥ भूयसींदद्यात् ॥ ॥ इतिसौम्यव्रतोत्सर्जनं ॥ ॥

## ॥ ६८ ॥ अथाग्नेयव्रतं ॥

श्रीः ॥ अथाचार्योब्रह्मचारिणःवपनंकारयित्वा ॥ आचम्यप्राणानायम्य ॥ इमंअमुकशर्माणंकुमारंआग्नेयव्रतेनकर्मणासꣳस्करिष्ये ॥ तत्रादौनिर्विघ्नतासिद्ध्यर्थंगणपतिपूजनंस्वस्तिपु० मा० नां० करिष्ये ॥ कुर्यात् ॥ ॐ भूर्भुवःसुवःअग्नयेकांडऋषिभ्योनमः ॥ अग्निंकांडऋषिमावाह० ॥ अ० ॐ भू० साꣳहितीर्देवताउपनिषद्भ्योन० ॥ अ० ॐ भू० याज्ञिकीर्देवताउपनिषद्भ्यो० ॥ अ० ॐ भू० वारुणीर्देवताउपनिषद्भ्योन० ॥ अ० ॐ भू० ब्रह्मणेस्वयंभुवेन० ॥ ब्रह्माणꣳस्वयंभुवमावाहयामि ॥ अ० ॐ भू० सदसस्पतयेनमः । सदसस्पतिमा० ॥ षोडशोपचारैःसंपूज्य ॥ ब्रह्मचारीनिवीतीभूत्वातर्पणंकुर्यात् ॥ यत्राग्निस्थाप्यतेतिअग्निमुखांतंकृत्वा ॥ प्रधानहोमंकुर्यात् ॥ चतुर्गृहीतमाज्यं ॥ ॐ अग्नयेकांडऋषयेस्वाहा ॥ अग्नयेकांडऋषयेदं० ॥ ॐ अग्नेनयसुपथारायेअस्मान्विश्वानिदेववयुनानिविद्वान् ॥ युयोध्यस्मज्जुहुराणमेनोभूयिष्ठांतेनमउक्तिंविधेमस्वा० अग्नयइदं० ॥ ॐ प्रवःशुक्रायभानवेभरध्वं ॥ हव्यंमतिंचाग्नयेसुपूतं ॥ योदैव्यानिमानुषाजनूꣳषि ॥ अंतर्विश्वानिविद्मनाजिगातिस्वाहा ॥ अग्नय० ॥ ॐ अच्छागिरोमतयोदेवयंतीः ॥ अग्निंयंतिद्रविणंभिक्षमाणाः ॥ सुसंदृशꣳसुप्रतीकꣳस्वंचं ॥ हव्यवाहमरतिंमानुषाणाꣳस्वाहा ॥ अग्नयइदं० ॥ ॐ अग्नेत्वमस्मद्युयोध्यमीवाः ॥ अनग्नित्राअभ्यमंतकृष्टीः ॥ पुनरस्मभ्यꣳसुवितायदेव ॥ क्षांविश्वेभिरजरेभिर्यजत्रस्वाहा ॥ अग्नयइ० ॥ ॐ अग्नेत्वंपारयानव्योअस्मान् ॥ स्वस्तिभिरतिदुर्गाणिविश्वा ॥ पूश्चपृथ्वीबहुलानउर्वी ॥ भवातोकायतनयायशंयोःस्वाहा ॥ अग्नयइ० ॥ ॐ प्रकारवोमननावच्य

मानाः ॥ देवद्रीचींन्नयथदेवयंतः ॥ दक्षिणावाड्वाजिनीप्राच्यैति ॥ हविर्भरंत्यग्नयेघृताचीस्वाहा ॥ अग्नयइदं० ॥ ॐ सा१ंहि तीभ्योदेवताभ्यउपनिषद्भ्यःस्वाहा ॥ सा१ंहिती० इदं० ॥ ॐ याज्ञिकीभ्योदे० ॥ ॐ वारुणीभ्योदेव० ॥ ॐ ब्रह्मणेस्वयंभुवे स्वाहा० ॥ ॐ सदसस्पतयेस्वाहा० ॥ ॐ सदंसस्पति० शिष१ंस्वाहा ॥ सदसस्पतयइदं० ॥ त्रयोदशाज्याहुतीर्हुत्वा ॥ ब्रह्म चारीउपस्थानंकुर्यात् ॥ ॐ अग्नयेव्रतपतेकांडऋषिभ्यः ॥ अग्नयेव्रतंचरिष्यामि । तच्छकेयं । तन्मेराध्यतां । वायोव्रतपते० ॥ आदित्यव्रतपते० ॥ व्रतानांव्रतपतेका० ॥ इत्यग्निमुपतिष्ठेत् ॥ आचार्यःजयादिव्यस्तराष्ट्रभृद्ब्रह्मविसर्जनांते ॥ कृतस्य० आग्नेय० प्रीयतां ॥ ब्राह्मणान्भोजयित्वाशिषोवाचयित्वाभूयसींदद्यात् ॥ ॥ इत्याग्नेयव्रतं ॥ ॥ ॥

॥ ६९ ॥ अथाग्नेयव्रतोत्सर्जनं ॥ संवत्सरपूर्णेतदानींआचम्यप्राणानायम्यइमंकुमारंअमुकशर्माणंआग्नेयव्रतोत्सर्जने नकर्मणास१ंस्करिष्ये ॥ तदंगंग० पु० मा० नां० क० ॥ ऋष्यर्चनादिपूर्ववत्कुर्यात् ॥ उपस्थानेविशेषः ॥ अग्नयेव्रतपतये कांडऋषिभ्यःआग्नेयव्रतमचारिषं ॥ तदशकं । तन्मेराधि ॥ वायोव्रतपते० ॥ आदित्यव्रतपते० ॥ व्रतानांव्रतपते० ॥ यस्य० आग्नेयव्रतोत्सर्जनाख्येनक० तां ॥ ॥ इत्याग्नेयव्रतोत्सर्जनं ॥ ॥ ॥ ॥

## ॥ ७० ॥ अथवैश्वदेवव्रतं ॥

श्रीः ॥ आचार्योब्रह्मचारिणःकेशान्वापयित्वा ॥ स्नानंकुर्यात् ॥ आसनेउपविश्यआचम्यप्राणानायम्यदेशकालौसंकीर्त्य ॥ इमंअमुकशर्माणंकुमारंवैश्वदेवव्रतेनकर्मणास१ंस्करिष्ये ॥ तत्रादौनि० ग०पु०मा० नां० करिष्ये ॥ कुर्यात् ॥ ॐ भू० विश्वे

भ्योदेवेभ्यःकांडऋषिभ्योनमः ॥ विश्वान्देवान्कांडऋषिनावा० ॥ अ० ॐ भू० साꣳहितीभ्योदेवताभ्यउपनिषद्भ्योनमः ॥
साꣳहि० ॥ अ० ॐ भू० याज्ञिकीभ्योदेवताभ्यउपनिषद्भ्यो० ॥ ॐ भू० वारुणीभ्योदेवताभ्यउपनिषद्भ्योन० ॥ अ० ॐ भू०
ब्रह्मणेस्वयंभुवेनमः० ॥ अ० ॐ भू० सदसस्पतये० सदसस्पतिमा० ॥ षोडशोपचारैःसंपूज्य ॥ तर्पणंकृत्वा ॥ यत्राग्निस्थाप्यते
तिअग्निमुखांतंकृत्वा ॥ चतु० ॥ ॐ विश्वेभ्योदेवेभ्यःकांडऋषिभ्यःस्वाहा ॥ विश्वेभ्योदेवेभ्यःकांडऋषिभ्यइ० ॥ ॐ आनोविश्वे
अस्क्रागमंतुदेवाः ॥ मित्रोअर्यमावरुणःसजोषाः ॥ भुवन्यथानोविश्वेवृधासः ॥ करत्सुषाहाविथुरन्नशवःस्वाहा ॥ विश्वे
भ्योदेवेभ्यइदं० ॥ ॐ शन्नोदेवाविश्वदेवाभवंतु ॥ शꣳसरस्वतीसहधीभिरस्तु ॥ शमभिषाचःशमुरातिषाचः ॥ शन्नोदिव्याः
पार्थिवाःशन्नोअप्याःस्वाहा ॥ विश्वेभ्योदेवेभ्यइदं० ॥ ॐ येसवितुःसत्यसवस्यविश्वे ॥ मित्रस्यव्रतेवरुणस्यदेवाः ॥ तेसौभ
गंवीरवद्गोमदप्नः ॥ दधातुनद्रविणंचित्रमस्मेस्वाहा ॥ विश्वेभ्योदेवेभ्यइदं० ॥ ॐ अग्नेयाहिदूत्यंवारिषेण्यः ॥ देवाꣳअच्छा
ब्रह्मकृतागणेन ॥ सरस्वतींमरुतोअश्विनापः ॥ यक्षिदेवान्रत्नधेयायविश्वान्स्वाहा ॥ विश्वेभ्योदेवेभ्यइदं० ॥ ॐ द्यौःपि
तःपृथिविमातरध्रुक् ॥ अग्नेभ्रातर्वसवोमृडतानः ॥ विश्वआदित्याअदितेसजोषाः ॥ अस्मभ्यꣳशर्मबहुलंवियंतस्वाहा ॥
विश्वेभ्योदेवेभ्यइ० ॥ ॐ विश्वेदेवाःशृणुतेमꣳहवंमे ॥ येअंतरिक्षेयउपद्यविष्ठ ॥ येअग्निजिव्हाउतवायजत्राः ॥ आसद्यास्मि
न्बर्हिषिमादयध्वꣳस्वाहा ॥ विश्वेभ्योदे० ॥ ॐ साꣳहितीभ्योदेवताभ्यउपनिषद्भ्यःस्वाहा ॥ साꣳहिती० इदं० ॥ ॐ याज्ञि
कीभ्योदेवताभ्यउपनि० इदं० ॥ ॐ वारुणीभ्यो० ॥ ॐ ब्रह्मणेस्वयंभुवेस्वाहा ॥ ब्रह्मणइदं० ॥ ॐ सदसस्पतयेस्वाहा ॥
सदस० ॥ ॐ सदसस्पति० ꣳस्वाहा ॥ उपस्थानं ॥ अग्नयेव्रतपतयेकांडऋषिभ्योवैश्वदेवव्रतमचारिषं ॥ तच्छकेयं ॥ तन्मे

राध्यतां ॥ वायोव्रतपते० ॥ आदित्यव्रतपते० ॥ व्रतानांव्रतपते० ॥ इत्यग्निमुपस्थाय ॥ ततःजयादिव्यस्तराष्ट्रभृद्ब्रह्मवि सर्जनांते ॥ कृतस्य० यस्यस्मृत्या० प्रीयतां० ॥ ब्राह्मणान्भोजयित्वाशिषोवाचयित्वा ॥ ॥ इतिवैश्वदेवव्रतं ॥ ॥

॥ ७१ ॥ वैश्वदेवव्रतोत्सर्जनं ॥ संवत्सरेपूर्णेतदानींआचम्यप्राणानायम्य ॥ इमंअमुकशर्माणंबटुंवैश्वदेवव्रतोत्सर्जने नकर्मणासंस्क० ॥ गणपतिपूजनऋष्यर्चनहोमादिपूर्ववत् ॥ उपस्थानं ॥ ॐ अग्नयेव्रतपतयेकांडऋषिभ्योवैश्वदेवव्रतम चारिषं ॥ तदशकं ॥ तन्मेराधि ॥ वायोव्रतपते० आदित्यव्रत० ॥ व्रतानांव्रतपते० ॥ यस्यस्मृ० वैश्वदेवव्रतोत्सर्जना ख्येनकर्मणाभगवान्परमेश्वरःप्रीयतां ॥ ॥ इतिवैश्वदेवव्रतोत्सर्जनं ॥ ॥ ॥ ॥

## ॥ ७२ ॥ प्राजापत्यादिचैकतंत्रेणव्रतप्रकारः ॥

श्रीः ॥ आचम्यप्राणानायम्यदेशकालौसंकीर्त्य ॥ इमंअमुकशर्माणंबटुंप्राजापत्यसौम्याग्नेयवैश्वदेवव्रतंचैकतंत्रेणसंस्करि ष्ये ॥ गणपतिपूजनादिनांदिश्राद्धांतंकुर्यात् ॥ ऋषीन्संपूज्य ॥ अग्निप्रतिष्ठाद्यग्निमुखांते ॥ सर्वेषांव्रतानांयथाक्रमेणपूर्व वद्धोमोपस्थानानि सौम्यव्रतोक्तपृथिवीसमिदितिसमिदाधानादिसर्वंकृत्वा ॥ सर्वत्रहोमांतेजयादिहोमंचसकृदेव ॥ यस्य० अनेनप्राजापत्यादिव्रतचतुष्टयाख्येनकर्मणाभगवान्परमेश्वरःप्रीयतां० ॥ ॥ इतिव्रतचतुष्टयविधिः ॥ ॥

---

१ श्रावण्यांप्रौष्ठपद्यांवावैशाख्यामपिवाद्विज ॥ एकतंत्रेणवाकुर्यादेतद्व्रतचतुष्टयं ॥ प्राजापत्यसौम्याग्नेयवैश्वदेवएतत् व्रतचतुष्टयंएकतंत्रेणवा कुर्यात् ॥

## ॥ ७३ ॥ अथगोदानव्रतं ॥

श्रीः ॥ तत्रषोडशेवर्षेब्रह्मचारिणाकार्यं ॥ आचम्यप्राणानायम्यदेश० ॥ इमंअमुकशर्माणंकुमारंगोदानव्रतेनकर्मणासं स्क० ॥ तत्रादौग० पु० मा० नां० इडाहवाचनंचक० ॥ कुर्यात् ॥ अग्निप्रतिष्ठापनादिसर्वंचौलवत् कुर्यात् ॥ शिखामात्र मवशिष्यसर्वाकेशान्वापयित्वा ॥ स्नापयित्वानूतनवस्त्रेधृत्वापूर्णपात्रमुद्वास्य ॥ आचार्यायगांदत्वा ॥ ब्रह्मणेवरंदद्यात् ॥ ब्राह्मणान्भोजयित्वाशिषोवाचयित्वा ॥ यस्यस्मृ० प्री० ॥ ॥ इतिगोदानव्रतं ॥ ॥

## ॥ ७४ ॥ समावर्तनंब्रह्मचारिणःसाधारणव्रतलोपप्रायश्चित्तंच ॥

श्रीः ॥ ततोबटुःआचम्यप्राणानायम्यदेशकालौसंकीर्त्य ॥ ममउपनयनप्रभृतिस्नातकशुभलग्नपर्यंतंब्रह्मचारिव्रतलोपशौचा चमनस्नानहीनसंध्यावंदनजपअग्निलोपभिक्षाराहित्यशूद्रादिदर्शनस्पर्शनकौपीनकटिसूत्रमेखलादंडाजिनरहितदंतधावनकृ तयज्ञोपवीतवर्जनादर्शनिरीक्षणपुष्पमालाधारणगंधानुलेपनक्षारलवणभोजनतत्कालमौनाभावपर्युषितान्नभोजननियतमूत्रपु रीषोत्सर्जनतत्कालशौचाभावस्वाध्यायाध्ययनलोपदिवासुप्ताभक्ष्यभक्षणक्रमुकभक्ष्यपर्णतांबूलक्षौरक्रियाखट्वासनतैलाभ्यंजन कांस्यपात्रभोजनस्रग्धारणअश्वारोहणगजारोहणांदोलिकाछत्रचामरमणिभूषणादित्रयस्त्रिंशन्निमित्तानांसर्वेषांपापानांप्राय श्चित्तार्थंप्रत्येकंकृच्छ्रप्रत्याम्नायद्वारायथाशक्तिहिरण्यंतुभ्यमहंसंप्रददेनमम ॥ तेनश्रीपापापहामहा वि० ॥

॥ ७५ ॥ वेदव्रतानांलोपजनितप्रायश्चित्तं ॥ ब्रह्मचारीआचम्यप्राणानायम्यदेशकालौसंकीर्त्यममप्राजापत्यादिव्र

तचतुष्टयलोपजनितप्रत्यवायपरिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थंप्रतिव्रतंलोपनिमित्तंप्रतिकृच्छ्रंयथाशक्तिगोनिष्क्रयद्रव्यदानप्र त्याम्नायद्वारातथाचममगोदानव्रतलोपजनितप्रत्यवायपरिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थंकृच्छ्रत्रयप्रायश्चित्तंएवंसप्तकृच्छ्रात्मकं यथाशक्तिगोनिष्क्रयद्रव्यदानप्रत्याम्नायद्वाराअहमाचरिष्ये ॥ प्रायश्चित्तीयद्रव्यंब्राह्मणायदातुमहमुत्सृज्ये ॥ तेनश्रीपापाप हामहाविष्णुःप्रीयतां ॥ आचम्य० ममप्राजापत्यादिवेदव्रतलोपनिमित्तंतथाचगोदानव्रतलोपनिमित्तंचपाहित्रयोदशहोमंक रिष्ये ॥ पूर्ववत्पाहित्रयोदशहोमंकृत्वा ॥ ॥ ॥ ॥ ॥

## ॥ ७६ ॥ समावर्तनं ॥

श्रीः ॥ तदाब्रह्मचारीआचम्यप्राणानायम्य० ममवेदानधीत्यवेदव्रतादीनिपारंगत्वागुरोरनुज्ञयागृहस्थाश्रमयोग्यतास्वीका रार्थंब्रह्मचर्यानुष्ठानसंपूर्णफलावाप्त्यर्थंस्नातकाख्यंकर्मकरिष्ये ॥ तत्रादौनिर्विघ्नतासिध्यर्थंगणपतिपूजनं० पु० मा० नां० च करिष्ये ॥ उक्तरीत्याकुर्यात् ॥ विधिवत्प्रतिसरसूत्रंबध्वा ॥ प्रागुदयाद्व्रजंप्रविश्यांतर्लोम्णाचर्मणाद्वारमपिधायास्तेनेनमे तदहरादित्योभितपेत् ॥ आचार्यायधेनुंदत्वा ॥ ममब्रह्मचर्यव्रतसंपूर्तयेआचार्याययथाशक्तिद्रव्यद्वारागोदानंक० ॥ यज्ञ साधन० ॥ इदंगोनिष्क्रयीभूतंद्रव्यंदातुमहमुत्सृज्ये ॥ तेनानुज्ञातःस्नातकंकुर्यात् ॥ मध्यंदिनेयत्राग्निस्थाप्यतेतिपात्रप्रयो गांते ॥ पलाशसमित्सूत्रेवस्त्रेमणियुगꣳस्रक्सुगंधद्रव्यकर्णाभरणद्वयंशीतोष्णांबुक्षुरकटयवछत्रदंडाजिनदर्पणोपानद्द्वय कुशशकृत्स्नानचूर्णोदुंबरकाष्ठानिप्रयुंज्यात् ॥ ततःआज्यभागांतंकृत्वा ॥ इमꣳस्तोममितिपालाशीꣳसमिधमग्नावाधाय ॥

ॐ इमꣳस्तोममर्हतेजातवेदसेरथमिवसंमहेमामनीषया ॥ भद्राहिनःप्रमतिरस्यसꣳसद्यग्नेसख्येमारिषामावयंतवस्वाहा ॥ अग्नयेजातवेदसइदं० ॥ अपरेणाग्निंकटउपविश्य ॥ त्रीण्याशलल्यात्रिभिर्दर्भपिंजूलैःशलालुग्लप्सेनतूष्णींकेशांनिनयेत् ॥ त्रियायुषमितिक्षुरमभिमंत्र्य ॥ ॐ त्रियायुषंजमदग्नेःकश्यपस्यत्र्यायुषं ॥ यद्देवानांत्र्यायुषंतन्मेअस्तुत्र्यायुषं ॥ शिवोनामासीतियजुषात्रप्त्रेक्षुरंदध्यात् ॥ ॐ शिवोनामासिस्वधितिस्तेपितानमस्तेअस्तुमामाहिꣳसीः ॥ अपाꣳसꣳसर्जनाद्याकेशनिधानात्समानं ॥ उष्णेनवायउदकेनेत्युष्णोदकंशीतोदकंनिनीय ॥ ॐ उष्णेनवायवुदकेनह्यदितिःकेशान्वपतु ॥ आपउंदंत्विति तेनोदकेनकुमारस्यशिरउनत्ति ॥ ॐ आपउंदंतुजीवसेदीर्घायुत्वायवर्चसे ॥ ज्योक्चसूर्यंदृशे ॥ त्रीꣳस्त्रीन्दर्भान्पूर्वाग्रान्पूर्वे अंतर्धाय ॥ येनावपदितिचतसृभिःमंत्रैःप्रतिमंत्रंप्रदक्षिणंप्रवपति ॥ ॐ येनावपत्सविताक्षुरेणसोमस्यराज्ञोवरुणस्यविद्वान् ॥ तेनब्रह्माणोवपतेदमस्यायुष्मांजरदष्टिर्यथासत् ॥ अमुकशर्मन् ॥ इतिशिरःपुरस्तात्क्षुरेणप्रवपेत् ॥ अपउ० ॥ कुमारस्यमाताब्रह्मचारीवायवसहितंअनडुहशकृत्पिंडंगृहीत्वादक्षिणतःस्थित्वा ॥ यत्क्षुरेणेतिप्रथमंवपंतमाचार्यमनुमंत्रयते ॥ ॐ यत्क्षुरेणमर्चयतासुपेशसावप्तावपसिकेशान् ॥ शुंधिशिरोमास्यायुःप्रमोषीः ॥ आचार्यस्तान्केशान्शकृत्पिंडेनिधाय ॥ अप० ॥ ततःपुनस्त्रीन्दर्भान्दक्षिणतोंतर्धाय ॥ ॐ येनपूषाबृहस्पतेरग्नेरिंद्रस्यचायुषेवपत् ॥ तेनास्यायुषेवपसौश्लोक्यायस्वस्तये ॥ दक्षिणतःकेशान्वापयित्वातान्केशान्शकृत्पिंडेनिधाय ॥ अप० ॥ पुनस्त्रीन्दर्भान्पश्चिमतोंतर्धाय ॥ ॐ येनभूयश्चरात्ययं ज्योक्चपश्चातिसूर्यं ॥ तेनास्यायुषेवपसौश्लोक्यायस्वस्तये ॥ इतिपश्चात्केशान्वापयित्वातान्केशान्शकृत्पिंडेनिधाय ॥ अप० ॥ पुनस्त्रीन्दर्भानुत्तरतोंतर्धाय ॥ ॐ येनपूषाबृहस्पतेरग्नेरिंद्रस्यचायुषेवपत् ॥ तेनतेवपाम्यसौअमुकशर्मन्नायुषावर्च

सायथाज्योक्सुमनाअसाः ॥ इत्युत्तरकेशान्वापयित्वा ॥ तान्केशान्शकृत्पिंडेनिधाय ॥ अप० ॥ ततोमाताब्रह्मचारीवा ॥
उप्त्वायकेशामितिकेशसहितंशकृत्पिंडंऔदुंबरमूलेदर्भस्तंभेवानिदधाति ॥ ॐ उप्त्वायकेशान्वरुणस्यराज्ञोबृहस्पतिःसविता
सोमोअग्निः ॥ तेभ्योनिधानंबहुधान्वविंदन्नंतराद्यावापृथिवीअपःसुवः ॥ सम्यक्स्नापयित्वा ॥ जघनार्धेव्रजंस्योपविश्य ॥
मेखलांविस्रस्य ॥ ब्रह्मचारिणेदद्यात् ॥ असौब्रह्मचारी ॥ इदमहमितियजुषोदुंबरमूलेदर्भस्तंभेवाअप्रकाशंनिदधाति ॥
ॐ इदमहममुष्यामुष्यायणस्यपाप्मानमुपगूहाम्युत्तरोसौद्विषद्भ्यः ॥ पुनःब्रह्मचारीआपोहिष्ठा० हिरण्यवर्णाइतिमंत्रेणस्ना
पयित्वा ॥ अन्नाद्यायेत्यौदुंबरेणदंतधावनंकृत्वा ॥ ॐ अन्नाद्यायव्यूहध्वंदीर्घायुरहमन्नादोभूयासं ॥ सोमोराजायमागमत्समें
मुखंप्रवेक्ष्यसिभगेनसहवर्चसा ॥ स्नानीयेनोद्वर्त्यस्नात्वा ॥ किंतुहरिद्राक्तंकुर्वंति ॥ स्नात्वाचम्यतिलकानिधृत्वा ॥ सोमस्य
तनूरसीतियजुषाअहतमुत्तरंवासःपरिधाय ॥ ॐ सोमस्यतनूरसितनुवंमेपाहिसामातनूराविश ॥ आचम्य ॥ सार्वसुरभिचं
दनेन ॥ नमोग्रहायचेतिप्रतिनमस्कारंदेवताभ्योरक्षणायदत्वा ॥ ॐ नमोग्रहायचाभिग्रहायचनमःशाकजंजभाभ्यांनमस्ता
भ्योदेवताभ्योयाअभिग्राहिणीः ॥ अप्सरस्वित्यात्मानंगंधमनुलिप्य ॥ ॐ अप्सरसःसुयोगंधोगंधर्वेषुचयद्यशः ॥ दैवोयामा
नुषोगंधःसमागंधःसुरभिर्जुषंतां ॥ मणिं१सौवर्णं१सोपिधानं१सूत्रप्रोतमियमोषधेत्युदकपात्रेत्रिःप्रदक्षिणंपरिप्लाव्य ॥ ॐ इय
मोषधेत्रायमाणासहमानासहस्वती ॥ सामाहिरण्यवर्चसंब्रह्मवर्चसिनंमाकरोतु ॥ अपाशोसीत्यर्धर्चेत्रयेणकंठेमणिंबध्वा ॥
बादरमणिमप्येवंकृत्वा ॥ सव्येपाणौतूष्णींबध्वा ॥ ॐ अपाशोस्युरोमेसास१शारीः ॥ शिवोमोपतिष्ठस्वदीर्घायुत्वायशतशा

१ गवाद्वारेद्वारदेशेवितस्तिद्वयसंमिते ॥ तदूर्ध्वंपश्चिमेभागेजवनार्द्धःसउच्यते ॥

रदाय ॥ शतꣳशरद्भ्य आयुषेवर्चसेजीवात्वैपुण्याय ॥ अहतमुत्तरंवासोरेवतीस्त्वेतिसमानं ॥ ॐ रेवतीस्त्वाव्यक्षणन्कृत्तिका
श्चाकृंतꣳस्त्वा ॥ धियोवयंनवन्नाआवृंजन्त्सहस्रमंताꣳअभितोअयच्छन् ॥ देवीर्देवायपरिधीसवित्रेमहत्तदासामभवन्महि
त्वनं ॥ याअकृंतंनवयन्याअतन्वतयाश्चदेवीरंतानभितोददंत ॥ तास्त्वादेवीर्जरसेसंव्ययंत्वायुष्मानिदंपरिधत्स्ववासः ॥
परिधत्तधत्तवाससैनꣳशतायुषंकृणुतदीर्घमायुः ॥ बृहस्पतिःप्रायच्छद्वासएतत्सोमायराज्ञेपरिधातवाउ ॥ जरांगच्छासिपरिध
त्स्ववासोभवाकृष्टीनामभिशस्तिपावा ॥ शतंचजीवशरदःसुवर्चारायश्चपोषमुपसंव्ययस्व ॥ तस्यवस्त्रस्यदशायांकर्णाभरणं
बध्वा ॥ चतुर्गृहीतमाज्यं ॥ आयुष्यमितिप्रतिमंत्रमष्टावाज्याहुतीर्हुत्वा ॥ ॐ आयुष्यंवर्चस्यꣳसुवीर्यꣳरायस्पोषमौद्भिदं ॥
इदꣳहिरण्यंजैत्रायाविशतादिमाꣳस्वाहा ॥ हिरण्यायेदं० ॥१॥ ॐ उच्चैर्वाजीपृतनाजीसत्रासाहंधनंजयं ॥ सर्वाःसमृद्धिर्ऋषयो
हिरण्येस्मिन्त्समाहिताःस्वाहा ॥ हिरण्यायेदं० ॥ २ ॥ ॐ शुनमहꣳहिरण्यस्यपितुरिवनामाग्रभैषं ॥ तंमाहिरण्यवर्चसंपुरु
षुप्रियंकुरुस्वाहा ॥ हिरण्या० ॥ ३ ॥ ॐ प्रियंमादेवेषुकुरुप्रियंमाब्रह्मणेकुरु ॥ प्रियंविश्वेषुशूद्रेषुप्रियꣳराजसुमाकुरुस्वाहा ॥
हिरण्याये० ॥ ४ ॥ ॐ यातिरश्चीनिपद्यसेहंविधरणीइति ॥ तांत्वाघृतस्यधर्यायजेसꣳराधनेमहꣳस्वाहा ॥ हिरण्या० ॥५॥
ॐ सꣳराधन्यैदेव्यैस्वाहा ॥ सꣳराधन्यैदेव्याइदं० ॥ ६ ॥ ॐ प्रसाधन्यैदेव्यैस्वाहा ॥ प्रसाधन्यैदेव्याइदं० ॥ ७॥ ॐ संम्रा
जंचविराजंचाभिश्रीर्याचनोगृहे ॥ लक्ष्मीराष्ट्रस्ययामुखेतयामासꣳसृजामसिस्वाहा ॥ लक्ष्म्याइदं० ॥ ८ ॥ समिधमिध्मस
न्नहनंचाग्नौप्रहृत्य० ॥ जयादिव्यस्तराष्ट्रभृतान्ब्रह्मविसर्जनांते ॥ आयुष्यमितिमंत्रेणप्रवर्तमेताभिरेवैकंदक्षिणकर्णेबध्वाता
भिसव्येद्वितीयं ॥ ॐ आयुष्यंवर्चस्यꣳसुवीर्यꣳरायस्पोषमौद्भिदं ॥ इदꣳहिरण्यंजैत्रायाविशतादिमां ॥ शुभिकेशिरइतिस्र

जꣳस्यावध्नीत ॥ ॐ शुभिके शिर आरोह शोभयन्ती मुखं मम ॥ मुखꣳहि मम शोभय भूयाꣳसं च भगं कुरु ॥ यामाहरदितिपुष्पमालिकां कंठेबध्वा ॥ ॐ यामाहरज्जमदग्निः श्रद्धायै कामायान्यै ॥ इमांत्वामपिनह्येहं भगेन सह वर्चसा ॥ यदांजनमित्यांजनेनचक्षुषीआंक्ते ॥ ॐ यदांजनं त्रैककुदं जातꣳहिमवतउपरि ॥ तेनवामांजेतेजसे वर्चसे बलायच ॥ मयिपर्वतेतिचतुर्णायजुषामेकेनव ॥ ॐ मयि पर्वतपुरुषं मयि पर्वतवर्चसं मयि पर्वतभेषजं मयि पर्वत आयुषं ॥ यन्मेवर्चइत्यादर्शमीक्षते ॥ ॐ यन्मेवर्चपरागतमात्मानमुपतिष्ठति ॥ इदंतत्पुनरादददे दीर्घायुत्वाय वर्चसे ॥ प्रतिष्ठेस्थइतियजुषोपानहौप्रतिमुच्य ॥ ॐ प्रतिष्ठेस्थोदेवतानांमामासंताप्तं ॥ प्रजापतेःशरणमसीतिछत्रं ॥ प्रजापतेः शरणमसि ब्रह्मणश्छादिर्विश्वजनस्यछायासि सर्वतोपाहि ॥ देवस्यत्वेतिवैणवदंडमादाय ॥ ॐ देवस्यत्वा० माददे ॥ द्विषतोवधायेंद्रस्य वज्रोसिवार्त्रघ्नः शर्ममेभवयत्पापं तंनिवारय ॥ वाचंयच्छत्यानक्षत्रोदयादुदितेषु नक्षत्रेषु प्राचीमुदीचींवादिशमुपनिष्क्रम्य ॥ देवीःषडुर्वीत्यर्धर्चादिशोमुपस्थाय ॥ ॐ देवीःषडुर्वीरुरुणः कृणोत विश्वेदेवास इहवीरयध्वं ॥ माहास्महि प्रजयामातनूभिर्मारधाम द्विषते सोमराजन् ॥ नक्षत्राणिचंद्रमसंचोपस्थाय ॥ अथापरꣳस्नानंतूष्णीमेवतीर्थेस्नात्वा ॥ तूष्णीꣳसमिधमादधाति ॥ अग्निपूजनादिकर्मशेषंसमाप्य ॥ अनेनसमावर्तनाख्येनकर्मणाभगवान्परमेश्वरःप्रीयतां ॥ कृतस्य० ब्राह्मणान्भोजयित्वाशिषोवाचयित्वा ॥ ॥ इतिस्नातकप्रयोगः ॥ . ॥

## ॥ ७७ ॥ विवाहः ॥

श्रीः ॥ विवाहदिनात्पूर्वेद्युःसद्योवापूर्वाह्णेसपत्नीकःकृताभ्यंगोधृतमांगलिकवेषःशुभासनेप्राङ्मुखउपविश्यस्वदक्षिणतःपत्नींत

दक्षिणतःसंस्कार्यंचोपवेश्य ॥ आचम्यप्राणानायम्य० ॥ कुलदेवतादीनांतांबूलसमर्पणंकृत्वाब्राह्मणान्नमस्कृत्य ॥ आचम्यप्राणानायम्यदेशकालौसंकीर्त्य ॥१॥ अमुकगोत्रोत्पन्नस्यामुकशर्मणःममपुत्रस्यवाअमुकनाम्न्याःममकन्यकायाःअद्य(श्वः)विवाहसंस्काराख्यंकर्मक० ॥ तदंगंगणपतिपूजनंपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धंकुलदेवतास्थापनंमंडपदेवतास्थापनंइडाहवाचनंअंकुरारोपणंकंकणबंधनंचकरिष्ये ॥ उक्तरीत्याकुर्यात् ॥ अन्यत्कुलाचारप्राप्तंकार्यं ॥ ॥ ॥

॥ ७८ ॥ सीमांतपूजनं ॥ कन्यादातामंगलवाद्यघोषपुरःसरंइष्टबंधुभिःसहितंवरगृहंगत्वाविधिनापूजनंकार्यं ॥ आचम्यदेशकालौसंकीर्त्य ॥ ममकन्यकायाःकरिष्यमाणविवाहांगभूतंशिष्टाचारप्राप्तंसीमांतेवरपूजनंचक० ॥ तदंगंगणपतिवरुणपूजनंचकरिष्ये ॥ गणपतिवरुणौसंपूज्य ॥ वरकुलगुरुंसंपूज्य ॥ वरंपादप्रक्षालनपूर्वकंगंधमाल्यवस्त्रादिभिःसंपूज्य ॥ कृतस्यभूयसींदद्यात् ॥ यथाचारंपायसदुग्धादिप्राशनंकारयेत् ॥ तांबूलंदत्वाउपानहौधृत्वा ॥ अश्वमारुह्यकन्यागृहस्यबहिर्द्वारपर्यंतंइष्टबध्वादिभिःसहगत्वातोरणंस्पृष्टाश्वश्वेकंचुकीवस्त्रंचदत्वाग्रहंप्रविश्यइत्याचारः ॥ ॥ इतिसीमांतपूजा ॥

॥ ७९ ॥ कन्यावरणं ॥ ( विवाहदिनकृत्यं ॥ ) अनुहवमितिशाकुनादिमंत्रान्विवाहागारमेत्यवाचयेत् ॥ ॐ अनुहवंपरिहवंपरीवादंपरिक्षिपं ॥ दुःस्वप्नंदुरुदितंतद्विषद्भ्योदिशाम्यहं ॥ अनुहूतꣳपरिहूतꣳशकुनेर्यदशाकुनं ॥ मृगस्यंश्रृतमक्ष्मणयातद्विषद्भ्योदिशाम्यहं ॥ आरात्तेअग्निरस्त्वारात्परशुरस्तुते ॥ निवातेत्वाभिवर्षतुस्वस्तितेस्तुवनस्पतेस्वस्तिमेस्तुवनस्पते ॥ नमःशकृत्सदेरुद्रायनमोरुद्रायशकृत्सदे ॥ गोष्ठमसिनमस्तेअस्तुमामाहिꣳसीःशुगसिनसिवज्रोनमस्तेअस्तुमामा

१ कन्यायाःस्वस्वकालेगर्भाधानादिसंस्कारा अकृतास्तेगर्भाधानादिचौलांताःविवाहकालेकर्तव्याः ॥ वासंस्कारलोपप्रायश्चित्तंकर्तव्यम् ॥

हिꣳसीः ॥ उद्गातेवंशकुनेसामंगायसिब्रह्मपुत्रइवसवनेषुशꣳससि ॥ स्वस्तिनः शकुनेअस्तुप्रतिनःसुमनाभव ॥ वरः प्राङ्मुखउपविश्यआचम्यप्राणानायम्यशुभतिथौ ॥ ममधर्मप्रजासंपत्यर्थꣳस्त्रियमुद्वह ॥ इतिसंकल्प्य ॥ ममशरीररक्षणार्थंआयुष्याभिवृध्यर्थंकंकणधारणंक० ॥ ॐ विश्वेत्तातेतिमंत्रेणकंकणंधारयेत् ॥ आचम्य० गृहस्थाश्रमस्वीकारार्थंद्वितीययज्ञोपवीतधारणंक० ॥ ॐ यज्ञोप० ॥ पुनराचम्य ॥ भोब्राह्मणाःयूयंमदर्थंकन्यांवृणीध्वमितिचतुरोब्राह्मणान्सर्वलक्षणसंपन्नान्कार्यकुशलान्प्रेषयित्वा ॥ तान्प्रसुग्मंतेतिद्वाभ्यामभिमंत्रयते ॥ ॐ प्रसुग्मंताधियसानस्यसक्षिणिवरेभिर्वराꣳअभिषुप्रसीदत ॥ अस्माकमिंद्रमुभयंजुजोषतियत्सौम्यस्यांधसोबुबोधति ॥ अनृक्षराऋजवःसंतुपंथायेभिःसखायोयंतिनोवरेयं ॥ समर्यमासंभगोनोनिनीयात्संजास्पत्यꣳसुयममस्तुदेवाः ॥ ॥ ॥ ॥ ॥

॥८०॥ वाग्दानं ॥ तेब्राह्मणाःवरपित्राबंधुवर्गादिसहिताःगंधाक्षतवस्त्रयुग्मभूषणतांबूलपुष्पमालादीन्गृहीत्वाकन्यादातृगृहंगत्वा ॥ बृहत्सामेतिमंत्रेणकन्यावामकरेकंकणंबध्नीयात् ॥ ततःब्राह्मणसहितःवरपिताप्राङ्मुखउपविश्य ॥ प्रत्यङ्मुखःकन्यादाताउपविशेत् ॥ किमिति ॥ ब्राह्मणाःअमुकप्रवरान्वितअमुकगोत्रोत्पन्नायामुकशर्मणःप्रपौत्राय । अमुकप्रवरान्वितअमुकगोत्रोत्पन्नायामुकशर्मणःपौत्राय । अमुकप्रव०अ०गो०अ०श०पुत्राय । अमुकप्र० अमुकगोत्रोद्भवअमुकशर्मणेवराय ॥ कन्यादाता । अमुकप्र० अमुकगोत्रोत्पन्नां अ० श० प्रपौत्रीं । अ० प्र० अ० गो०अ०श० पौत्रीं । अ०प्र०अ० गोत्रोद्भवां अ०नाम्नीं कन्यां ॥ वरपिता । भार्यात्वायवृणीमहे ॥ कन्यादातावृणीध्वं ॥ तस्मैकन्यार्थमागतायश्रीलक्ष्मीनारायणस्वरूपायदेवाग्निगुरुसन्निधौदास्यामीत्युक्त्वा॥ नर्यंप्रजांमेगोपाय०॥ कन्यादाताप्राङ्मुखउपविश्यवरपिताप्रत्यङ्मुखोपविश्यदेशकालौस्मृत्वाकरिष्य

माणकन्याविवाहांगभूतंवाग्दानमहंक०॥ करिष्यमाणवरविवाहांगभूतंकन्यानिरीक्षणंक० ॥ तदंगंग०वरु० क० ॥ गणपति
वरुणौसंपूज्य ॥ कन्यांपूजयेत् ॥दाताहरिद्राखंडपंचपूगीफलानिगंधाक्षतालंकृतानिगृहीत्वाअमुकप्रवरान्वितअमुकगोत्रोत्प
न्नायअ० प्रपौत्रायअ० पौत्राय अ० पुत्राय अ० नाम्नेवराय॥ अ० प्रवरान्वितअ० गोत्रोत्पन्नां अ० प्रपौत्रीं अ० पौत्रींअ०
पुत्रीं अ०नाम्नीं कन्यां ज्योतिर्विदादिष्टेमुहूर्तेदास्येइत्युक्त्वा ॥ अव्यंगेपतितेक्लीबेदशदोषविवर्जिते॥ इमांकन्यांप्रदास्यामिदेवा
ग्निद्विजसन्निधौ ॥ इतिवरपितृवस्त्रप्रांतेबध्वाग्रंथिंचंदनेनचर्चयेत् ॥ ततःपूर्ववत्वरपिताहरिद्राखंडादिगृहीत्वाअमुकगो
त्रायामुकशर्मवरविषयेभवंतोनिश्चिताभवंतुइतिदातृवस्त्रप्रांतेबध्वा॥ ततोदाता॥ वाचादत्तामयाकन्यापुत्रार्थंस्वीकृतात्वया ॥
कन्यावलोकनविधौनिश्चितस्त्वंसुखीभव ॥ वरपिता । वाचादत्तात्वयाकन्यापुत्रार्थंस्वीकृतामया ॥ वरावलोकनविधौनि
श्चितस्त्वंसुखीभव ॥ सौभाग्यवृध्यर्थंशचीपूजनंकार्यं ॥ कृतस्य० भूयसींदद्यात् ॥ ॥ इतिचंद्रचूडग्रंथेवाग्दानं ॥ ॥

॥ ८१ ॥ अथमधुपर्कः ॥ श्रीः ॥ आचम्यप्राणानायम्यदेशकालौसंकीर्त्य ॥ आचंद्रार्कमनेकवैशेषिकसुखसौभाग्यपरं
परावाप्त्यर्थंएकविंशतिसंख्याकोभयवंशपुरुषोत्तारकमहादानांगभूतंअमुकशर्मणेआगतायवरायइमंवरंमधुपर्केणपूजयिष्ये ॥
उदगग्रंकूर्चंनिदधाति ॥ राष्ट्रभृदसीतियजुषोपविशति ॥ वरः ॥ राष्ट्रभृदस्याचार्यसंदीमात्वद्योषं ॥ आपःपाद्याइतिदाता
प्राह ॥ वरः ॥ ॐ आपःपादावनेजनीर्द्विषंतंनिर्दहंतुमे ॥ अस्मिन्कुलेब्रह्मवर्चस्यसानि ॥ ताआपोभिमंत्र्य ॥ दक्षिणपादंपूर्वं
ब्राह्मणायप्रयच्छेत् ॥ अस्मिन्राष्ट्रे० ॥ प्रक्षालयितारंदातारंदक्षिणबाहुमुपस्पृश्य ॥ वरोमयिमहइतियजुषात्मानंप्रत्यभि
मृशेत् ॥ ॐ मयिमहोमयियशोमयींद्रियंवीर्यं ॥ अपउप० ॥ अधस्तादुपरिष्टाच्चकूर्चाभ्यांपरिगृह्य ॥ मृन्मयेनपात्रेणअर्हणी

॥ ५५ ॥

याआपइतिदाताप्राह ॥ अर्हणीयाआपः ॥ वरः ॥ आमागन्नित्यभिमंत्र्य ॥ ॐ आमागन्यशसावर्चसासꣳसृजपयसातेजसाच ॥ तंमाप्रियंप्रजानांकुर्वधिपतिंपशूनां ॥ दातांजलावेकदेशेआनीयमानेविराजोदोहोसीतियजुर्जप्त्वा ॥ विराजोदोहोसिविराजोदोहमशीय ॥ ममपद्यायविराज ॥ शेषंपुरस्तान्निनीयमाने ॥ वरः समुद्रंवइत्यभिमंत्रयते ॥ समुद्रंवःप्रहिणोमिस्वांयोनिमपिगच्छत ॥ अछिद्रःप्रजयाभूयासंमापरासेचिमत्पयः ॥ अत्रवासोगवादिकंयथाशक्तिदत्वा ॥ गंधमाल्यभूषणादिभिःवरमलंकृत्य ॥ यज्ञोपवीतीमंत्रेणद्वितीययज्ञोपवीतंचदत्वा ॥ पात्रेदधिमधुसꣳसृष्टंकाꣳसेनवर्षीयसापिधाय ॥ अधस्तादुपरिष्टाच्चकूर्चाभ्यांपरिगृह्य ॥ मधुपर्कइतिदाताप्राह ॥ मधुपर्कोमधुपर्कोमधुपर्कः ॥ त्रयैविद्यायाआमागन्नितिद्वाभ्यांमधुपर्कमभिमंत्र्य ॥ ॐ त्रयैविद्यायैयशोसियशसोयशोसिब्रह्मणोदीप्तिरसि ॥ तंमाप्रियंप्रजानांकुर्वधिपतिंपशूनां ॥ आमागन्यशसावर्चसासꣳसृजपयसातेजसाच ॥ तंमाप्रियंप्रजानांकुर्वधिपतिंपशूनां ॥ अमृतोपस्तरणमसीत्यपःपीत्वाचामेत् ॥ अमृतोपस्तरणमसि ॥ यन्मधुनइतिमधुपर्कंप्राश्य ॥ ॐ यन्मधुनोमधव्यंपरममन्नाद्यंवीर्यं ॥ तेनाहंमधुनोमधव्येनपरमेणान्नाद्येनवीर्येणपरमोन्नादोमधव्योसानि ॥ पुनःतूष्णींद्विःप्राश्य ॥ अमृतापिधानमसीत्यपःपीत्वा ॥ अमृतापिधानमसि ॥ हस्तंप्रक्षाल्यद्विराचम्य ॥ दातागौरित्युक्ते ॥ गौरसीतियजुषागामभिमंत्र्य ॥ गौरस्यपहतपाप्मावपाप्मानंजहि ॥ यज्ञोवर्धतामित्युपाꣳशूक्त्वा ॥ यज्ञोवर्धतांयज्ञस्यवृद्धिमनुवृद्धापचितिरस्यपचितिंमाकुर्वपचितोहंमनुष्यैषुभूयासं ॥ गौर्धेनुभव्या ॥ ॐ मातारुद्राणांदुहितावसूनाꣳस्वसादित्यानाममृतस्यनाभिः ॥ प्रनुवोचंचिकितुषेजनायमागामनागामदितिंवधिष्ट ॥ पिबतूदकंतृणान्यतु ॥

ॐ मुत्सृजतेत्युच्चैर्ब्रूयात् ॥ दातासिद्धमन्नंभूतमित्युक्ते ॥ वरः ॥ भूतं ॥ साविराट् ॥ तन्माक्षायितस्यतेशीयतन्मऊर्जंधाः ॥ इत्युपांशूक्त्वा ॥ ॐ कल्पयतेत्युच्चैर्ब्रूयात् ॥ भोजनंकुर्यात् ॥ ॥ इतिमधुपर्कः ॥ ॥ ॥ ॥

॥ ८२ ॥ सुमुहूर्तः ॥ ततःसुमूहूर्ते ॥ वस्त्रेणावृतकन्यासमीपंगत्वाहरिद्रादिनाशोभितेवेणुपात्रद्वयपूर्वापरभागेहस्तांतरालंस्थापयित्वा ॥ तन्मध्येवधूवरौतिष्ठेतां ॥ कुंकुमादिनाकृतस्वस्तिकांकितमंतःपटमुत्तरदशंधारयेयुः ॥ पूर्वाभिमुखंवरंपश्चिमाभिमुखींकन्यांतंडुलगुडजीरकाक्षतयुतांजलावुभाववस्थाप्य ॥ पुरंध्रियोमंगलगीतीःकुर्युः ॥ वधूवरौस्वेष्टदेवतांध्यायंतौमुदितौतिष्ठेतां ॥ मातुलौवधूवरयोरंजलीधृत्वा ॥ अथज्योतिषिकेनमंगलपद्यपाठपूर्वकतदेवलग्नमित्यादिसुमूर्हमस्त्विति पठिते ॥ वरःकन्यांदृष्ट्वाचक्षुषीउपसंहृत्य ॥ अभ्रातृघ्नीमितिजपित्वा ॥ ॐ अभ्रातृघ्नींवरुणापतिघ्नींबृहस्पते ॥ इंद्रापुत्रघ्नींलक्ष्म्यंतामस्यैसवितुःसुव ॥ अघोरचक्षुरितिअन्योन्यंसमीक्षेते ॥ ॐ अघोरचक्षुरपतिघ्न्येधिशिवापतिभ्यःसुमनाःसुवर्चाः ॥ जीवसूर्देवकामास्योनाशन्नोभवद्विपदेशंचतुष्पदे ॥ ॥ ॥ ॥ ॥

॥ ८३ ॥ विवाहमंत्राः ॥ हरिः ॐ नयेदेभ्योवृश्च्येतयद्वैश्वकर्मणानिजुहोतिसदस्यानेवतत्प्रीणात्यस्मेदेवासोवपुषेचिकित्सतयमाशिरादंपतीवाममश्नुतः ॥ पुमान्पुत्रोजायतेविंदतेवस्वथविश्वेअरपाएधतेगृहः ॥ आशीर्दायादंपतीवाममश्नुतामरिंष्टोरायःसचतांसमोकसा ॥ यआसिंचत्संदुग्धंकुंभ्यासहेष्टेनयामन्नमतिंजहातुसः ॥ सर्पिग्रीवीपीवर्यस्यजायापीवानःपुत्राअ

१ आदौकन्यादानंतदनंतरसुमूर्हमस्ति,सिंगाभट्टीविश्वप्रकाशादिग्रंथेषुद्रष्टव्यं ॥ २ आश्वलायनवरश्चेत्प्राङ्मुखीवधूः प्रत्यङ्मुखोवरः ॥ आपस्तंबोवरश्चेत्प्राङ्मुखोवरः ॥ इतिसंस्कारस्त्नमालायां ॥

कृशासोअस्य ॥ सहजानिर्यःसुमखस्यमानइंद्रायाशिरꣳसहकुंभ्यादात् ॥ आशीर्मऊर्जमुतसुप्रजास्त्वमिषंदधातुद्रविणꣳसव र्चसं ॥ संजयन्क्षेत्राणिसहसाहमिंद्रकृण्वानोअन्याꣳअधरान्त्सपत्नान् ॥ १ ॥ प्रजापतिःसोमꣳराजानमसृजत ॥ तंत्रयोवे दाअन्वसृज्यंत ॥ ताꣳहस्तेकुरुत ॥ अथहसीतासावित्री ॥ सोमꣳराजानंचकमे ॥ श्रद्धामुसचकमे ॥ साहपितरंप्रजापति मुपससार ॥ तꣳहोवाच ॥ नमस्तेअस्तुभगवः ॥ उपत्वायानि । प्रत्वापद्ये । सोमंवैराजानंकामये ॥ श्रद्धामुसकामयत इति ॥ तस्याउहस्थागरमलंकारंकल्पयित्वा ॥ दशहोतारंपुरस्ताद्व्याख्याय ॥ चतुर्होतारंदक्षिणतः ॥ पंचहोतारंपश्चात् ॥ षड्ढोतारमुत्तरतः ॥ सप्तहोतारमुपरिष्टात् ॥ संभारैश्चपत्निभिश्चमुखेलंकृत्य ॥ आस्यार्धंवव्राज ॥ ताꣳहोदीक्ष्योवाच ॥ उपमा वर्तस्वेति ॥ तꣳहोवाच ॥ भोगंतुमआचक्ष्व ॥ एतन्मआचक्ष्व ॥ यत्तेपाणाविति ॥ तस्याउहत्रीन्वेदान्प्रददौ ॥ तस्मादु हस्त्रियोभोगमेवहारयंते ॥ सयःकामयेतप्रियःस्यामिति ॥ यंवाकामयेतप्रियःस्यादिति ॥ तस्माएतꣳस्थागरमलंकारंकल्प यित्वा ॥ दशहोतारंपुरस्ताद्व्याख्याय ॥ चतुर्होतारंदक्षिणतः ॥ पंचहोतारंपश्चात् ॥ षड्ढोतारमुत्तरतः ॥ सप्तहोतारमु परिष्टात् ॥ संभारैश्चपत्निभिश्चमुखेलंकृत्य ॥ आस्यार्धंव्रजेत् ॥ प्रियोहैवभवति ॥ नयेंप्रजांमेगोपाय० प्रतिष्ठितां ॥ ॥

॥८४॥ कन्यादानं॥ कन्यादातासपत्नीकःप्राङ्मुखउपविश्यपितादक्षिणांकेकन्यकांउपवेश्यप्रत्यङ्मुखंवरंउपवेश्य॥ आच म्यप्राणानायम्यदेशकालौसंकीर्त्य॥ ममसमस्तपापक्षयद्वारामयासहदशपूर्वेषांदशापरेषांमद्वंशानांसर्वेषांपितृणांनरकादुतीर्यब्र ह्मलोकअक्षय्यनिवाससिद्ध्यर्थंइमांकन्यांयथाशक्तिसालंकृतांअस्मैलक्ष्मीनारायणस्वरूपिणेवरायलक्ष्मीनारायणप्रीतयेस्वगृह्यो क्तब्राह्मविवाहविधिनाकन्यादानमहंकरिष्ये ॥ कन्याहस्तेफलपुष्पदूर्वाक्षताहिरण्यंचनिधाय॥ कन्यांजलिंवरांजलौनिधाय ॥

पुष्पहिरण्याक्षतान्गृहीत्वामंत्रान्पठेत् ॥ कन्यांकनकसपन्नांकनकाभरणैर्युतां ॥ दास्यामिविष्णवेतुभ्यंब्रह्मलोकजिगीषया ॥ कन्येममाग्रतोभूयाःकन्येमेदेविपार्श्वयोः ॥ कन्येमेसर्वतोभूयास्त्वद्दानान्मोक्षमाप्नुयाम् ॥ विश्वंभरःसर्वभूताःसाक्षिण्यःसर्वदेवताः ॥ इमांकन्यांप्रदास्यामिपितॄणांतारणायच ॥ कन्यांसालंकृतांसाध्वींसुशीलायसुधीमते ॥ प्रयतोहंप्रयच्छामिधर्मकामार्थसिद्धये ॥ श्रीरूपैषामयाकन्यातुभ्यंश्रीधररूपिणे ॥ इत्युच्चार्य ॥ जलधारांक्षिपन्वदेत् अमुकप्रवरान्वितअमुकगोत्रोत्पन्नायअमुकशर्मणःप्रपौत्रायअमुकश० पौत्रायअमुकशर्मणःपुत्रायअमुकशर्मणेश्रीधररूपिणेवराय ॥ अमुकप्रवरान्वितअमुकगोत्रोत्पन्नांअमुकशर्मणःप्रपौत्रींअ० पौत्रींअ०पुत्रींअ०नाम्नींइमांकन्यांससुवर्णांप्रजापतिदैवतांअमुकगोत्रायामुकवेदशाखाध्यायिनेतुभ्यंप्रजासहत्वकर्मभ्यःप्रतिपादयामीतित्रिर्वदेत् ॥ कन्यामुदकपूर्वकंवरहस्तेदत्वा ॥ वरः ॐ स्वस्ति इत्युक्त्वा ॥ मंत्रान्पठेत् ॥ ॐ देवस्यत्वा० भ्यां प्रतिगृह्णामि ॥ राजात्वावरुणोनयतुदेविदक्षिणे॥ प्रजापतयेकन्यां । तेनामृतत्वमश्यां । वयोदात्रे। वयोमह्यमस्तुप्रतिगृहीत्रे । कइदंकस्माअदात् ॥ कामःकामाय॥ कामोदाता । कामःप्रतिगृहीता। कामंसमुद्रमाविश ॥ कामेनत्वाप्रतिगृण्हामि । कामैतत्ते । एषातेकामदक्षिणा । उत्तानस्त्वांगीरसःप्रतिगृण्हातु ॥ कन्यांप्रतिगृण्हीयात् ॥ धर्मेचार्थेचकामेचनातिचरितव्यात्वयेयं॥ नातिचरामीतिवरः॥ कृतस्यकन्यादानसांगतासिध्यर्थंइमांदक्षिणांतुभ्यमहंसंप्रददे॥ अनेनकन्यादानाख्येनकर्मणाश्रीलक्ष्मीनारायणौप्रीयेतां ॥ कृतस्य० भूयसींदद्यात् ॥ जलभाजनभोजनगोमहिष्यश्वगजदासीदासभूवाहनालंकारादियथाविभवंसंकल्पपूर्वकंदद्यात् ॥ इतिकन्यादानं॥ ॥ ॥

॥ ८५ ॥ कन्यादानमहासंकल्पः ॥ आचम्यदेशकालौसंकीर्त्य ॥ श्रीमदादिनारायणस्याचिंत्यापरिमितशक्त्याभ्रिय

माणस्यमहाजलौघस्यमध्येपरिभ्रममाणानामनेककोटिब्रह्मांडानामेकतमेव्यक्ताव्यक्तमहदहंकारपृथिव्याप्तेजोवाय्वाकाशा
द्यावरणैरावृतेस्मिन्महतिब्रह्मांडखंडयोर्मध्ये । आधारशक्तिकूर्मवराहवैष्णवानंतनागशेषतक्षकाष्टदिग्गजोपरिप्रतिष्ठिते ।
अतलवितलसुतलतलातलरसातलमहातलपातालादिसप्तलोकानामुपरितले । भूर्भुवःसुवर्महर्जनस्तपस्सत्यमित्यूर्ध्वसप्तलोका
नामधोभागेचक्रवालशैलमध्यगतमहासुमेरोःसहस्रशिखरानुवर्तिनिमहानालायमानफणिराजराजस्यशेषस्यसहस्रफणिमणिमं
डलमंडितेऐरावतपुंडरीकवामनकुमुदांजनपुष्पदंतसार्वभौमसुप्रतीकाख्याष्टदिग्दंतिशुंडादंडोत्तंभिते । अमरावत्यशोकवत्यं
भोगवतीरैवतीसिद्धवतीगांधर्ववत्यलकावत्यादिपुण्यपुरीविराजिते ॥ इंद्राग्नियमनिर्ऋतिवरुणवायुकुबेरैशानाष्टदिक्पालक
पालिते ॥ महेंद्रमलयसह्यसक्तिहिमवदक्षवद्विंध्यपारियात्रसप्तकुलाचलमतंगहिरण्यश्रृंगमाल्यवत्किष्किंधऋष्यशृंगाख्यपंच
महानगाधिष्ठिते । रामशिबिरांतिपृथुमद्भगीरथभरतशशिबिंदुदुर्गजांबरीषदिलीपपरशुरामादिषोडशमहाराजैःपरिपालिते।
कार्तवीर्यसगरपुरूरवपुरुकुत्सनलहरिश्चंद्राख्यषट्चक्रवर्तिभिरधिष्ठिते । अंगवंगकलिंगकाश्मीरकांभोजसौवीरसौराष्ट्रमहारा
ष्ट्रमगधमाळवनेपाळकेरळचोरळपांचाळगौळमळयाळसिंहाळद्रविडद्राविडकर्नाटककर्वाटपानाटनाटपांड्यपुलिंदांध्रहूणदशा
र्णभोजकुक्कुरकुरुगांधारविदर्भविदेहबाह्लीकबर्बरकैकयकोसलकुंतलकिरातशूरसेनसेवनटंकणकोंकणमस्त्यमद्रपार्श्वगुर्जरयाव
नजालांध्रसाल्वचेदिसिंधुवत्याद्यनेकविशेषदेशभाषाभूमिपालचिह्निते । भागीरथीगौतमीनर्मदायमुनासरस्वतीकृष्णावेणी
बाहुदाभीमरथीतुंगभद्रारेणुकामलापहारीकृतमालाताम्रपर्णीविशोकाकौशिकीगंडकीविचित्रकावसिष्ठप्रवराकाश्यपीसरयूपा
पहाकुशावतीफल्गुनीकरतोयापुण्यताप्रणीताद्यनेकपुण्यनदीपवित्रिते ॥ अयोध्यामथुरामायाकाशीकांचीअवंतिकापुरीद्वा

रावत्यादिपुरीविराजिते । सगरगुल्मलस्वामिपुष्करत्रयसहितशेषाचलश्रीशैलादिपुण्याचलाधिष्ठिते ॥ जंबुप्लक्षशाल्मलकु
शक्रौंचशाखपुष्कराख्यसप्तद्वीपदीपिते ॥ इंद्रकशेरुताम्रगभस्तिनागसौम्यगांधर्वचारणभारतेतिनववर्षात्मिके । प्रत्येकंनव
सहस्रयोजनविस्तृते । भारतकिंपुरुषेलावृतकुरुभद्राश्वकरमकमंदहरकेतुमालाख्यनवखंडमंडिते ॥ दंडकाविंध्यकचंपकबद
रिकनहुषगुहदेवदारुकरुण्यादिदशारण्यायते । लोकालोकाचलवलयिते । पंचाशत्कोटिविस्तीर्णभूमंडले । लक्षयोजनविस्तीर्ण
जंबुद्वीपे । भरतवर्षेविविधसुरतरुक्रीडाविराजमानदशदिशाबहुलपरिमलपटलभ्रमरझंकारनिकरकदंबितकलकंठकूजितसना
थकोकिलकुलमुखरीकृतविजितसारस्वतस्वनतरुषंढे । अतुलविमलसत्कलधौतकल्पतरुच्छायाविन्यस्तदेदीप्यमानरत्नसिंहा
सनस्योपरिस्थितयंत्रराशेश्चतुर्दशवर्णवर्णितसहस्रयोजनोनतविस्तारस्यपूर्वतशेखरीकृतध्वजापताकायुतयोजनोन्नतकदंबवृक्ष
दीपितस्यमंदारस्यप्रांते । भरतखंडे । पंचाशदादिवर्षे । प्रथममासे । प्रथमपक्षे । प्रथमेहनि । त्रयोदशघटिकाद्विचत्वारिं
शद्धटिकागतएषद्विघटिकायां । प्रथमप्राणायामकाले । पार्थिवकल्पानांतकल्पकूर्मकल्पब्रह्मकल्पवराहकल्पश्वेतवराहकल्प
प्रलयकल्पपाद्मकल्पसावित्र्यादिकल्पानांमध्ये । स्वायंभुवस्वारोचिषोत्तमतामसरैवतचाक्षुषवैवस्वतसूर्याग्निब्रह्मरुद्रदक्षसा
वर्णिरौच्यभौत्यचतुर्दशमन्वंतराणांमध्ये ॥ सप्तमेवैवस्वतमन्वंतरेश्रीमदाद्विविष्णोर्मत्स्यकूर्मवराहनारसिंहवामनभार्गवरा
घवकृष्णबौद्धकल्किदशावताराणांमध्येनवमेबौद्धावतारे । युधिष्ठिरविक्रमार्कशालिवाहनविजयाभिनंदननागार्जुनषट्शश
कानांमध्येतृतीयेशालिवाहनशके । इदानीमष्टाविंशन्महायुगे । अष्टाविंशत्सहस्रान्वितसप्तदशलक्षान्वितेकृतयुगेयाते ।
षण्णवतिसहस्रान्वितद्वादशलक्षाब्देत्रेतायुगेयाते । चतुःषष्टिसहस्रान्वितअष्टलक्षाब्देद्वापारयुगेयाते । द्वात्रिंशत्सहस्रान्वि

तचतुर्लक्षाब्देकलियुगेप्रथमपादे । चांद्रसौरमानेनप्रभवादिषष्ठिसंवत्सराणांमध्येवर्तमानसंवत्सरे । अयनेऋतौ । मासेपक्षे।
वासरयुक्तानांशुभतिथौसुनक्षत्रेसुमुहूर्तेसुलग्नेगंगावालुकाभिःसप्तर्षिमंडलपर्यंतंकृतराशेर्वर्षसहस्रावसानेएकैकवालुकापकर्षक्र
मेणसर्वराश्यपकर्षसंमितकालेब्रह्मलोकनिवाससिद्ध्यर्थंयवैर्ग्रहमंडलपर्यंतंकृतराशेर्वर्षसहस्रावसानेएकैकयवापकर्षक्रमेणसर्व
राश्यपकर्षसंमितकालेब्रह्मलोकनिवाससिद्ध्यर्थंसर्षपैर्ध्रुवमंडलपर्यंतंकृतराशेवर्षसहस्रावसानेएकैकसर्षपापकर्षक्रमेणसर्वराश्य
पकर्षसंमितकालेब्रह्मलोकनिवाससिद्ध्यर्थंपंचाशद्गव्यूतिगणनासमित्कालेवृषलोमभिर्नक्षत्रमंडलपर्यंतंकृतराशेर्वर्षसहस्रावसा
नेएकैकलोमापकर्षक्रमेणसर्वराश्यपकर्षासमित्कालेब्रह्मलोकेनिवाससिध्यर्थंत्रिगुणीकृताग्निष्टोमातिरात्राप्तोर्यामसांतपनवाज
पेयपौंडरीकाश्वमेधादिशतक्रतुपुण्यफलावाप्त्यर्थंमयासहदशपूर्वेषांदशापरेषांमद्वंशानांमातृवंश्यानांसर्वेषांपितृणांनरकादुत्ती
र्यशाश्वतब्रह्मलोकेनिवाससिध्यर्थंअनाद्यविद्यवासनयास्मिन्संसारेविचित्राभिर्विचित्रासुयोनिषुपुनःपुनरनेकधाजनित्वाकेन
वाकर्मविशेषेणेदानीमस्मिन्वंशेजातस्यनामधेयस्यममजन्माभ्यासाज्जन्मप्रभृत्येतत्क्षणपर्यंतंमध्यवर्तिनकालेसंभावितानांपा
पानांवाक्पाणिपादपायूपस्थानांकर्मेंद्रियाणांत्वक्चक्षुश्रोत्रजिव्हाघ्राणानांपंचानांज्ञानेंद्रियाणांएतेषांप्रेरकस्यांतःकरणैःसगो
चरैःसंबंधेसतिसंभावितसकलपापनिवृत्तिद्वाराश्रीलक्ष्मीनारायणप्रीत्यर्थंस्वगृह्योक्तप्रकारेणमत्स्यपुराणोक्तषोडशमहादानांत
र्वर्तिसालंकृतकन्यादानंसहिरण्योदकधारापूर्वककन्यादानमहंकरिष्ये ॥ ॥ इतिकन्यादानमहासंकल्पः ॥ अयंआंध्रदेशे ॥

॥ ८६ ॥ अथवधूवरयोःसंकल्पः ॥ स्वदक्षिणतःपत्नींप्राङ्मुखउपविश्य ॥ आचम्यप्राणानायम्य ॥ आवाभ्यांकर्माणिकर्त
व्यानिप्रजाश्चोत्पादयितव्येतिवरः ॥ उत्पादयामीतिवधूंवदेत् ॥ वरः ॥ अंगुष्ठेनोपमध्यमयाचांगुल्यादर्भं२संगृहीत्वा ॥

इदमहमितिकन्याभ्रुवोरंतरंदर्भेणसंमृज्य ॥ ॐ इदमहंयात्वयिपतिघ्न्यलक्ष्मिस्तान्निर्दिशामि ॥ प्रतीचीनंनिरस्यापस्पृश्य ॥
जीवाꣳरुदंतीतिरोदननिमित्तेजपेत् ॥ ॐ जीवाꣳरुदंतिविमयंतेअध्वरेदीर्घामनुप्रसितिंदीधियुर्नरः ॥ वामंपितृभ्योयइदꣳस
मेरिरेमयःपतिभ्योजनयःपरिष्वजे ॥ ॥ ॥ ॥ ॥ ॥

॥ ८७ ॥ सुवर्णाभिषेकः ॥ व्युक्षत्क्रूरमितियुग्मान्विप्रान्स्नानीयाद्भिःप्रेषयेत् ॥ ॐ व्युक्षत्क्रूरमुदचंत्वापआस्यैब्राह्म
णास्तपनꣳहरंतु ॥ अवीरघ्नीरुदचंत्वापः ॥ अर्यम्णइतिकन्याशिरसिदर्भेण्वंनिधाय ॥ ॐ अर्यम्णोअग्निंपरियंतुक्षिप्रंप्रतीक्षंताꣳ
श्वश्रवोदेवराश्च ॥ खेनसइतितस्मिन्दक्षिणंबहिर्युगछिद्रंप्रतिष्ठाप्य ॥ खेनसःखेरथःखेयुगस्यशचीपते ॥ अपालामिंद्रत्रिः
पूर्ज्यंकरत्सूर्यवर्चसं ॥ शंतेहिरण्यमितियुगछिद्रेसुवर्णंनिधाय ॥ ॐ शंतेहिरण्यꣳसमुशंत्वापःशंतेमेथीभवतुशंयुगस्यतृद्म ॥
शंतआपःशतपवित्राभवंत्वथापत्यातन्वꣳसꣳसृजस्व ॥ हिरण्यवर्णामितिपंचमंत्रैरद्भिःसकृत्स्नापयित्वा ॥ ॐ हिरण्यवर्णाः
शुचयःपावकाःप्रचक्रमुरुहित्वावद्यमापः ॥ शतंपवित्रावितताह्यासुताभिस्त्वादेवःसवितापुनातु ॥ हिरण्यवर्णाःशुचयःपाव
कायासुजातःकश्यपोयास्वग्निः ॥ याअग्निंगर्भंदधिरेसुवर्णास्तास्तआपःशꣳस्योनाभवंतु ॥ यासाꣳराजावरुणोयातिमध्येसत्या
नृतेअवपश्यंजनानां ॥ याअग्निंगर्भंदधिरेसुवर्णास्तास्तआपःशꣳस्योनाभवंतु ॥ यासांदेवादिविकृण्वंतिभक्षंयाअंतरिक्षेबहुधा
निविष्टाः ॥ याअग्निंगर्भंद० वंतु ॥ शिवेनत्वाचक्षुषापश्यंत्वापःशिवयातनुवोपस्पृशंतुत्वचंते ॥ घृतश्चुतःशुचयोयाःपावका
स्तास्तआपःशꣳस्योनाभवंतु ॥ परित्वेतिनववस्त्राभ्यांवधूमाच्छाद्य ॥ ॐ परित्वागिर्वणोगिरइमाभवंतुविश्वतः ॥ वृद्धायुमनु

१ वरपक्षसुवासिनीवस्त्रद्वयंकृष्णमणिसूत्रयुतंवध्वैसमर्प्यतामेकं परिधाय्यापरमुत्तरीयं कुर्यात् ॥

वृद्धयोजुष्टांभवंतुजुष्टयः ॥ अद्ये० तिथौमांगल्ययोत्ककंकणपूजनंचकरिष्ये ॥ पंचोपचारैःसंपूज्य ॥ मांगल्यतंतुनानेनमम जीवनहेतुना ॥ कंठेबध्नामिसुभगेसाजीवशरदःशतं ॥ इतिमंत्रेणइष्टदेवतांस्मरन्कन्याकंठेमंगलसूत्रंबध्वा ॥ आशासानेति पत्नीऽस्योत्कंबध्वा ॥ ॐ आशासानासौमनसंप्रजाऽसौभाग्यंतनूं ॥ अग्नेरनुव्रताभूत्वासन्नह्येसुकृतायकं ॥ विश्वेत्तातेतिवर दक्षिणहस्तेकंकणंबध्वा ॥ ॐ विश्वेत्तातेसवनेषुप्रवाच्यायाचकर्थंमघवन्निंद्रसुन्वते ॥ पारावतंयत्पुरुसंभृतंवस्वपावृणोःशर भायऋषिबंधवे ॥ बृहत्सामेतिमंत्रेणवधूवामहस्तेबध्नीयात् ॥ ॐ बृहत्सामक्षत्रभृद्वृद्धवृष्णियंत्रिष्टुभोर्जःशुभितमुग्रवीरं ॥ इंद्रस्तोमेनपंचदशेनमध्यमिदऽवातेनसगरेणरक्ष ॥ गौरीर्मिमायेतित्र्यंम्बकंइतिमंत्रेणउमामहेश्वरौसंपूज्य ॥ गणानांत्वेतिगण पतिंविष्णोर्नुकमितिविष्णुंकांसोस्मितांइतिलक्ष्मींचपंचोपचारैःसंपूज्य ॥ सुवासिनींश्चसौभाग्यवायनानिदद्यात्—जीरक हरिद्रापूगीफलचणकतंडुलयुतानिसवस्त्राणिवैणवपात्रसहितानिसुवासिनीभ्योदद्यात् ॥ ॥ ॥

॥ ८८ ॥ कपिलावाचनं ॥ कपिलावाचनादिमंगलाचारप्राप्तंकार्यं ॥ उभयत्रशुभ्रतंडुलपूरितपात्रद्वयंनिधायतदुपरि ससूत्रंदुग्धपूरितपात्रद्वयंस्थाप्य ॥ वरः । स्वांजलिनास्वपयसावध्वंजलौद्विरुपस्तीर्यद्विस्तंडुलानोप्यद्विरभिघारयति ॥ ततो वरांजलावन्यस्ताभ्यांतंडुलपयोभ्यामेवंकृत्वा ॥ वध्वंजलेरुपरिस्थाप्य ॥ सोदकंकलशमादाय ॥ ब्राह्मणैःसहकपिलाऽ स्तारयतु ॥ दक्षिणाःपांतुबहुधेयंचास्तु ॥ पुण्यंवर्धताऽशांतिरस्तुपुष्टिरस्तुतुष्टिरस्तुवृद्धिरस्तुअविघ्नमस्तुआरोग्यमस्तुशिवं कर्मास्तु ॥ दंपत्योर्जन्मनक्षत्रेसहसोमेनक्रियताऽशांतिरस्त्वित्यादिशिवंकर्मास्तु ॥ ॐ प्रजापतिस्त्रियांयशः ॥ मुष्कयोरद धात्सपं ॥ कामस्यतृप्तिमानंदं ॥ तस्याग्नेभाजयेहमा ॥ मोदःप्रमोदआनंदः ॥ मुष्कयोर्निहितःसर्पः ॥ सृत्वेनकामस्यतृप्याणि ॥

दक्षिणानांप्रतिग्रहे ॥ मनंसश्चित्तमाकूतिं ॥ वाचःसत्यमंशीमहि ॥ पशूनाᳪंरूपमन्नंस्य ॥ यशश्रीश्रंयतांमयिं ॥ यथाहमस्याअतृं पᳪंस्त्रियैपुमांन् ॥ यथास्त्रीतृप्यंतिपुᳪंसेप्रियेप्रिया ॥ एवंभगंस्यतृप्याणि ॥ यज्ञस्यकाम्यंःप्रियः ॥ ददामीत्यग्निर्वदति ॥ तथेतिवायुराहतत् ॥ हंतेतिसत्यंचंद्रमाः ॥ आदित्यःसत्यमोमेति ॥ आपस्तत्सत्यमाभंरन् ॥ यशोयज्ञस्यदक्षिणां ॥ प्रजामेकामः समृंध्यतां॥ वरःवधूशिरसिनिधाय॥ वधूःवरशिरसिनिधाय॥प्रजामे०तां ॥ द्वितीयपर्यायेवरःस्वाजलिनाइत्यादिप्रजामेकामः समृध्यतांइत्यंतंवदन्वधूवरःशिरसिअन्योन्यं ॥ पशवोमेकामःसमृंध्यतां ॥ तृतीयपर्यायेवरस्वांजलिनाइत्यादिप्रजामेकामः समृध्यतांइत्यंतंवदन्वधूशिरसिअन्योन्यं ॥ यज्ञोमेकामःसमृंध्यतां ॥ तूष्णींचतुर्थंअन्योन्यंकार्यं ॥इतिकपिलावाचनं ॥ ॥

॥ ८९ ॥ अथब्रह्मबंधनं ॥ हरिद्रैश्चहिरण्यैश्चसाक्षतैःसफलान्वितैः ॥ योवैतामितिमंत्रेणबध्नीयाद्ब्रह्मबंधनं ॥ ॐ योवैतां ब्रह्मणोवेद । अमृतेनामृतांपुरीं । तस्मैब्रह्मचंब्रह्माच । आयुःकीर्तिंप्रजांददुः ॥ इतिमंत्रेणवधूवरवस्त्रयोःब्रह्मग्रंथिंबध्वा ॥ अथैनांवधूदक्षिणहस्तेगृहीत्वा ॥ पूषात्वेतोनयत्वित्यग्निमभ्यानीय ॥ ॐ पूषात्वेतोनंयतुहस्तगृह्याश्विनौत्वाप्रवंहताᳪंरथेन ॥ गृहान्गंच्छगृहपंत्नीयथासोवशिनीत्वंविदथमावंदासि ॥ अपरेणाग्निमुदगग्रेकटेयुगदुपविशतःउत्तरोवरः ॥ ॥ ॥

॥ ९० ॥ अथप्रधानहोमः ॥ आचम्यप्राणानायम्यदेशकालौसंकीर्त्य ॥ अनयानवोढयावध्वासहआयुष्याभिवृध्यर्थं

---

१ विवाहेवितततेतंत्रेहोमकालउपस्थिते । कन्यांऋतुमतींदृष्ट्वाकथंकुर्वंतुयाज्ञिकाः ॥ हविष्मतीरितिमभिमंत्रिताभिरद्भिःस्नापयित्वाअन्यवस्त्र-मलंकृत्य ॥ युंजानःप्रथमइतिद्वेआज्याहुतीजुंहुयात् ॥ ॐ हविष्मंतीरिमाआपोहविष्मांन्देवोअध्वरः ॥ हविष्माᳪंआविंवासतिहविष्मांᳪंअस्तुसूर्यः ॥ ॐ युंजानःप्रंथमंमनंस्तत्वायंसविताधियंः ॥ अग्निर्ज्योतिर्निचाय्यंपृथिव्याअध्याभंरत् ॥ युक्त्वायमनंसोदेवान्त्सुवंर्यतोधियादिवᳪंस्वाहा ॥ ॐ बृहज्योतिंःकरिष्यतःसविताप्रसुवातितान् ॥ युक्तेनमनंसावयंदेवस्यंसवितुःसवेस्वाहा ॥

विवाहप्रधानहोमंकरिष्ये ॥ तदंगंगणपतिस्मरणंकरिष्ये ॥ गणपतिंस्मृत्वा ॥ यत्राग्निस्थाप्यतेतिअग्नींधनादिपात्रप्रयोगांते कालेश्मं[१]लाजादीन्पात्रोत्तरतः[२]सकृत्प्रयुंज्य ॥ समौसाग्राविल्याद्याज्यभागांते ॥ ॥

॥ ९१ ॥ **पाणिग्रहणं** ॥ वरउत्थाय ॥ सोमःप्रथमइतिद्वाभ्यांवधूमभिमंत्र्य ॥ ॐ सोमःप्रथमोविविदेगंधर्वोविविदउत्तरः ॥ तृतीयोअग्निष्टेपतिस्तुरीयस्तेमनुष्यजाः ॥ सोमोददद्गंधर्वायगंधर्वोददद्ग्नये ॥ रयिंचपुत्रांश्चादादग्निर्मह्यमथोइमां ॥ गृभ्णामीतिश्चतसृभिर्मंत्रैःकन्यायाःउत्तानंदक्षिणपाणिंसांगुष्ठमवाचीनेनपाणिनागृहीत्वा ॥ ॐ गृभ्णामितेसुप्रजास्त्वायहस्तंमयापत्याजरदष्टिर्यथासः ॥ भगोअर्यमासवितापुरंधिर्मह्यंत्वादुर्गार्हपत्यायदेवाः ॥ तेहपूर्वेजनासोयत्रपूर्ववोहिताः ॥ मूर्धन्वान्यत्रसौभ्रवःपूर्वोदेवेभ्यआतपत् ॥ सरस्वतिप्रेदमवसुभगेवाजिनीवति ॥ तांत्वाविश्वस्यभूतस्यप्रगायामस्यग्रतः ॥ यएतिंप्रदिशःसर्वादिशोनुपवमानः ॥ हिरण्यहस्तऐरंमःसत्वामन्मनसंकृणोतु ॥ ॥ ॥ ॥

॥ ९२ ॥ **सप्तपदी** ॥ उत्तरेणाग्निंदक्षिणेनपदाप्राचीमुदीचींवादिशमभिप्रक्रमयति ॥ एकमिषइतिप्रतिमंत्रंसप्तपदानिगमयित्वा ॥ ॐ एकमिषेविष्णुस्त्वान्वेतु ॥ द्वेऊर्जेविष्णुस्त्वान्वेतु ॥ त्रीणिव्रतायवि० ॥ चत्वारिमायोभवायवि० ॥ पंचपशुभ्योवि० ॥ षड्रायस्पोषायवि० ॥ सप्तसप्तभ्योहोत्राभ्योवि० ॥ सखेत्यादिसूनृतेइत्यंतंसप्तमेपदेजपित्वा ॥ ॐ सखासप्तपदाभवसखायौसप्तपदाबभूवसख्यंतेगमेयंसख्यात्तेमायोषंसख्यान्मेमायोष्ठाः ॥ समयावसंकल्पावहैसंप्रियौरोचिष्णूसुमनस्यमानौ ॥ इषमूर्जमभिसंवसानौसन्नौमनांसिसंव्रतासमुचित्तान्याकरं ॥ सात्वमस्यमूहममूहमस्मिसात्वंद्यौरहंपृथिवीत्वं

१ अश्मोपरिपंचसंख्याकलड्डुकपूगीफलहरिद्रासहितांसद्रव्यांगौरींचस्थापयेत् ॥ २ सप्तपदक्रमणार्थंसप्तसंख्याकान्अक्षतपुंजान् ॥

रेतोहꣳरेतोभृक्त्वंमनोहमस्मिवाक्त्वꣳसामाहमस्मृत्वꣳसामामनुव्रताभवपुꣳसेपुत्रायवेत्तवैश्रियैपुत्रायवेत्तवएहिसूनृते ॥ सब्र
ह्माणंप्रदक्षिणमग्निंकृत्वा ॥ ॥ ॥ ॥ ॥

॥ ९३ ॥ विवाहहोमः॥ पूर्ववदुपविश्यान्वारब्धायाꣳस्रुच्याज्यंचतुर्गृहीतमादाय ॥ सोमायजनिविदेस्वाहेतिप्रतिमंत्रꣳषो
डशाज्याहुतीर्हुत्वा ॥ ॐ सोमायजनिविदेस्वाहा ॥ सोमायजनिविदइदं० ॥१॥ ॐ गंधर्वायजनिविदेस्वाहा ॥ गंधर्वायजनि
विदइदं० ॥ २ ॥ ॐ अग्नयेजनिविदेस्वाहा ॥ अग्नयेजनिविदइदं० ॥ ३ ॥ ॐ कन्यकापितृभ्योयतीपतिलोकमवदीक्षाम
दास्थस्वाहा ॥ वध्वैसूर्यायेदं० ॥ ४ ॥ प्रेतोमुंचातुनामुतःसुबद्धाममुतस्करत् ॥ यथेयमिंद्रमीढ्वःसुपुत्रासुभगासंतिःस्वाहा ॥
इंद्रायमीढुषइदं० ॥ ५ ॥ ॐ इमांत्वमिंद्रमीढ्वःसुपुत्राꣳसुभगांकृणु ॥ दशास्यांपुत्रानाधेहिपतिमेकादशंकृधिस्वाहा ॥ इंद्रा
यमीढुषइदं० ॥ ६ ॥ ॐ अग्निरैतुप्रथमोदेवतानाꣳसोस्यैप्रजांमुंचतुमृत्युपाशात् ॥ तदयꣳराजावरुणोनुमन्यतांयथेयꣳस्त्री
पौत्रमघन्नरोदात्स्वाहा ॥ अग्निवरुणाभ्यामिदं० ॥ ७ ॥ ॐ इमामग्निस्त्रायतांगार्हपत्यःप्रजामस्यैनयतुदीर्घमायुः ॥ अशून्यो
पस्थाजीवतामस्तुमातापौत्रमानंदमभिप्रबुध्यतामियꣳस्वाहा ॥ अग्नयेगार्हपत्यायेदं० ॥ ८ ॥ ॐ मातेगृहेनिशिघोषउत्थाद
न्यत्रत्वद्रुदत्यःसंविशंतु ॥ मात्वंविकेशुरआवधिष्ठाजीवपत्नीपतिलोकेविराजपश्यंतीप्रजाꣳसुमनस्यमानाꣳस्वाहा ॥ वध्वै
सूर्यायेदं० ॥ ९ ॥ ॐ द्यौस्तेपृष्ठꣳरक्षतुवायुरूरूअश्विनौचस्तनंधयंतꣳसविताभिरक्षतु ॥ आवाससःपरिधानाद्बृहस्पतिर्विश्वे
देवाअभिरक्षंतुपश्चात्स्वाहा ॥ द्युवाय्वश्विनासवितृबृहस्पतिविश्वेभ्योदेवेभ्यइदं० ॥ १० ॥ ॐ अप्रजस्तांपौत्रमृत्युंपाप्मान
मुतवाघं ॥ शीर्ष्णःस्रजमिवोन्मुच्यद्विषद्भ्यःप्रतिमुंचामिपाशꣳस्वाहा ॥ वध्वैसूर्यायेदं० ॥ ११ ॥ ॐ इमंमेवरुणश्रु० चके

स्वाहा ॥ वरुणायेदं० ॥ १२ ॥ ॐ तत्वांयामि० षीःस्वाहा ॥ वरुणा० ॥ १३ ॥ ॐ त्वन्नोअग्नेवरु० स्रस्वाहा ॥ वरुणा० ॥ १४ ॥ ॐ सत्वन्नोअग्ने० एधिस्वाहा ॥ अग्निवरुणाभ्यामिदं० ॥ १५ ॥ ॐ त्वमग्नेअयास्ययासन्मनसाहितः ॥ अयासन्हव्यमूहिषेयानोधेहिभेषजꣳस्वाहा ॥ अग्नयेअयसइदं० ॥ १६ ॥ ॥ इतिषोडशाज्याहुतीर्हुत्वा ॥ ॥ ॥ ॥ ९४ ॥ लाजाहोमः॥ आतिष्ठेत्यश्मानमास्थाप्य ॥ ॐ आतिष्ठेममश्मानमश्मेवत्वꣳस्थिराभव ॥ अभितिष्ठपृतन्यतः सहस्वपृतनायतः॥ पूर्ववदुपविश्यवध्वजलिꣳस्रुग्वत्सꣳस्कृत्यउपस्तीर्यद्विर्लाजानोप्य(त्रिर्जामदग्न्यानां) ॥ अभिघार्यतस्याभ्रातालाजानावपतीत्येके॥ॐ इयंन्नार्यूपब्रूतेकुल्पान्यावपंतिका॥ दीर्घायुरस्तुमेपतिर्जीवातुशरदःशतꣳस्वाहा ॥ वध्वैप्रजा०इदं०॥ उपविश्यअजलिवामपार्श्वेनलाजांजुहोति ॥ तुभ्यमग्रइतितिसृभिःप्रदक्षिणमग्निंकृत्वा ॥ ॐ तुभ्यमग्रेपर्यवहन्त्सूर्यांवहतुनासह ॥ पुनःपतिभ्योजायांदाग्नेप्रजयासह ॥ पुनःपत्नीमग्निरदादायुषासहवर्चसा ॥ दीर्घायुरस्यायःपतिःसएतुशरदःशतं ॥ विश्वाउतत्वयावयंधाराउदन्याइव ॥ अतिगाहेमहिद्विषः ॥ आतिष्ठेतिवधूमश्मानमास्थाप्य ॥ ॐ आतिष्ठेमम० यतः ॥ पुनरासनेउपविश्य ॥ वध्वंजल्युपस्तरणादिपूर्ववत्कृत्वा ॥ ॐ अर्यमणंनुदेवंकन्याअग्निमयक्षत ॥ सइमांदेवोअध्वरःप्रेतोमुंचातुनामुतःसुबद्धाममुतस्करत्स्वाहा ॥ अर्यम्णेग्नयइदं० ॥ तुभ्यमग्रइतितिसृभिःप्रदक्षिणमग्निंकृत्वा ॥ आतिष्ठेत्यश्मानमास्थाप्य ॥ पुनरासनेउपविश्य ॥ वध्वंजल्युपस्तरणादि ॥ ॐ त्वमर्यमाभवसियत्कनीनांनामस्वधावत्स्वर्यंबिभर्षि ॥ अंजंतिवृक्षꣳसुधितंन्नगोभिर्यद्दंपतीसमनसाकृणोषिस्वाहा ॥ अर्यम्णेग्नयइदं० ॥ तुभ्यमग्रइतिप्रदक्षिणमग्निंकृत्वा ॥ पुनरासनेउप

---

१ अंगुल्यग्रैर्नहोतव्यंतथैवांजलिभेदतः ॥ अंजल्युत्तरभागेतुलाजाहोमोविधीयते ॥ इत्यासीनेवध्वंजलिनादेवतीर्थेनजुहोति ॥

विश्य ॥ समित्संनहनंचाग्नौप्रहृत्यजयादिब्रह्मविसर्जनांते ॥ प्रत्वामुंचामीतिद्वाभ्यांयोत्क्रपाशंविमुंचति ॥ ॐ प्रत्वामुंचामि वरुणस्यपाशाद्येनत्वाबध्नात्सवितासुकेतः ॥ धातुश्चयोनौसुकृतस्यलोकेस्योनंमेसहपत्याकरोमि ॥ इमंविष्यामिवरुणस्यपाशं यमबध्नीतसवितासुशेवः ॥ धातुश्चयोनौसुकृतस्यलोकेरिष्टांत्वासहपत्याकृणोमि ॥ ॥ इतिविवाहलाजाहोमः ॥

॥ ९५ ॥ गृहप्रवेशः ॥ वधूंस्वगृहान्प्रत्यानयन् ॥ उदुत्तरमितितिसृभिरभिमंत्र्य ॥ ॐ उदुत्तरमारोहंतीव्यस्यंतीपृत न्यतः ॥ मूर्धानंप्रत्युरारोहप्रजयाचविराड्भव ॥ संम्राज्ञीश्वशुरेभवसंम्राज्ञीश्वश्रवांभव ॥ ननांदरिसंम्राज्ञीभवसंम्राज्ञीअधि देवृषु ॥ स्नुषाणाꣳश्वशुराणांप्रजयाश्चधनस्यच ॥ पतीनांचदेवरूणांचसजातानांविराड्भव ॥ संकाशयामीतिगृहान्दर्शयति ॥ ॐ संकाशयामिवहतुंब्रह्मणागृहैरघोरेणचक्षुषामैत्रेण ॥ पर्याणद्धंविश्वरूपंयदस्याꣳस्योनंपतिभ्यःसविताकृणोतुतत् ॥ आवा मगन्नितिद्वाभ्यांवाहौविमुंचति ॥ आवामगन्सुमतिर्वाजिनीवसून्यश्विनाहृत्सुकामाꣳअयꣳसत ॥ अभूतंगोपामिथुनाशुभ स्पतीप्रियाअर्यम्णोदुर्याꣳअशीमहि ॥ अयन्नोदेवःसविताबृहस्पतिरिंद्राग्नीमित्रावरुणास्वस्तये ॥ त्वष्टाविष्णुःप्रजयासꣳररा णःकामआयातंकामायत्वाविमुंचतु ॥ शर्मवर्मेतिलोहितंचर्मानडुहंप्राचीनग्रीवमुत्तरलोममध्येगारस्यास्तीर्य ॥ ॐ शर्मवर्मेद माहरास्यैनार्याउपस्तिरे ॥ सिनीवालिप्रगायतामियंभगस्यसुमनाअसत् ॥ गृहान्भद्रानेतिगृहान्प्रपादयपत्नींवाचयित्वा ॥ ॐ गृहान्भद्रांत्सुमनसःप्रपद्येवीरघ्नीवीरवतःसुवीरान् ॥ इरांवहतोघृतमुक्षमाणास्तेष्वहꣳसुमनाःसंविशामि ॥ ॥ ॥

॥ ९६ ॥ गृहप्रवेशहोमः ॥ आगारस्येशानदेशेजायापतिर्दक्षिणतोत्तरोपविशतः ॥ आचम्यप्राणानायम्यदेशकालौ

---

१ प्रणीताविमोकसमयेवधूमुत्तरतउपविश्य ॥ २ स्वगृहेकार्यं, आचारस्तुश्वशुरगृहेकुर्वंति ॥

संकीर्त्य० ॥ अनयानवोढयावध्वासहआयुष्याभिवृद्ध्यर्थंविवाहगृहप्रवेशहोमंकरिष्ये ॥ अग्नींधनाद्याज्यभागांते ॥ अन्वार
ब्धायाᳲस्रुचाज्यमादाय ॥ आगन्गोष्ठमितिप्रतिमंत्रᳲत्रयोदशाज्याहुतीर्हुत्वा ॥ ॐ आगंन्गोष्ठंमहिषीगोभिरश्वैरायुष्मपत्नी
प्रजयास्वर्वित् ॥ बह्वींप्रजांजनयंतीᳲसुरत्नेममग्निᳲशतहिमाःसपर्यात्स्वाहा ॥ अग्नयइदं० ॥ १ ॥ ॐ अयमग्निर्गृहपतिःसुसᳲ
सत्पुष्टिवर्धनः ॥ यथाभर्गस्याभ्यांदधद्रयिंपुष्टिमथोप्रजाᳲस्वाहा ॥ अग्नयेगृहपतयइदं० ॥ २ ॥ ॐ प्रजायाआभ्यांप्रजाप
तइंद्राग्नीशर्मयच्छतं ॥ यथेनयोर्नप्रमीयातादुभयोर्जीवतोःप्रजास्वाहा ॥ इंद्राग्निभ्यामिदं० ॥ ३ ॥ ॐ तेनंभूतेनहविषाय
माप्यायतांपुनः ॥ जायांयामस्माआवाक्षुस्ताᳲरसेनाभिवर्धताᳲस्वाहा ॥ इंद्राग्निभ्यामिदं० ॥ ४ ॥ ॐ अभिवर्धतांपयसा
भिराष्ट्रेणवर्धतां ॥ रय्यासहस्रपोषसेमौत्वामनपेक्षितौस्वाहा ॥ इंद्राग्निभ्यामिदं० ॥ ५ ॥ ॐ इहैवस्तंमाव्यौष्टंविश्वमायुर्व्यं
श्नुतं ॥ मह्याइंद्रस्वस्तयेस्वाहा ॥ इंद्रायेदं० ॥ ६ ॥ ॐ ध्रुवैधिपोष्यामयिमह्यंत्वादाद्बृहस्पतिः ॥ मयापत्याप्रजावतीसंजीव
शरदःशतᳲस्वाहा ॥ बृहस्पतयइदं० ॥ ७ ॥ ॐ त्वष्टाजायामजनयत्वष्टास्यैत्वांपतिं ॥ त्वष्टासहस्रमायुᳲषिदीर्घमायुःकृणो
तुवाᳲस्वाहा ॥ त्वष्ट्रइ० ॥ ८ ॥ ॐ इमंमेवरुण० ॥ वरुणायेदं० ॥ ॐ तत्वायामि० वरुणा० ॥ त्वन्नोअग्नेवरु० । अग्नि
वरुणाभ्यामिदं० ॥ ॐ सत्वन्नोअग्ने० । वरुणा० ॥ ॐ त्वमग्नेअयास्य० । अग्नयेअयसइदं० ॥ १३ ॥ समित्सन्नहनंजया
दिब्रह्मविसर्जनांते ॥ इहगावमितिचर्मण्युगपदुपविशतोत्तरोवरः ॥ इहगावःप्रजायध्वमिहाश्वाइहपूरुषः ॥ इहोसहस्रदक्षिणो
रायस्पोषोनिषीदतु ॥ सोमेनादित्याइतिपुंसोजीवपुत्रयोर्दंपत्योस्तस्याःपुत्रंबध्वांकेउपवेश्य ॥ ॐ सोमेनादित्याबलिनःसोमेन
पृथिवीदृढा ॥ अथोनक्षत्राणामेषामुपस्थेसोमआधितः ॥ प्रस्वस्थइतियजुषातस्यैफलानिप्रदाय ॥ ॐ प्रस्वस्थःप्रेयंप्रजयाभुवं

नशोचेष्ट ॥ इहप्रियमितिद्वेजपति ॥ ( वधूवस्त्रंब्रह्मणेदद्यात् ) ॥ इहप्रियंप्रजयातेसमृध्यतामस्मिन्गृहेगार्हपत्यायजागृहि ॥ एनापत्यातन्व१ंस१ंसृजस्वाथाजिव्रीविदथमावदासि ॥ सुमंगलीरियंवधूरिमा१ंसमेतपश्यत ॥ सौभाग्यमस्यैदत्वायाथास्तंविपरेतन ॥ दंडंगंधलिप्तंवाससासूत्रेणपरिवीतंनिधाय ॥ उभौवाचंयच्छत्यानक्षत्रोदयादुदितेषुनक्षत्रेषुप्राचीमुदीचींवादिशमुपनिष्क्रम्य ॥ ध्रुवक्षितिरितिद्वाभ्यांयथालिंगंध्रुवमरुंधतींदर्शयति ॥ ध्रुवक्षितिर्ध्रुवयोनिर्ध्रुवमसिध्रुवतस्थितं ॥ त्वन्नक्षत्राणामेध्यसिसमापाहिपृतन्यतः ॥ सप्तर्षयःप्रथमांकृत्तिकानामरुंधतींयध्रुवता१ंहनिन्युः ॥ षट्कृत्तिकामुख्ययोगंवहंतीयमस्माकमेधत्वष्टमी ॥ ॥ इतिगृहप्रवेशहोमः ॥ ॥ ॥ ॥ ॥

॥ ९७ ॥ आग्नेयस्थालीपाकम् ॥ आचम्यप्राणानायम्य ॥ अनयानवोढयावध्वासहआयुष्याभिवृद्ध्यर्थंविवाहमाग्नेयस्थालीपाकेनयक्ष्ये ॥ अग्नयेत्वाजुष्टंनिर्वपामि ३ ॥ इतितंडुलांनिक्षिप्य ॥ अग्नयेत्वाजुष्टंप्रोक्षामि ३ ॥ चरु१ंश्रपयित्वा ॥ असंस्कृतेनाज्येनाभिघार्य ॥ प्राचीमुदीचीनंवोद्वास्य ॥ प्रतिष्ठितमभिघार्य ॥ अग्नेःपश्चान्निदध्यात् ॥ अग्नींधनादिसमंपूर्वेणयथोपदेशांतंकृत्वा ॥ पढ्यांअन्वारब्धायां ॥ प्रधानाहुतीर्हुत्वा ॥ स्रुच्युपस्तीर्यचरुमध्याद्द्विरवदायहविःप्रत्यभिघार्य ॥ ॐ अग्नयेस्वाहा । अग्नयइ० ॥ इतिमध्येग्नौजुहोति ॥ पुनःस्रुच्युपस्तीर्यउत्तरार्द्धात्सकृदवदायद्विरभिघार्यनहविःप्रत्यभिघारयति ॥ ॐ अग्नयेस्विष्टकृतेस्वाहा ॥ अग्नयेस्विष्टकृतइदं० ॥ समित्सन्नहनंचाग्नौप्रहृत्य । अग्नयेस्वाहा । अग्नयइ० ॥ रुद्रायतंतिचरायस्वाहा । रुद्रायतंतिचरायेदं० ॥ अपउप० ॥ अस्यकर्मणःप्रतिष्ठासिध्यर्थंप्राजापत्यहोमंक० ॥ ॐ प्रजापते० णा१ंस्वाहा । प्रजापत० ॥ ॐ भूःस्वाहा । अग्न० ॥ ॐ भुवःस्वाहा । वायव० ॥ ॐ सुवः स्वाहा ।

सूर्याये० ॥ ॐ भूर्भुवःसुवःस्वाहा । प्रजा० ॥ ॐ यदस्य० तुस्वाहा ॥ अग्नयेस्विष्टकृतइ० नजयादयः ॥ दर्व्यापरि
धीननक्ति ॥ पात्रप्रयुक्तदर्भाग्राणिदर्व्यामभ्यज्य ॥ स्रुवेमध्यमूलेअनक्ति । मूलांजनेनदक्षिणपाणिमधःकुर्यात् ॥ एवंत्रिः ॥
एकंतृणमपादाय ॥ पाणिभ्यांदर्व्यांबर्हिंप्रागग्रंप्रतिष्ठाप्य ॥ इष्टदेवतामुद्दिश्य ॥ अग्नयइदं० । सोमायेदं० ॥ अग्नयइदं० । पुनः ।
अग्नयइदं । अग्नयेस्विष्टकृतइ० ॥ अंजलिनात्रिरुद्धृत्य ॥ तृणंप्रहरति । त्रिरंगुल्यानिर्दिश्य ॥ अग्निमभिमंत्र्य । पुरतोभू
मिमुपस्पृशेत् ॥ मध्यमंपरिधिप्रहराति । इतरौयुगपत्प्रहरन् ॥ उत्तरार्धस्याग्रमंगारेषूपोहति ॥ परिधीनभिमंत्र्य ॥ आघारस
मिधौप्रहरति ॥ स्रुचाऽस्रुवंनिधाय ॥ विश्वान्देवानुदिश्य ॥ सऽस्रावेणाभिजुहोति ॥ वसुभ्योरुद्रेभ्यआदित्येभ्यसऽ
स्रावभागेभ्यःस्वाहा ॥ वसुभ्योरुद्रेभ्यआदित्येभ्यःसऽस्रावभागेभ्यइदं० ॥ अस्मिन्प्रकृतेकर्मणिज्ञाताज्ञातादिप्रायश्चित्तहो
मंउत्तरपरिषेचनादिकुर्यात् ॥ ब्राह्मणान्भोज० ॥ वरायपचितायवृषभंदक्षिणांदद्यात् ॥ ॥ इत्याग्नेयस्थालीपाकः ॥ ॥

## ॥ ९८ ॥ औपासनहोमः ॥

श्रीः ॥ आचम्यप्राणानायम्यदे० ॥ ममोपात्तदुरितक्षयद्वाराश्रीयज्ञपुरुषप्रीत्यर्थंसायमौपासनहोमंतंडुलैर्होष्ये ॥ (प्रातरौ)
ॐ भूर्भुवःसुवःइतिपरिषिच्य ॥ अग्नयेनमःइत्यलंकृत्य ॥ अदितेनुमन्यस्वेतिपुनःपरिषिच्य ॥ चत्वारिश्रृंगेतिध्यात्वा ॥
शतसंख्याकान्प्रक्षालिततंडुलानादाय ॥ ॐ अग्नयेस्वाहा ॥ मध्येग्नौजुहोति ॥ अग्नयइदं० ॥ किंचिदधिकैः । ॐ अग्नये

---

१ अग्नेःपश्चिमतउदगग्रप्रस्तरदर्भेषुप्रधानं वा दक्षिणतोनिधाय ॥ अस्यामन्युत्तरतोद्वितीयदर्वी अस्यामन्युत्तरतोआज्यस्थालींनिधाय ॥ २ द-
क्षिणोत्तरकराभ्यांबर्हिर्गृहीत्वा ॥

स्विष्टकृतेस्वाहा । उत्तरार्धपूर्वार्धेहुत्वा ॥ अग्नयेस्विष्टकृतइदं० ॥ आहुतिसंसर्गदोषपरिहारार्थसमिद्धोमंकरिष्ये ॥ ॐयत्रवे
त्थवनस्पतेदेवानांगुह्यानामानि ॥ तत्रहव्यानिगामयत्स्वाहा ॥ वनस्पतयइदं० ॥ पुनःभूर्भुवःसुवःस्वाहा ॥ एकंसमि
धंहुत्वा ॥ प्रजापतयइ० ॥ अदितेन्वमꣳस्थाःइतिउत्तरपरिषेचनांतंकुर्यात् ॥ उपस्थाय ॥ ॐ अग्नेत्वन्नोअ० ॐ
अग्नेनयसुपथा० विधेम ॥ प्रवःशुक्रायभानवेभरध्वं । हव्यंमतिंचाग्नयेसुपूतं ॥ योदैव्यानिमानुषाजनूꣳषि ॥ अंतर्विश्वानि
विद्मनाजिगाति ॥ अच्छागिरोमतयोदेवयंतीः । अग्निंयंतिद्रविणंभिक्षमाणाः ॥ सुसंदृशꣳसुप्रतीकꣳस्वंचं ॥ हव्यवाहमरतिंमानु
षाणां ॥ अग्नेत्वमस्मद्युयोध्यमीवाः ॥ अनग्नित्राअभ्यमंतकृष्टीः ॥ पुनरस्मभ्यꣳसुवितायदेवा ॥ क्षांविश्वेभिरमृतेभिर्यजत्र ॥
अग्नेत्वंपारयानव्योअस्मान् ॥ स्वस्तिभिरतिदुर्गाणिविश्वा ॥ पूश्चपृथ्वीबहुलानउर्वी ॥ भवातोकायतनयायशंयोः ॥ प्रकारवो
मननावच्यमानाः ॥ देवद्रीचींनयथदेवयंतः ॥ दक्षिणावाड्वाजिनीप्राच्येति ॥ हविर्भिरंत्यग्नयेघृताचीं ॥ सकृत्तेअग्नेनमः ॥
द्विस्तेनमः । त्रिस्तेनमः । चतुस्तेनमः । पंचकृत्वस्ते० । शतकृत्वस्ते० । आसहस्रकृत्वस्तेन० । अपरिमितकृत्वस्तेनमः ॥
नमस्तेअस्तुमामहिꣳसीः । नमस्तेगार्हपत्यायनमस्तेदक्षिणाग्नये ॥ नमआहवनीयायमहावेद्यैनमोनमः ॥ कांडद्वयोपपाद्या
यकर्मब्रह्मस्वरूपिणे ॥ स्वर्गापवर्गरूपाययज्ञेशायनमोनमः॥ यज्ञेशाच्युतगोविंदमाधवानंतकेशव ॥ कृष्णविष्णोहृषीकेशवासुदे
वनमोस्तुते ॥ स्वस्तिश्रद्धां० ॥ उपविश्य ॥ होमसाद्गुण्यार्थंअनाज्ञातत्रयंयथाशक्तिगायत्रीजपंकरिष्ये ॥ गायत्रीजपंकुर्यात् ॥
बृहत्सामेतिविभूतिंधृत्वा ॥ गोत्रप्रवरमुच्चार्य ॥ यस्यस्मृत्या० अनेनसायमौपासनाख्येनकर्मणाभगवान्यज्ञरूपीपरमेश्वरः
प्रीयतांनमम ॥ एवंप्रातरौपासनं ॥ सूर्यायस्वाहेतिविशेषः ॥ स्विष्टकृत्समानं ॥ ॥ इतिऔपासनं ॥

॥ ९९ ॥ आशीर्मंत्राः ॥ हरिः ॐ॥ अहुस्तस्मिन्नैंद्रवायुवोगृह्यतेतस्मादैंद्रवायवस्यायतनेसप्तनेहंन्‌छुक्रोगृह्यतआग्रयण
स्युवाएतद्‌ायतनंनंयत्षष्ठमहुस्तस्मिंच्छुक्रोगृह्यतेतस्माच्छुक्रस्यायतनेऽष्टमेहंन्नाग्रयणोगृह्यतेछंदांꣳस्येवतद्विवाहयतिप्रवस्यंसो
विवाहमाप्नोतियएवंवेदाथोदेवताभ्यएवयज्ञेसंविदंदधातितस्मादिदमन्योन्यस्मैददाति ॥ अनयोःदंपत्योःअग्निहोत्रसिद्धि
रस्तु ॥ अनयोःदंपत्योःअविच्छिन्नाप्रीतिरस्तु ॥ अनयोःदंपत्योःआचंद्रार्कवंशाभिवृद्धिरस्तु ॥ अनयोःदंपत्योःअग्निहोत्रप्रसा
दात्‌धनकनकसमृद्धिरस्तु ॥ इत्याशीर्मंत्राः ॥ आग्नेयस्थालीपाकादूर्ध्वंत्रिरात्रमुभयोरधःशय्याब्रह्मचर्यक्षारलवणवर्जनमे
कशय्यासनेशय्यायांतयोरंतरेणन्यग्रोधऔदुंबरअश्वत्थप्लक्षंवादंडंगंधलिप्तꣳसूत्रेणवाससापरिवीतंनिधाय ॥ ॥
इतिविवाहदिनकृत्यं ॥ ॥ ॥ ॥ ॥

॥ १०० ॥ शेषहोमः ॥ तंचतुर्थ्यामपररात्रे ॥ उदीर्ष्वातइतिद्वाभ्यांदंडमुत्थाप्य ॥ प्रक्षाल्यशयनादन्यत्रनिधाय ॥
ॐ उदीर्ष्वातोविश्वावसोनमसेडामहेत्वा ॥ अन्यामिच्छप्रफर्व्यꣳसंजायांपत्यासृज ॥ उदीर्ष्वातःपतिवतीह्येषाविश्वावसुर्नम
सागीर्भिरीट्टे ॥ अन्यामिच्छपितृषदंव्यक्ताꣳसतेभागोजनुषातस्यविद्धि ॥ स्वदक्षिणतःपत्नीमुपवेश्य ॥ आचम्यप्राणानायम्यदे
शकालौसंकीर्त्य ॥ अनयानवोढयावध्वासहआयुष्याभिवृध्यर्थंविवाहशेषहोमंकरिष्ये ॥ तदंगंगणपतिस्मरणंक० ॥ कुर्यात्‌ ॥
अग्नींधनाद्याज्यभागांतंकृत्वा ॥ स्रुच्याज्यचतुर्गृहीतं ॥ अग्नेप्रायश्चित्तमितिप्रतिमंत्रꣳसप्ताज्याहुतीर्हुत्वा ॥ ॐ अग्नेप्राय
श्चित्तेत्वंदेवानांप्रायश्चित्तिरसिब्राह्मणस्त्वानाथकामःप्रपद्येयास्यांपतिघ्नीतनूःप्रजाघ्नीपशुघ्नीलक्ष्म्यघ्नीजारघ्नीमस्यैतांकृणोमि
स्वाहा ॥ अग्नेप्रायश्चित्तेदं० ॥१॥ ॐ वायोप्रायश्चित्तेत्वंदेवानांप्रायश्चित्तिरसिब्रा० णोमिस्वाहा ॥ वायवेप्रायश्चित्तेदं० ॥२॥

ॐ आदित्यप्रायश्चित्तेत्वंदेवानांप्रायश्चित्तिरसिब्रा० मिस्वाहा ॥ आदित्यायप्रायश्चित्तेदं० ॥ ३ ॥ ॐ प्रजापतेप्रायश्चित्ते त्वंदे० मिस्वाहा ॥ प्रजापतेप्रायश्चित्तेदं० ॥ ४ ॥ ॐ प्रसवश्चोपयामश्चकाटश्चार्णवश्चधर्णसिश्चद्रविणंचभगश्चांतरिक्षंचसिंधुश्चसमुद्रश्चसरस्वाꣳश्चविश्वव्यंचाश्चतेयंद्विष्मोयश्चनोद्वेष्टितमेषांजंभेदध्मःस्वाहा ॥ प्रस्वादिभ्योदेवताभ्यइदं० ॥ ५ ॥ ॐ मधुश्चमाधवश्चशुक्रश्चशुचिश्चनभश्चनभस्यश्चेषश्चोर्जश्चसहश्चसहस्यश्चतपश्चतपस्यश्चतेयंद्विष्मोयश्चनोद्वेष्टितमेषांजंभेदध्मः स्वाहा ॥ मध्वादिभ्योदेवताभ्यइदं० ॥६॥ ॐ चित्तंचचित्तिश्चाकूतंचाकूतिश्चाधीतंचाधीतिश्चविज्ञातंचविज्ञानंचनामश्चक्रतुश्चदर्शश्चपूर्णमासश्चतेयंद्विष्मोयश्चनोद्वेष्टितमेषांजंभेदध्मःस्वाहा ॥ चित्तादिभ्योदेवताभ्यइदं० ॥७॥ जयादिसमस्तराष्ट्रभृत् ब्रह्मविसर्जनांते ॥ अपरेणाग्निंप्राङ्मुखींपत्नीमुपवेश्य ॥ स्वयंप्रत्यङ्मुखस्तिष्ठन्होमावशेषमाज्यस्थालीहस्तेनादाय ॥ तस्याःशिरसिललाटेवाभूस्वाहेतिचतुर्भिःसकृदाज्यंनिनयति॥ ॐ भूस्वाहाभुवःस्वाहासुवस्वाहोꣳस्वाहा॥ आसनेउपविश्यअपश्यंत्वेति वधूर्वरमीक्षते॥ ॐ अपश्यंत्वामनसाचेकितानंतपसोजातंतपसोविभूतं॥ इहप्रजामिहरयिꣳरराणःप्रजायस्वप्रजयापुत्रकामे॥ अपश्यंत्वेतिवरोवधूंसमीक्षते ॥ वधूमुत्तरतउपविश्य ॥ ॐ अपश्यंत्वामनसादीध्यानाꣳस्वायांतनूऽऋत्वियेनाधमाना ॥ उपमामुच्चायुवतिर्भूयाःप्रजायस्वप्रजयापुत्रकामे ॥ समंजंत्वित्याज्यशेषेणांगुष्ठानामिकाभ्यांवध्वास्वस्यहृदयदेशौयुगपत्संमृज्य ॥ ॐ समंजंतुविश्वेदेवाःसमापोहृदयानिनौ ॥ संमातरिश्वासंधातासमुदेष्ट्रीदिदेष्टिनौ ॥ प्रजापतेतन्वंमइतितिस्रोजपित्वा ॥ ॐ प्रजापतेतन्वंमेजुषस्वत्वष्टुर्देवेभिःसहमानइंद्र ॥ विश्वैर्देवैररातिभिःसꣳरराणपुꣳसंबहुनांमातरःस्याम ॥ आनःप्रजांजनयतुप्रजापतिराजरसायसमनक्त्वर्यमा ॥ अदुर्मंगलीःपतिलोकमाविशशन्नोभवद्विपदेशंचतुष्पदे ॥ तांपूषंछिवतमामे

रंयस्वयस्यांबीजंमनुष्यांवपंति ॥ यानंऊरूउंशतीविश्रयांतेयस्यांमुशंतंःप्रहरांमश्येपं ॥ बृहत्सामेतिमंत्रेणभस्मधारणं ॥ यस्य स्मृत्येति० । अनेनचतुर्थशेषहोमाख्येनकर्मणाभगवान्परमेश्वरःप्रीयतां ॥ ॥ इतिचतुर्थहोमः ॥ ॥ ॥ ॥

॥ १०१ ॥ अग्निसमारोपणं ॥ आचम्यप्राणा० ॥ अनयानवोढयावध्वासहआयुष्याभिवृद्ध्यर्थंगृह्याग्निसाध्यानांकर्मणा तंत्रानुष्ठानफलसिद्ध्यर्थंअग्न्यात्मारोपणंकरिष्ये ॥ ॐयातेंअग्नेयज्ञियांतनूस्तयेह्यारोंहात्मात्मानमछावेसूंनिकृण्वन्नस्मेनयींपुरूणिं ॥ यज्ञोभूत्वायज्ञमासींदस्वांयोनिंजातंवेदोभुवआजायंमानःसक्षंयएहिं ॥ इतिमंत्रेणआत्मानमग्निंसमारोपयेत् ॥ वासमित् समारोपणंकार्यं ॥ इतिअग्निसमारोपणं ॥ आरोहोरुमित्यनुवाकं ॥ विष्णुर्योनिंकल्पयतु० समर्धय ॥ ॥ इतिजपित्वा ॥

॥ १०२ ॥ ऐरिणीपूजनंदानंच ॥ विवाहचतुर्थदिनेरात्रौभद्रादिसंभवेदिनएववाशिष्टाचारप्राप्तंवरमात्रेकन्यादात्रावंशपात्रदानंकार्यं ॥ सवस्त्रफलतांबूलंदंपत्योर्वंशवर्धनं ॥ ऐरिण्याख्यंवंशपात्रंपक्वान्नैःपरिपूरितं ॥ १ ॥ करकैरुद्रसंख्याकैः सुवर्णपरिपूरितैः ॥ एतावदैरिणीरूपंकर्तव्यंकिलसूरिभिः ॥ एवंसंपाद्यकन्यादाता ॥ आचम्यप्राणानायम्यदे० ॥ मयाकृतस्यकन्याविवाहस्यसांगतायैतत्संपूर्णफलावाप्तयेवरस्यतत्पितृमात्रादीनांतत्पक्षीयाणांचयथाविभवंवस्त्रादिभिःपूजनमहंकरिष्ये ॥ वरस्यपितृमातृभ्रात्रादिभ्यःपट्टपट्टीदुकूलादिदत्वा ॥ पुनराचम्यप्रा० मयाकृतस्यकन्याविवाहस्यसां० द्वाराश्रीउमामहेश्वरप्रीत्यर्थं ऐरिणीपूजनंवरमात्रेऐरिणीदानंचकरिष्ये ॥ ऐरिणीत्वमुमादेवीमहेशोगिरिजापतिः ॥ अतस्त्वांपूजयिष्यामिऐरिणींसर्वकामदां ॥ सवस्त्रांचसदीपांचशूर्पैःषोडशभिर्युतां ॥ वरमात्रेप्रदास्यामिकन्यादानस्यसिद्धये ॥ २ ॥ महावंशपात्रेउमामहेश्वरौषोडशोपचारैःसंपूज्य वंशपात्रंवरमात्रेदत्वामंत्रान्पठेत् ॥ वंशोवंशकरःश्रेष्ठोवंशोवंशसमुद्भवः ॥ अनेन

वंशदानेनतुष्टऋद्धिंकरोतुमे ॥ १ ॥ वंशपात्रमिदंपुण्यंवंशजातसमुद्भवं ॥ वंशानामुत्तमंदानमतःशांतिंप्रयच्छमे ॥ २ ॥ वंशपात्राणिसर्वाणिमयासंपादितानिवै ॥ उमाकांतायदत्तानिममगोत्राभिवृद्धये ॥ ३ ॥ वंशवृद्धिकरंदानंसौभाग्यादिसमन्वितं ॥ वस्त्रेणाच्छादितंपूगफलहेमसमन्वितं ॥ ४ ॥ सर्वपापक्षयकरंनानाद्रव्यैस्तुपूरितं ॥ दानानामुत्तमंदानमतःशांतिंप्रयच्छमे ॥ ५ ॥ अष्टवर्षात्वियंकन्यापुत्रवत्पालितामया ॥ इदानींतवपुत्रायदत्तास्नेहेनपाल्यतां ॥ इतिमंत्रेणकन्यादक्षिणशिरसामुदकपादौधृत्वा ॥ वरपितृमातृरुत्संगेदत्वापृथक्तौप्रार्थयेत् ॥ अष्टवर्षा० तां ॥ वरमात्रावधूमात्रादितत्पक्षसुवासिनीभ्यःसकंचुकक्षुद्रवंशशूर्पयुतवायनदानादितत्पक्षसुवासिनीभ्यःसकंचुकवध्वाकारणीयमित्याद्याचारप्राप्तंयथाचारंज्ञेयं॥ इदमैरिणीपूजनादिवधूपितृभ्यामभुक्तवद्भ्यांकृत्वाभोजनंकार्यं ॥ ॥ इत्यैरिणीदानं ॥ ॥ ॥

॥ १०३ ॥ देवकोत्थापनं ॥ समेचदिवसेकुर्याद्देवकोत्थापनंबुधः ॥ षष्ठंचदिवसंनेष्टमुक्त्वापंचमसप्तमौ ॥ उक्तकालेमंडपांतःसपत्नीकःस्वासनेउपविश्य ॥ आचम्यप्राणा० देश० ॥ विवाहांगत्वेनस्थापितदेवतामुत्थापनंमंडपोद्वासनंपुण्याहवाचनंचकरिष्ये ॥ पूर्ववत्देवकोत्थापनमंडपोद्वासनंकंकणमोचनंचकुर्यात् ॥ आचार्यपूजांविधाय ॥ ॥ इतिदेवकोत्थापनं ॥

॥ १०४ ॥ लक्ष्मीपूजनं ॥ वध्वासहवरःशुभ्रवस्त्रादीन्संप्रधार्यअश्वयानादीन्मारुह्य श्वशुरगृहात्स्वगृहंमंगलवाद्यघोषपूर्वकं कनिक्रददितिब्राह्मणमंत्रघोषपुरःसरंप्रविश्य॥ लक्ष्मीपूजनंनामप्रतिष्ठांच ॥ तद्यथा । आचम्यप्राणानायम्यदेश० अनयानवोढयावध्वासहआयुष्याभिवृध्यर्थंगृहप्रवेशांगंलक्ष्मीपूजनंतथाचममपत्न्याःनामप्रतिष्ठांचकरिष्ये ॥ तत्रादौनिर्विघ्नतासिध्यर्थंगणपतिपूजनंपुण्याहवाचनंचकरिष्ये ॥ कुर्यात् ॥ तंदुलराशेःलक्ष्मींकृत्वा ॥ अक्षस्रक्पर० ऋयां ॥ इतिध्यानं ।

आवाहनादिषोडशोपचारैःसंपूज्य ॥ पात्रेतंडुलानादायतत्रनामानिलिखित्वा ॥ श्रीगणेशायनमः ॥ कुलदेवतानाम ॥ बृहस्पतीचंद्रानुकूलप्रतिष्ठानामचलिखित्वा ॥ तत्रपंचोपचारैःसंपूज्य ॥ यजमानःममपत्न्याःअमुकनामसुप्रतिष्ठितमस्त्वितिभवंतोब्रुवंतुइतित्रिः ॥ इतिशिरसिअक्षतान्क्षिपेत् ॥ कृतस्य० भूयसींदद्यात् ॥ ॥ इतिलक्ष्मीपूजनं ॥ ॥ ॥

## ॥ १०५ ॥ द्विभार्याग्निद्वयसंसर्गविधिः ॥

श्रीः ॥ यस्यलौकिकाग्नौद्वितीयविवाहःस्यात्तत्द्वितीयविवाहप्रभृत्युभावग्निंधारयेत् ॥ ततस्तौविधिवत्संयोजयेत् ॥ अथैकादश्यांद्वादश्यांवातिथावुभावग्नीपूर्ववत्पृथक्स्थापयित्वा ॥ आचम्यप्राणानायम्यदेशकालौसंकीर्त्य० ॥ पत्नीभ्यांसहितःसन्गृह्याग्निसाध्यानांकर्मणांतंत्रानुष्ठानफलसिध्यर्थंऔपासनाग्निद्वयसंसर्गंकरिष्ये ॥ तत्रादौनिर्विघ्नतासिद्ध्यर्थंगणपतिपूजनंपुण्याहवाचनंमा० नां० करिष्ये ॥ कुर्यात् ॥ द्वितीयाग्नौचतुष्पात्रप्रयोगाद्याज्यसंस्कारांते ॥ द्वितीयायांपत्न्यामन्वारब्धायांचतुर्गृहीतमाज्यंगृहीत्वाजुहुयात् ॥ ॐ नमस्तर्षेगद ॥ अव्यंधायैत्वास्वधायैत्वा ॥ मानइंद्राभितस्त्वद्दृश्नारिष्टासः ॥ एवाब्रह्मंतवेदस्तुस्वाहा ॥ ब्रह्मणइदं० ॥ अयंतेयोनिर्ऋत्वियइतितमग्निंसमिधमारोप्यतांसमिधंआजुह्वानउद्बुध्यस्वाग्नेइतिद्वाभ्यांमंत्राभ्यापूर्वस्याग्नावाधाय ॥ ॐ अयंतेयोनिं० ॥ ॐ उद्बुध्यस्वाग्ने० ॥ तस्मिन्नग्नौषट्पात्रप्रयोगाद्याज्यसंस्कारांतेपत्नीभ्यामन्वारब्धःप्रत्येकंचतुर्गृहीतमाज्यं ॥ ॐ योब्रह्माब्रह्मणउज्जभारप्राणेश्वरःकृत्तिवासाःपिनाकी ॥ ईशानोदेवःसनआयुर्दधातुतस्मैजुहोमिहविषाघृतेनस्वाहा ॥ ब्रह्मणेप्राणेश्वरायकृत्तिवाससेपिनाकिनेईशानायदेवायेदं० ॥ १ ॥ ॐ विभ्राजमानःसरिरस्यमध्याद्रोचमानोघर्मरुचिर्यआगात् ॥ समृत्युपाशानपनुद्यघोरानिहायुषेवर्धयामोघृतेनस्वाहा ॥ घर्मरुचयेईशानायदेवा

येदं० ॥ २ ॥ ॐ ब्रह्मज्योतिर्ब्रह्मपत्नीषुगर्भंयमोददात्पुरुरूपंजयंतं ॥ सुवर्णरंभंग्रहमर्कमर्च्यंतमायुषेवर्धयामोघृतेनस्वाहा ॥ पुरुरूपायजयंतायसुवर्णरंभग्रहार्कायेदं० ॥ ३ ॥ ॐ श्रियंलक्ष्मीमौपलामंबिकांगांषष्ठींजयामिंद्रसेनेत्युदाहुः ॥ तांविद्यांब्रह्मयोनिंसरूपामिहायुषेतर्पयामोघृतेनस्वाहा ॥ श्रियैलक्ष्म्यैऔपलायैअंबिकायैषष्ठ्यैइंद्रसेनायैब्रह्मयोन्यैसद्रूपायेदं० ॥ ४ ॥ ॐ दाक्षायण्यःसर्वयोन्यःसुयोन्यःसहस्रशोविश्वरूपाविरूपाः ॥ ससूनवःसपतयःसयूथ्याआयुषेनोघृतमिदंजुषंताꣳस्वाहा ॥ दाक्षायणीभ्यःसर्वयोनिभ्यःसुयोनिभ्यःविश्वरूपाभ्योविरूपेभ्यःससूनुभ्यःसपतिभ्यःसयूथ्याभ्यइदं० ॥ ५ ॥ ॐ दिव्यांगनाबहुरूपाःपुराणाआयुश्छिदोनःप्रमथंतुवीरान् ॥ तेभ्योजुहोमिबहुधाघृतेनमानःप्रजाꣳरीरिषोमोतवीरान्स्वाहा ॥ दिव्येभ्योगणेभ्योबहुरूपेभ्यःपुराणेभ्यइदं० ॥ ६ ॥ ॐ एकःपुरस्ताद्यइदंबभूवयतोबभूवभुवनस्यगोपाः ॥ यमप्येतिभुवनꣳसांपरायेसनोहविर्घृतमिहायुषेतुदेवःस्वाहा ॥ भुवनस्यगोप्त्रेईशानायदेवायेदं० ॥ ७ ॥ ॐ वसून्रुद्रान्आदित्यान्मरुतोथसाध्यान् ॥ ऋभून्गंधर्वान्पितॄन्यक्षांश्चविश्वान्भृगून्त्सर्पांश्चांगिरसोथसर्वान्घृतंहुत्वास्वायुष्यामहयामशश्वत्स्वाहा ॥ वसुभ्योरुद्रेभ्यआदित्येभ्योमरुद्भ्यःसाध्येभ्योऋभुभ्योयक्षेभ्योगंधर्वेभ्यःपितृभ्योविश्वेभ्योभृगुभ्यःसर्पेभ्योंगिरोभ्यःसर्वेभ्यइदं० ॥ ८ ॥ ॐ यन्मआत्मनोमिंदाभूदग्निस्तत्पुनराहार्जातवेदाविचर्षणिःस्वाहा ॥ अग्नयेजातवेदसेविचर्षणइदं० ॥ ९ ॥ ॐ पुनरग्निश्चक्षुरदात्पुनरिंद्रोबृहस्पतिः ॥ पुनर्मेअश्विनायुवंचक्षुराधत्तमक्ष्योस्वाहा ॥ अग्नींद्राबृहस्पत्यश्विभ्यइदं० ॥ ॐ भूर्भुवःसुवःस्वाहा ॥ प्रजापतयइदं० ॥ उत्तरपरिषेचनादिकर्मशेषंसमाप्य ॥ ततःचरुꣳश्रपयित्वा ॥ अग्नींधनादिषट्पात्रप्रयोगाद्याज्यभागांते ॥ स्रुच्युपस्तीर्यचरुमध्याद्द्विरवदायसकृदभिघार्य ॥ ॐ समित्तꣳसंकल्पेथाꣳसंप्रियौरोचिष्णूसुमनस्यमानौ ॥ इषमूर्ज

मभिसंवसानौसंवांमनांꣳसिसंव्रतासमुचित्तान्याकरं ॥ इतिपुरोनुवाक्यामंत्रमुच्चार्य ॥ ॐ अग्नेपुरीष्याधियाभरात्वन्नः ॥
इषमूर्जंयजमानायधेहिस्वाहा ॥ इतियाज्ययाजुहुयात् ॥ अग्नयेपुरीष्यायेदं० ॥ पुनःस्रुच्युपस्तीर्यस्विष्टकृतमवदायअग्नेःप
श्चाद्दर्भेषुनिधाय ॥ स्रुवेणाज्यंगृहीत्वा ॥ ॐ पुरीष्यस्त्वमग्नेरयिमान्पुष्टिमाꣳअसि ॥ शिवाःकृत्वादिशःसर्वाःस्वांयोनिमि
हासदत्स्वाहा ॥ अग्नयेपुरीष्यायेदं० ॥ ॐ भवतंनःसमनसौसमोकसावरेपसौ ॥ मायज्ञꣳहिꣳसिष्टंमायज्ञपतिंजातवेदसौ
शिवौभवतमद्यनःस्वाहा ॥ अग्निभ्यांजातवेदोभ्यामिदं० ॥ ॐ मातेवपुत्रंपृथिवीपुरीष्यमग्निꣳस्वेयोनावभारुखा ॥ तांविश्वै
र्देवैर्ऋतुभिस्संविदानःप्रजापतिर्विश्वकर्माविमुंचतुस्वाहा ॥ प्रजापतेविश्वकर्मणइदं० ॥ ॐ यदस्यपारेरजसःशुक्रंज्योतिर
जायत ॥ तन्नःपर्षदतिद्विषोग्नेवैश्वानरःस्वाहा ॥ अग्नयेवैश्वानरायेदं० ॥ ॐ नमःसुतेनिर्ऋतेविश्वरूपेयस्मयंविचृताबंधमेतं ॥
यमेनत्वंयम्यासंविदानोत्तमंनाकमधिरोहयेमꣳस्वाहा ॥ निर्ऋतयेविश्वरूपायेदं० ॥ ॐ यत्तेदेवीनिर्ऋतिराबबंधदामग्रीवास्वं
विचत्यांइदंतेतद्विष्याम्यायुषोनमध्यादथाजीवःपितुमद्धिप्रमुक्तःस्वाहा ॥ देव्यैनिर्ऋत्याइदं० ॥ ॐ यस्यास्तेअस्याःक्रूरआस
न्जुहोम्येषांबंधानामवसर्जनाय ॥ भूमिरितित्वाजनाविदुर्निर्ऋतिरितित्वाहंपरिवेदविश्वतःस्वाहा ॥ देव्यैनिर्ऋत्याइदं० ॥
ॐ असुन्वंतमयजमानमिच्छस्तेनस्येत्यांतस्करस्यान्वेषि ॥ अन्यमस्मदिच्छसातइत्यानमोदेविनिर्ऋतेतुभ्यमस्तुस्वाहा ॥ देव्यै
निर्ऋत्याइदं० ॥ ॐ देवीमहंनिर्ऋतिंवंदमानःपितेवपुत्रंदयसेवचोभिः ॥ विश्वस्ययाजायमानःस्यवेदशिरःशिरःप्रतिसुरी
विचष्टेस्वाहा ॥ देव्यैनिर्ऋत्यैइ० ॥ ॐ निवेशनःसंगमनोवसूनांविश्वारूपाभिचष्टेशचीभिः ॥ देवइवसवितासत्यधर्मेंद्रोनत
स्थौसमरेपथीनाꣳस्वाहा ॥ देवायसवित्रेइंद्रायेः० ॥ ॐ संवरत्रादधातननिराहावान्कृणोतन ॥ सिंचामहाअवटमुद्रिणंवयं

विश्वाहादस्तमक्षितꣳस्वाहा ॥ अवटायाक्षितायेदं० ॥ ॐ सीरायुंजंतिकवयोयुगावितन्वतेपृथक् ॥ धीरादेवेषुसुम्नयास्वाहा ॥ सीरेभ्यःकविभ्यइदं० ॥ ॐ युनक्तसीरावियुगातनोतकृतेयोनौवपतेहबीजं ॥ गिरांचश्रुष्टिःसभराअसन्नोनेदीयइत्सृण्यापक्वमायस्वाहा ॥ सीरेभ्यःकविभ्यइदं० ॥ ॐ लांगलंपवीरꣳसुशेवꣳसुमतित्सरु ॥ उदित्कृषतिगामविंप्रफर्व्यंचपीवरीं ॥ प्रस्थावद्रथवाहनꣳस्वाहा ॥ लांगलायेदं० ॥ ॐ शुनंनःफालावितुदंतुभूमिꣳशुनंकीनाशाअभियंतुवाहान् ॥ शुनंपर्जन्योमधुनापयोभिःशुनासीराशुनमस्मासुधत्तꣳस्वाहा ॥ फालेभ्यःकीनाशेभ्यःपर्जन्यायशुनासीराभ्यामिदं० ॥ ॐ कामंकामदुघेधुक्ष्वमित्रायवरुणायच ॥ इंद्रायाग्नयेपूष्णओषधीभ्यःप्रजाभ्यःस्वाहा ॥ मित्रायवरुणायेंद्रायाग्नयेपूष्णेओषधीभ्यःप्रजाभ्यइदं० ॥ ॐ घृतेनसीतामधुनासमक्ताविश्वैर्देवैरनुमतामरुद्भिः ॥ ऊर्जस्वतीपयसापिन्वमानास्मान्सीतेपयसाभ्याववृत्स्वस्वाहा ॥ ऊर्जस्वत्यैभूम्यैइदं० ॥ इतिस्रुवेणाज्याहुतीर्हुत्वा ॥ पूर्ववत्तेनचरुणा ॐ अग्नयेस्विष्टकृतेस्वाहा ॥ अग्नयेस्विष्टकृतइ० ॥ जयादिसमस्तराष्ट्रभृदादिब्रह्मविसर्जनांते ॥ अग्निपूजनादिकर्मशेषंसमाप्य ॥ यस्यस्मृ० प्रीयतां ॥ ॥ इतिद्विभार्याग्निद्वयसंसर्गविधिः ॥ ॥ ॥ ॥ ॥

## ॥ १०६ ॥ अर्कविवाहः ॥

श्रीः ॥ भानुशनिवासरेहस्तनक्षत्रेवाब्राह्मणैःसहवरोर्कसमीपेगत्वा ॥ कर्ताआचम्यप्राणानायम्यदेशकालौसंकीर्त्य ॥ ममतृतीयमानुषीविवाहजनितदोषपरिहारार्थंतृतीयमानुषीविवाहसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंस्वस्यतृतीयअर्कविवाहंकरिष्ये ॥ तत्रादौनिर्विघ्नतासिध्यर्थंग० पु० मा० ना० आचार्यवरणंचक० ॥ उक्तरीत्याकुर्यात् ॥ आचार्यःप्रादेशांतंकुर्यात् ॥ अर्क

वृक्षसन्निधमागत्यतंसंस्नाप्यवाससासंवेष्ट्यगंधादिभिर्भूषयित्वा ॥ तत्रवृक्षेषुआसत्येनेतिमंत्रेणसूर्यमावाह्यषोडशोपचारैःसं
पूज्यगुडोदनंनैवेद्यंचदत्वावस्त्रेणाच्छाद्यसूत्रेणावेष्ट्यप्रार्थयेत् ॥ त्रिलोकवासिन्सप्ताश्वछाययासहितोरवे ॥ तृतीयोद्वाहजं
दोषंनिवारयसुखंकुरु ॥ जलेनत्रिवारंअर्कंप्रदक्षिणीकृत्यपुनःअर्कंप्रार्थयेत् ॥ ममप्रीतिकरायेयंमयासृष्टापुरातनी ॥ अर्कजा
ब्रह्मणासृष्टाअस्माकंप्रतिरक्षतु ॥ नमस्तेमंगलेदेविनमःसवितुरात्मजे ॥ त्राहिमांकृपयादेविपत्नीत्वंमइहागता ॥ अर्कत्वंब्रह्म
णासृष्टःसर्वप्राणिहितायच ॥ वृक्षाणामादिभूतस्त्वंदेवीनांप्रीतिवर्धनः ॥ तृतीयोद्वाहजंपापंमृत्युंचाशुविनाशय ॥ आयुर्देहि
यशोदेहिप्रजांदेहिपशूनपि ॥ देहिमेर्कश्रियंपुष्टिंस्वस्थानेर्कस्थिरोभव ॥ इतिप्रार्थयेत् ॥ वाग्दानं ॥ अर्कस्यपूजनंकुर्यात् ॥
पंचोपचारैःसंपूज्य ॥ वरगोत्रमुच्चार्य ॥ अमुकप्रवरान्वितअमुकगोत्रोत्पन्नाय० अमुकशर्मणःप्रपौत्रायपौत्रायपुत्रायअमुक
शर्मणेवराय ॥ अर्कगोत्रं ॥ काश्यपगोत्रोत्पन्नांआदित्यस्यप्रपौत्रींसवितुःपौत्रींममामुकशर्मणःपुत्रींअर्कनाम्नींकन्यांअमुकना
म्नेवरायदास्ये ॥ इतिवाग्दानं ॥ ततःआचार्यःमधुपर्कंकुर्यात् ॥ उदगग्रंकूर्चंनिदधाति ॥ राष्ट्रभृदसीतियजुषोपविशत्या
दिमधुपर्केणवरमभ्यर्च्य ॥ सुमुहूर्तेअंतःपटंधृत्वामंगलाष्टकादिपठित्वा ॥ अर्कंनिरीक्ष्य ॥ ॐ स्वस्तिनइंद्रो० अष्टौदेवा
इतिमंत्रंपठन् ॥ कन्यादानं ॥ अर्कआचार्यः ॥ वरगोत्रोच्चार्य ॥ अमुकप्रवरान्वितअमुकशर्मणःप्रपौत्रायअमुकशर्मणः
पौत्रायअमुकशर्मणःपुत्रायअमुकशर्मणेवराय ॥ काश्यपगोत्रोत्पन्नांआदित्यस्यप्रपौत्रींसवितुःपौत्रींअर्कस्यपुत्रींइमांअर्ककन्यां
अमुकगोत्रोत्पन्नायअमुकशर्मणेवरायतुभ्यमहंसंप्रददेइतिदद्यात् । वरहस्तेजलंक्षिपेत्मंत्रान्पठेत् ॥ अर्ककन्यामिमांविप्रयथा
शक्तिविभूषितां ॥ गोत्रायशर्मणेतुभ्यंदत्तांविप्रसमाश्रय ॥ इति ॥ वरः ॐ स्वस्तीत्युक्त्वा ॥ देवस्यत्वा० प्रतिगृह्णामि ॥ राजा

त्वावरुणोनयतुदेविदक्षिणे ॥ प्रजापतयेकन्यां ॥ तेनामृतत्वमश्यां ॥ वयोदात्रे ॥ मयोमह्यमस्तुप्रतिग्रहीत्रे ॥ कइदंक
स्माअ० उत्तानस्त्वांगीरसःप्रतिगृण्हातु ॥ अर्ककन्यांप्रतिगृह्य ॥ कृतस्य० इमांदक्षिणांतुभ्यमहंसंप्रददेनममइतिहिरण्यं
दद्यात् ॥ इतिकन्यादानं ॥ उभौबृहत्सामेतिविश्वेत्तातेतिकंकणंबध्नीयात् ॥ अंजल्यक्षतारोपणंकार्यं ॥ नीराजनंकार्यं ॥
अर्कायथाविभवंमंगलसूत्रादिभूषणैर्भूषयेत् ॥ ततःअर्कस्यप्रागादिदिक्षुमहीद्यौरित्यादिविधिनाअष्टौकलशान्संस्थाप्य ॥
तत्रप्रतिकुंभेइदंविष्णुरितिविष्णुंसंस्थाप्यसंपूज्य ॥ अर्कोत्तरतःयत्राग्निस्थाप्यतेतिसमंपूर्वेणयथोपदेशांतंकृत्वा ॥ अन्वा
धानं ॥ बृहस्पतिं । अग्निं । अग्निं । वायुं । सूर्यं । प्रजापतिंचाज्येनएकैकाहुतिपर्याप्तंबृहस्पत्यादिषट्देवताभ्योनमम ॥
प्रधानहोमंकुर्यात् ॥ ॐ संगोभिरांगिरसोनक्षमाणोभगइवेदर्यमणंनिनाय ॥ जनेमित्रोनदंपतीअनक्तिबृहस्पतेवाजयाशूँरिं
वाजौस्वाहा ॥ बृहस्पतयइ० ॥ ॐ यस्मैत्वाकामकामायवयꣳसम्राज्यंजामहे ॥ तमस्मभ्यंकामंदत्वाथेदंत्वंघृतंपिबस्वाहा ॥
अग्नयइदं० ॥ ॐ भूःस्वाहाअग्नयइदं० ॥ ॐ भुवःस्वाहा । वायवइदं ॥ ॐ सुवःस्वाहा । सूर्यायेदं० ॥ ॐ भूर्भुवःसुवः
स्वाहा । प्रजापतयइ० ॥ हव्यवाहेतिस्विष्टकृतंजुहोति ॥ समित्संनहनंजयादिब्रह्मविसर्जनांतंकृत्वा ॥ आचार्यंसंपूज्यगो
युग्मंदक्षिणांचदत्वा ॥ अर्कंत्रिःप्रदक्षिणीकृत्य ॥ ममप्रीतिकरा० स्थिरोभव ॥ प्रार्थयेत् ॥ मयाकृतमिदंकर्मस्थावरेषुजरा
युणा ॥ अर्कापत्यानिनोदेहितत्सर्वंक्षंतुमर्हसि ॥ शन्नोवातइतिशांतिपाठंपठित्वा ॥ स्थापितकुंभस्थाभिरद्भिःसार्कंप्रतिग्रही
तारमभिषिंचेत् ॥ अन्यवस्त्रंधारयेत् ॥ त्यक्तानिवासांसिआचार्यायदद्यात् ॥ पंचमेदिवसेसद्योवापुनःअर्कंसंपूज्य ॥

विसृज्य । अग्निपूजनादिकर्मशेषंसमाप्य ॥ ब्राह्मणान्भोजयित्वाशिषोवाचयित्वा ॥ अर्कभूषणवस्त्रकलशानेआचार्याय दत्वा ॥ यस्यस्मृ० अनेनअर्कविवाहाख्येनकर्मणाभगवान्परमेश्वरःप्रीयतां ॥ ॥ इत्यर्कविवाहः ॥ ॥ ॥

## ॥ १०७ ॥ दत्तपुत्रविधानं ॥

श्रीः ॥ अथातोदत्तहोमविधिंव्याख्यास्यामोराज्ञांनिवेद्यआप्तबंधूनांचगृहेसंपूज्यतान्ज्ञापयित्वाकिमितिविष्णुनामधेयमिमं कुमारंअमुष्मैअमुकशर्मणेदास्यामीतितान्सम्यग्विज्ञाप्य ॥ ततोदाताज्योतिर्विदुक्तेशुभेमुहूर्तेमातापितरौकुमारेणसहमंगल स्नातौभूत्वा ॥ आचम्यप्रा० देशकालौसं० ॥ ममाप्रजत्वप्रयुक्तपैतृकऋणापाकरणपुन्नामनरकत्राणद्वाराश्रीमहाविष्णुप्रीत्य र्थंपुत्रप्रतिग्रहविधिंकरिष्ये ॥ तत्रादौनिर्विघ्नतासिद्ध्यर्थंगणपतिपूजनंस्वस्तिपु० मा० नां० आचार्यवरणंचकरिष्ये ॥ उक्तरी त्याकुर्यात् ॥ ततोदाताआचम्यप्राणानायम्यदेशकालौसं० ॥ महाविष्णुस्वरूपिणेब्राह्मणायपुत्रदानमहंकरिष्ये ॥ तदंगग णपतिपूजनंक० ॥ गणपतिंसंपूज्यकर्मणःपुण्याहंवाचयित्वा ॥ प्रतिगृहीतारंयथाचंदनादिनासंपूज्य ॥ विष्णुरेवगृहीता स्याद्विष्णुरेवप्रतिग्रहः ॥ विष्णुरेवप्रदास्यामिविष्णुप्रीत्यर्थमेवहि ॥ ममबीजसमुत्पन्नंसर्वालंकारसंयुतं ॥ एहिकाम्यार्थसि द्ध्यर्थंतुभ्यंदत्तोमयासुतः ॥ इंद्राग्नीयमनैर्ऋत्यवरुणःपवनोविदुः ॥ ईशानब्रह्मविष्णुश्चसाक्षिण्योभास्करादयः ॥ इमंकुमारं दास्यामिब्रह्मसायुज्यकाम्यया ॥ अस्मैश्रीमहाविष्णुस्वरूपिणेब्राह्मणायब्रह्मसारूप्यकामनयाइमंकुमारंप्रजापतिदैवत्यंतुभ्य महंसंप्रददे ॥ प्रतिगृह्यतां ॥ इतिकुमारंहरिद्राक्षतयुतंतदंकेसमर्पयेत् ॥ ॐ देवस्यत्वा० हस्ताभ्यांप्रतिगृह्णामीतिप्रतिगृह्य ॥ दानसाद्गुण्यार्थंयथाशक्तिसुवर्णदक्षिणांअग्निदैवत्यंअमुकशर्मणेतुभ्यमहंसंप्रददे ॥ प्रतिगृह्यतां । प्रतिगृह्णामि ॥ यजमान

ब्राह्मणैःसहशाकुनसूक्तमंगलवाद्यघोषपुरस्सरंगृहंप्रविश्यरंगवल्लीतोरणपताकाभिर्भूषितगृहंप्रविश्य ॥ वस्त्राच्छादितेपीठेस्वद क्षिणतःपत्नीमुपवेश्यतस्याःदक्षिणांकेकुमारमुपवेश्य ॥ आचम्यप्राणानायम्यदेशकालौस्मृत्वा ॥ अस्यप्रतिगृहीतस्यपुत्रस्य दार्ढ्यत्वसिद्ध्यर्थंदत्तपरिग्रहहोमंकरिष्ये ॥ आचार्यः । यत्राग्निस्थाप्यतेतिआज्यभागांतंकृत्वा ॥ चतुर्गृहीतमाज्यं ॥ ॐ प्रात रग्निंप्रातरिंद्रꣳहवामहेप्रातर्मित्रावरुणाप्रातरश्विना॥ प्रातर्भगंपूषणंब्रह्मणस्पतिंप्रातःसोममुतरुद्रꣳहुवेमस्वाहा ॥ भगायेदं० ॥ ॐ प्रातर्जितंभगमुग्रꣳहुवेमवयंपुत्रमदितेर्योविधर्ता ॥ आध्रश्चिद्यंमन्यमानस्तुरश्चिद्राजाचिद्यंभगंभक्षीत्याहस्वाहा ॥ भगा येदं० ॥ ॐ भगप्रणेतर्भगसत्यराधोभगेमांधियमुदवददन्नः ॥ भगप्रणोजनयगोभिरश्वैर्भगप्रनृभिर्नृवंतःस्यामस्वाहा ॥ भगा येदं० ॥ ४ ॥ भगएवभगवाꣳअस्तुदेवास्तेनवयंभगवंतःस्याम ॥ तंत्वाभगसर्वइज्जोहवीमिसनोभगपुरएताभवेहस्वाहा ॥ भगायेदं० ॥ ५ ॥ ॐ समध्वरायोषसोनमंतदधिक्रावेवशुचयेपदाय ॥ अर्वाचीनंवसुविदंभगन्नोरथमिवाश्वावाजिनआवहं तुस्वाहा ॥ भगायेदं० ॥ ६ ॥ ॐ अश्वावतीर्गोमतीर्नउषासोवीरवतीःसदमुच्छंतुभद्राः ॥ घृतंदुहानाविश्वतःप्रपीनायूयंपात स्वस्तिभिःसदानःस्वाहा ॥ भगायेदं० ॥ ७ ॥ इतिसप्ताज्याहुतीर्हुत्वा ॥ समिधमिध्मसन्नहनमितिजयादिब्रह्मविसर्जनांते ॥ ततोयजमानःकुमारमस्मिन्नहमितियजुषादक्षिणांकेउपविश्य ॥ ॐ अस्मिन्नहꣳसहस्रंपुष्यंमेधमानास्वेवशे ॥ अंगादंगादिति द्वाभ्यांकुमारमनुमंत्रयते ॥ ॐ अंगादंगा० । तैरेवमंत्रैःमूर्ध्न्यवघ्रायदक्षिणकर्णेजपति ॥ स्वहस्तेदधिमधुसꣳसृष्टंपृषदाज्यं प्राशयित्वा ॥ अग्निपूजनादिकर्मशेषंसमाप्य ॥ यस्यस्मृत्या० महाविष्णुःप्री० ॥ ब्राह्मणान्भोजयित्वाशिषोवाचयित्वा ॥ आचार्यायगांदत्वा ॥ ॥ इतिदत्तपुत्रप्रतिग्रहविधिः ॥ ॥ ॥ ॥ ॥

## ॥ १०८ ॥ वर्धापनविधिः ॥

श्रीः ॥ अब्दांतेजन्मतिथिकृत्यं ॥ अभ्यंगस्नानंकुर्यात्भद्रासनेउपविश्य ॥ आचम्यप्राणानायम्यदेशकालौसंकीर्त्यममामुक शर्मणःपुत्रस्यआयुष्याभिवृद्ध्यर्थंवर्षवृद्धिकर्मणासंस्करिष्ये ॥ तदंगंगणपतिपू० पु० मा० नां० आ० करिष्ये ॥ उक्तरीत्या कुर्यात् ॥ आचार्यकर्मक० त्यादिप्रादेशांतंकुर्यात् ॥ अद्येत्यादि० वर्षवृद्धिकर्मांगभूतंकुलदेवतादिदेवतास्थापनंपूजनंचक० ॥ यस्ययाकुलदेवतातन्नाममंत्रेणावाहयेत् ॥ १ ॥ स्वनक्षत्रदेवताआवाहयेत् ॥ २ ॥ ॐ भूर्भुवःसुवःअस्मिन्पूगीफलेप्रकृति पुरुषाभ्यांनमः ॥ प्रकृतिपुरुषात्मानौआवाहयामि ॥ ३ ॥ एवंसर्वत्र ॥ प्रजापतयेन० ॥ ४ ॥ भानवेनमः० ॥ ५ ॥ विघ्ने शायन० ॥ ६ ॥ मार्कंडेयाय० ॥ ७ ॥ व्यासाय० ॥ ८ ॥ जामदग्न्यरामायनमः ॥ ९ ॥ अश्वत्थाम्नेनमः ॥ १० ॥ कृपा यनमः ॥ ११ ॥ बलये० ॥ १२ ॥ प्रह्लादायन० ॥ १३ ॥ हनुमतेन० ॥ १४ ॥ ॐ विभीषणायन० ॥ १५ ॥ षष्ठीदे व्यैनमः ॥ १६ ॥ ॐ हौंजूंसः ॐ भूर्भुवःसुवः ॐ त्र्यंबकं० मृतात् ॐ सुवःभुवःभूः ॐ सःजूंहौं ॐ ॥ मृत्युंजयायनमःमृ त्युंजयमावाहयामि ॥ नर्यप्रजांमे० ष्ठितां ॥ षोडशोपचारैःसंपूज्य ॥ षष्ठीदेव्यैदधिभक्तनैवेद्यंदत्वा ॥ नमस्कृत्य ॥ प्रार्थ येत् ॥ मार्कंडेयनमस्तेस्तुसप्तकल्पांतजीवन ॥ आयुरारोग्यसिध्यर्थंप्रसीदभगवन्मुने ॥ चिरंजीवीयथात्वंतुमुनीनांचवर द्विज ॥ कुरुष्वमुनिशार्दूलतथामांचिरजीवनं ॥ मार्कंडेयमहाभागसप्तकल्पांतजीवन ॥ आयुरिष्टार्थसिध्यर्थमस्माकंवरदो भव ॥ षष्ठीदेवींप्रार्थयेत् ॥ जयदेविजगन्मातर्जगदानंदकारिणि ॥ प्रसीदममकल्याणिनमस्तेषष्ठिदेवते ॥ रूपंदेहियशोदे

---

१ पोटलिकांकृत्वाकुलदेवतादक्षिणतःस्थापयित्वा ॥ पोटलिका—गुग्गुळ, निंब, दूर्वा, श्वेतशिरस, गोरोचन, तापत्याचेंवस्त्र ॥

हिभगंभगवतिदेहिमे ॥ पुत्रान्देहिधनंदेहिसर्वान्कामांश्चदेहिमे ॥ त्र्यैलोक्येयानिभूतानिस्थावराणिचराणिच ॥ ब्रह्मविष्णुशिवैःसार्धंरक्षांकुर्वंतुतानिमे ॥ इतिप्रार्थयेत् ॥ अनेनकृतपूजनेनकुलदेवताद्यावाहितदेवताःप्रीयंतां ॥ अद्येत्यादिवर्षवृद्धिकर्मणिप्रधानहोमंकरिष्ये ॥ यत्राग्निस्थाप्यतेतिसमंपूर्वेणयथोपदेशांतंकृत्वा ॥ अन्वाधानं ॥ कुलदेवता, स्वनक्षत्रदेवता, प्रकृतिपुरुषात्मानौपितरौ, प्रजापतिं । भानुं । विघ्नेशं । मार्कंडेयं । व्यासं । जामदग्न्यं रामं । अश्वत्थामानं । कृपं । बलिं । प्रल्हादं । हनूमंतं । विभीषणं । षष्ठीदेवीं । प्रतिमंत्रंअष्टाविंशतिसंख्याभिःघृताक्ततिलाहुतिपर्याप्तंकुलदेवतादिभ्योदेवताभ्योनमम ॥ मृत्युंजयंदधिमध्वाक्तदूर्वाहुतिभिरष्टोत्तरशतसंख्याहुतिभिःपर्याप्तंमृत्युंजयायनमम ॥ प्रधानहोमंकुर्यात् ॥ नाममंत्रेणषोडशदेवताश्चतिलहोमंकृत्वा ॥ मृत्युंजयेतिमंत्रेणषट्प्रणवपूर्वकंदूर्वाहोमंअन्वाधानोक्तंकुर्यात् ॥ स्विष्टकृतादिजयादिब्रह्मविसर्जनंअग्निपूजनादिकर्मशेषंसमाप्य ॥ ततःयजमानःदक्षिणहस्तेपूर्वस्थापितपोटलीबंधनंकृत्वा ॥ स्थापितदेवतानामुत्तरपूजांकृत्वा ॥ सतिलंगुडसंमिश्रमंजल्यर्धमितंपयः ॥ मार्कंडेयाद्वरंलब्धापिबाम्यायुर्विवृद्धये ॥ इतिप्राश्य ॥ नूतनवस्त्रादिधारयेत् ॥ ततःआचार्यादिपूजनंगोदानंऋत्विग्भिःयथाशक्त्यादक्षिणांदत्वा ॥ ब्राह्मणान्भोजयित्वाशिषोवाचयित्वा भूयसींदद्यात् ॥ ॥ इतिवर्धापनविधिः ॥ ॥ ॥ ॥ ॥

इति तैत्तिरीयकर्ममालायां द्वितीयोभागः ॥

इति तैत्तिरीयकर्ममालायांद्वितीयोभागः ॥

आपस्तंबीयब्रह्मकर्म ॥